॥ श्रीः ॥

# कुन्दमाला

## महाकविश्रीदिङ्नागविरचिता

विद्यावाचस्पति—काव्यतीर्थ—एम. ए, एम. ओ. एल, उपाधिधारिणा श्री पंडितवर जयचन्द्रशास्त्रिणा विरचितया संजीवन्याख्या व्याख्यया समुपेता संशोधिता च।

—:०:—

सा चेयं
लवपुरीय-पंजाब संस्कृत पुस्तकालयाध्यक्षैः
**मोतीलाल बनारसीदास**
इत्यैतेः स्वीये "मुम्बई संस्कृत प्रेस" इत्याख्ये मुद्रणालये सम्मुद्रय प्रकाशिता।

संवत् १९८६ सन् १९२९





# प्राक्कथनम् ।

अयि विद्वाः—

गीर्वाणवाण्यामयं लेखनप्रयासश्चिराय लुप्ताभ्यासेनापि मया यदादृतस्तत्र संस्कृतग्रन्थानां प्रत्नानां टीकाटिप्पणादिपुरस्सरं सम्पादने बद्धपरिकराणां मोतीलाल बनारसीदासमहाभागानां प्रोत्साहनमेव निदानम् । दिङ्नागस्य मधुरमधुरपदावलीयुता सरसा रचनापि प्रसभमाकृष्टवती । फलतः कुन्दमालायाः सञ्जीवनीटीकोपेतायाः प्रथमं संस्करणमिदं विद्वांसो निर्मत्सरं विभावयन्तु ।

सन्त्येवास्मिन् संस्करणे स्खलितयो यत्र तत्र विलसन्त्यः काश्चन, परं विज्ञानां पाठकानां तासां सद्भावेऽपि न काचन क्षतिरिति शुद्ध्यशुद्धिपत्रप्रयोगो नाद्रियते ।

मानचित्रं मत्प्रणीतमपि प्रकाशकैरस्मिन् संस्करणे यन्न समावेशितं तत्राधिको धनव्यय एव निमित्तम् । आशासे द्वितीयावृत्तौ भवेदेव तस्यापि समावेशः ।

अलङ्कारादिनिर्देशोऽपि प्रकाशकानां सम्मतो नाभूदिति सोऽपि परित्यक्तः । इति निवेदयति विदुषां वशंवदो—

जयचन्द्रः ।

माडल टाउन
६ वैशाख, १९८६




# ❋ समर्पणम् ❋



श्री १०८ स्वामिपादेभ्य आचार्य श्री शुद्धबोधतीर्थेभ्यः
प्रह्वस्य विनीतस्य च शिष्यस्य मे प्रथमा संस्कृतकृतिः
सादरं सप्रश्रयं सबहुमानञ्च समर्पिता परि-
तोषाय परिकल्पतामित्याशंसमानो
विधेयो विनेयो वशंवदः
चन्द्रः ।



# विषयसूचिः ।

# पात्राणां समुद्देशः—

रामः,—नायकः ।

लक्ष्मणः,—रामानुजस्तत्सहचरः ।

सुमन्त्रः,—सारथिः ।

वाल्मीकिः,<br>काश्यपः,<br>वादरायणः<br>कण्वः } ऋषयः ।

कौशिकः,—विदूषकः ।

कञ्चुकी ।

सीता,—रामपत्नी ।

कुशलवौ—रामसुतौ ।

वेदवती<br>यज्ञवती<br>यज्ञवेदिः } मुनिकन्यकाः

कौसल्याद्यास्तिस्रो महादेव्यः ।

बधूत्रयम् ।

पृथ्वी—तत्सहचर्यश्च नार्यः ।

वृद्धाः—स्त्रियस्तापस्यो वाल्मीकाश्रमवासिन्यः ।

तिलोत्तमा—स्ववेश्या ।

स्थानम्—वाल्मीकेराश्रमो गङ्गातीरस्थः ।

नैमिषारण्यं गोमतीतीरस्थम् ॥

—:०:०:—

# प्रस्तावना—

## १—कुन्दमाला ।

१९२३ ख्रिष्टाब्दे रामकृष्णकवि—रामनाथशास्त्रिभ्यां सम्पादिता कुन्दमाला-ऽस्माकं दृष्टिपथं याता ।तद्धि प्रथमं संस्करणमस्याः । सम्पादकद्वयेन मद्रासप्रान्तीयेन स्वप्रान्ते लब्धप्रचाराणां तेलगु–कनारी ग्रन्थलिपीनां वर्णमालायां लिखिताश्चत्वारो हस्तलेखाः खण्डिताः अपूर्णाश्चोपलब्धाः, तत एवास्याः सम्पादनसम्भवः । प्राकृतां-शस्य संस्कृतच्छायाऽपि तेनैव कृतेति महदुपकृताः स्मो महाभागद्वयेन ।

इयं कुन्दमालेति स्थापनातो ज्ञायत एव । शारदातनयेनापि स्वीये भावप्रकाशे ( ६. अधि० ) कृतोऽस्या नामनिर्देशः—'कुन्दमालाऽत्र सुशिष्टा सन्धिपञ्चक-संयुता'—इति । विश्वनाथेनापि साहित्यदर्पणे प्रयोगातिशयरूपप्रस्तावनाभेदप्रदर्शना-वसरे—'इत इतोऽवतरत्वार्या'—इत्यारभ्य—'सीतां वनाय परिकर्षति लक्ष्मणोऽ-यम्'—इत्यन्तं स्थापनांशमुद्धरता—'यथा कुन्दमालायाम्'—इति कृतो नाम-निर्देशः । बहुरूपमिश्रः काव्यकामधेनुकारश्चापि कुन्दमालाया नामनिर्देशमकारिषा-ताम् ।

अस्याः पद्यानि समुद्धृतानि दृश्यन्ते ग्रन्थान्तरेषु यथा—

**साहित्यदर्पणे**—लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन ।
निर्वासितां जनपदादपि गर्भगुर्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥

इति स्थापनान्तर्गतं पद्यं समुद्धृतं दृश्यते । भोजदेवनिर्मिते शृङ्गारप्रकाशे, महानाटके च भवत्युपलम्भः **पद्यस्यास्य**—

द्यूते पणः प्रणयकेलिषु कण्ठपाशः क्रीडापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथकलहे हरिणेक्षणायाः प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥ इति ।

सेयं कुन्दमालाऽतीते काले सुप्रचारा सुविदिता समादृता च विज्ञैरभूदिति नात्र बहु वक्तव्यापेक्षा ।

सीताप्रवासमालम्ब्य विरचितेयं कुन्दमाला नितरां मनोहारिणी सरसा मनोरमा चेति सर्वेषामेव सम्प्रत्ययस्तज्ज्ञानाम् । सरसा प्रसन्ना च पदावली, चेतोहारि कथा-वस्तु सर्वथा विमलं सरलं स्वाभाविकम्वाख्यानकं मार्मिकाणां मनसो विनोदाय नि-तरामेवालम् । कथावस्तुकल्पने चतुरो हृद्यतमान् दृश्यान् दर्शयन् दिङ्नागो भव-भूतिमप्यतिशेते, उत्तररामचरितातिशायिनी कुन्दमालेति च सञ्जातास्माकं मतिः । सुकुमारमतीनां छात्राणां कृते शृङ्गाररसनिष्यन्दभरितमभिज्ञानशाकुन्तलादि नाटक-जातं न तथा हिताय कल्पते यथेयं करुणरसपूर्णा कुन्दमालेति चास्माकं निश्चयः। यत्र तत्र त्रुटितो भग्नश्चांशो न कथावस्तुन इति वृत्तमपलापितुमलमिति यत्सत्यं वर्तते परितोषः प्रेक्षावतां कुन्दमालामस्यामपि दशायां दर्शनेन ।

## २—( i ) कविः ।

अस्या निर्माता स्वनामधन्यः कविर्दिङ्नाग इति स्थापनातः पर्यवसीयते । तञ्जोरराजभवनपुस्तकसङ्ग्रहादुपलब्धस्य हस्तलेखस्यावसाने 'अनूपराधस्य कवेर्धीरनागस्य'—इति लेखो लेखकप्रमादमूलो नवेति विचारणीयमेव सुधीभिः । धीरनागो भदन्त इति सूक्तिमुक्तावल्यां प्रसिद्धो बौद्धपण्डितः । दिङ्नागोऽपि प्रसिद्धो बौद्धपण्डितानां मूर्धन्यः । बौद्धोऽपि कुमारदासो 'जानकीहरणम्' कर्तुं प्रवृत्त इति बौद्धपण्डितानां रामायणकथासमाश्रयेण नैजसारस्वतमहःप्रकाशनेदृश्यते मतिप्रसरः ।

सोऽयं दिङ्नागस्तार्किकमूर्धन्योऽपि कविकर्मणि प्रगल्भितवानित्यपि नाश्चर्यावहम् । तार्किकचूडामणिरपि श्रीहर्षो नैषधीयादीन् प्रथिततमान् प्रबन्धान् सन्नग्रन्थ । जयदेवेन तार्किकप्रवरेणापि परमानिपुणेन कविना स्वयमेवाभिहितं प्रसन्नराघवे—'विलासो यद्वाचामसमरसनिष्यन्दमधुरः कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति । कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयोरयासीदातिथ्यं न किमिह महादेव तनयः ॥

एवमेतत् । नन्वयं प्रमाणप्रवीणोऽपि श्रूयते । तदिह चन्द्रिकाचण्डातपयोरिव कवितातार्किकत्वयोरेकाधिकरणतामालोक्य विस्मितोऽस्मि ।

सूत्रधारः—क इह विस्मयः ।

येषां कोमलकाव्यकौशलकलालीलावती भारती<br>
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ।<br>
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिताः<br>
तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः' ॥ इति ।

### ( ii ) दिङ्नागः—

तत्त्वसङ्ग्रहभूमिकायां दिङ्नागविषये यत्किमप्युपलभ्यते तदिह प्रतिपाद्यते—एष महाभागो ब्राह्मणकुले जातः । मद्रासप्रान्तान्तर्गते सिंहवक्त्रनगरे काञ्चीमण्डलाभ्यर्णेऽयं जनिं लेभे । नागदत्तेन हीनयानमार्गे प्रवेशितो वसुबन्धुशिष्यतामुपागत्य महायानप्रबन्धानपि सम्यगनुशीलितवान् । नालन्दविश्वविद्यालयस्य प्रथितान् विद्याधनान् तीर्थिकान् पराजित्य प्रचुरं यशोराशिं वादिपुङ्गवतापदञ्चाधिजगाम । यायावरवृत्त्या यत्र तत्र परिभ्राम्यन् वादिप्रवरांश्च दिग्गजान् पराजयन् बौद्धमार्गानुगामिनस्तान् विदधाविति तिब्बतीयग्रन्थेभ्यो विज्ञायते।अनेन रचिताः प्रबन्धाः न्यायविषयकास्त्वमी—

१. न्यायप्रवेशः— २. प्रमाणसमुच्चयः—सवृत्तिः । ३. हेतुचक्रहमरुः— ४. प्रमाणशास्त्रन्यायप्रवेशः । ५. आलम्बनपरीक्षा—सवृत्तिः । ६. त्रिकालपरीक्षा ।

अक्षपादेन वात्स्यायनेन च समादृतः पञ्चावयवी न्यायो दिङ्नागेन त्रिष्वेवावयवेषु विभक्तः । उपमानस्य शब्दस्य च प्रमाणतानिरासे दिङ्नागस्यैव प्रथमः प्रयासः । प्रत्यक्षानुमानयोरपि प्रत्यग्रं लक्षणं दिङ्नागः स्वयं कल्पयामास ।

'स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्'—इति मेघदूते कालिदासो ऽस्यैव दिङ्नागस्य स्मरतीति मल्लिनाथः । "दिङ्नाग इति कोऽप्याचार्यः कालिदासप्रबन्धानन्यत्रोक्तोऽयमर्थ इति स्थूलहस्ताभिनयैर्दूषयति । तमाचार्यं स्वप्रबन्धस्यापूर्वार्थाभिधायित्वमाश्रित्य मेघोपदे-

शव्याजेन कविरुपालभत इति"—इति च दक्षिणावर्तनाथस्ततोऽपि प्राचीनो व्याख्याकृत्।

तर्ककर्कशोऽपि दिङ्नागः साहित्यसेवी काव्यकलानिपुणश्चासीत्। प्रसादगुणेऽपि नायं कालिदासादून इति सामानाधिकरण्येनैव तत्रभवतो विवाद इति समाकलयामः।

३—कालः।

कालिदाससमकालिकतया ख्रीष्टपञ्चमशतकस्य प्रथमपादेऽयं महाभागोऽवर्ततेति सम्पादकद्वयेन कुन्दमालाभूमिकायां निर्धारितम्। यावत् कालिदाससमयो न निर्णीतः स्यात्तावत्सुनिश्चिततया न शक्यते किमपि वक्तुम्। कुन्दमालायां प्रयुक्ता प्राकृतभाषापि प्रौढिंगता चतुर्थं पञ्चमं वा शतकं प्रतिपादयतीति दशपदार्थीभूमिकायां उइ ( ui ) महोदयः प्रतिपेदे।

iV—निवासः।

दिङ्नागोऽयमरारालपुरवास्तव्य इति स्थापनातः परिचीयते। अरारालपुरं कुत्रावस्थितं किञ्चास्याधुनिकमभिधानमिति न ज्ञायते। अप्येतदनुराधपुरमेव स्यात्सिंहलद्वीपस्थम्, लेखकप्रमादेनैवारारालेति रूपमापन्नं स्यादिति सम्पादकद्वयानुमानम्। निचुलः कालिदासेन प्रशस्तः तरलासञ्ज्ञकसन्दर्भस्य निर्माताऽपि सिंहलद्वीपनिवासीति तत्रत्यानां प्रवादः।

५ कथावस्तुसंक्षेपः—

१—रामवशंवदेन लक्ष्मणेन गङ्गातटं नीता दौर्हृदवती सीता तत्रैव कान्तारे परित्यक्ता प्रदोषवेलायाम्। मुनिदारकेभ्यः स्नानार्थमागतेभ्यः तस्याः प्रवृत्तिमुपलभ्य सीतामभ्युपपन्नो भगवान् वाल्मीकिः प्रणिधानचक्षुषा तां सतीं साध्वीमपि निर्वादभयाद् भर्त्रा परित्यक्तामवगत्य स्वमाश्रमं निनाय।

२—सञ्जातौ कुशलवौ सीतानन्दनौ। रामायणाध्ययने सङ्गीते च परमं प्रावीण्यमधिगतवन्तौ। रामेणापि नैमिषारण्ये अश्वमेधयागारम्भो व्यधायि। वाल्मीकिप्रमुखाश्च महर्षयः सत्रे समुपनिमन्त्रिताः सान्तेवासिनः। वेदवत्याः समक्षं रामहृदयगतमात्मनीनं प्रेमराशिं व्यञ्जयन्ती विप्रयोगेन दूयमानमानसा नैमिषं सम्प्राप्तुं रामदर्शनायोत्कण्ठिता प्रोत्युङ्क्ते सीता।

३—गोमतीतीराश्रमपदे भगवन्तं प्राचेतसं सम्प्राप्तमवधार्य तद्दिदृक्षयाऽयोध्यातो रामो लक्ष्मणद्वितीयो यावदाश्रमान्तिकं परापतति तावदसौ प्रेक्षणीयविरचनां कुन्दमालां तरङ्गैरुह्यमानां सम्प्रेक्ष्य तदुद्ग्रथनप्रकारस्य दिव्यस्य दृष्टचरत्वात् सीतायाश्च तत्सम्भवात्तस्याः स्मरति। पुलिनादूर्ध्वप्रदेशे परिक्राम्यन पदपङ्क्तिं

परिचिन्वन् लक्ष्मणः सीतासमवस्थितिमाश्रमे निश्चिनोति । सापि तदानीं स्नात्वा कृतजप्या हुतहुतवहा चातिथिजननिमित्तं कुसुमान्यवचिन्वाना तत्रैवोन्नतगम्भीर-शीतले लताजाले प्रविष्टा पुरतः समापतन्तं तत्रैव च समासीनं सलक्ष्मणं रामं निरीक्ष्य हर्षविषादयोरन्तराले वर्तमाना सुसंयतमनाः वियोगखेदेन खिन्नाङ्गं भर्त्तार-मवलोकयन्ती तत्परिखेदं च सोढुमपारयन्ती निभृतमनालक्षितं च कुशलवयोः समीपमायाति ।

४—रामायणसङ्गीतकनिमित्तं वाल्मीकितपोवनं सम्प्राप्ता स्वर्वेश्या तिलोत्तमा प्रभावनिर्मितेन सीतारूपेण रामस्य दृष्टिपथमवतीर्य रामः सीतायां सानुकम्पो न-वेति निर्धारयितुं यावत्सन्नह्यति तावदसौ वेदवत्या व्यवसायादस्माद् वार्यते कौशि-केन रामविदूषकेणासन्नगुल्मलतागहनप्रच्छन्नस्थितेन सर्वोऽप्येष आलापः श्रुत इति । सीता त्वननुज्ञातदर्शनेति रामस्य दृष्टिपथं परिहर्तुकामा सकलमपि दिवसमा-श्रमदीर्घिकातीरे यापयति यतस्तत्र गतः स्त्रीजनः स्नानाद्यपेक्षी महाप्रभावेण मह-र्षिणा वाल्मीकिना पुरुषनयनामगोचरो विहितः । रामोऽपि कण्वेन नैमिशारण्य-सुषमाप्रदर्शनपरेण सार्धं परापतन् क्रतुहोमधूमराशिना पर्याकुलनयनो दीर्घिकामव-गाह्य शीतलेन सलिलेन नयनपरिखेदमपनेतुं यावदिहोपागतस्तावत्कुलपतेरग्निहोत्र-वेलां सन्निधानेन सम्भावयितुं कण्वः प्रयातः । राजहंसमिथुनक्रीडनमवलोकयन्ती सीता तन्निध्यानपरा दीर्घिकातीरवर्तिनी यद्यपि रामेण द्रष्टुं न शक्या तथापि जले गता तत्प्रतिच्छाया दृष्टैवं, बिम्बेन च विना प्रतिबिम्बमसम्भवीति कृत्वा पुरोवर्तिनी सीता दृष्टेरविषय इति महदाश्चर्यं जनयति रामस्य । दीर्घिकातीरप्रदेशादपसृतायां सीतायां तत्प्रतिच्छायायां विलीनायां पुनारामे मोहमुपागते सीतैव तमभ्युपेत्य परिष्वजते, प्रत्यागतचेतनाच्च रामाद्दूरमपसरति, अपसृतायां तु तस्यां भूयोऽपि मूर्छितं रामं सीता पटान्तेन वीजयति । पटान्तमारुतस्पर्शं सम्प्रधार्य रामः पटान्त-माकर्षति विजहाति च सीता स्वमुत्तरीयम् । रामोऽपि निपुणमीक्षमाणश्चित्रकूटे वनदेवतया मायावत्या स्मरणनिमित्तं सीतायै प्रदत्तं चन्द्रधवलं वासितसुगन्धं दिव्यं संव्यानमिति सर्वं स्मरति सीतासन्निधाने च तस्य वर्धते सम्प्रत्ययः । तदुत्तरीयं रामः परिधत्ते स्वकीयं तु समुत्क्षिपति । असङ्क्रान्तविलेपनामोदं रामस्योत्तरीयमिति नितान्तं परितुष्टा सीता तदेव परिधाय यावत् ततोऽपसरति तावत्कौशिको रामम-भ्येति, सर्वञ्चैतत्तिलोत्तमाया विलसितं परवञ्चनायामतिमहन्नैपुणमिति च तं प्रत्याययति ।

५—सीताविषये चिन्तयतोः रामकौशिकयोः समीपे कुशलवावागच्छतो रामा-यणसङ्गीतकनिमित्तम् । तयोरपूर्वं सौन्दर्यं बालभावं च प्रसमीक्ष्य हर्षविस्मयजडो रामः सिंहासनासीनस्तौ निजक्रोडे स्थापयति । अराघवस्य सिंहासनारोहिणो मूर्धा शतधा विदलेदिति भीतिभीतः कौशिकः कुशलवौ ततोवरोहयितुं रामं चोदयति । न

कश्चन तयोर्मूर्धविकार इति सम्प्रधार्य हर्षविस्मयाविष्टौ रामकौशिकौ बालयोर्नामनी कुलं मातापितरौ सर्वमपि तयोः समाचारं वेतुं प्रयतेते । तौ तु देवीति वधूरिति च द्वे नामनी जनन्याः ख्यापयतो जनकस्य च निरनुक्रोश इति । तत्प्रवृत्तिविज्ञानेन भूयोपि तरलीकृतो रामः स्वबान्धवान् पारिषद्यांश्च तयोः सङ्गीतश्रवणनिमित्तमामन्त्रयते ।

६—रामायणं गीतिपुरस्सरं कुशलवौ गायतः । स्वचरितं श्रावं श्रावं रामलक्ष्मणयोः सीतासम्बन्धे विषादं स्वाभाविकं वीक्ष्य तौ पृच्छतो रामं लक्ष्मणञ्च परिचिनुतो रामायणनायकत्वेन । अद्यापि तौ न मातरं सीतात्वेन जानीतो नाऽप्यात्मानं सीतारामापत्यत्वेन वित्तः । सङ्गीतपरौ तौ सीतां वने परित्यज्य विरतौ, शिष्टस्तु कथांशो न तयोर्विदित इति सीता जीवति न वेति न शक्तौ ज्ञातुं ज्ञापयितुञ्च । रामेणाहूतः कण्वः कथांशमवशिष्टं यावद्गायति तावत् स्वसम्बन्धावगमेन भृशमावेशपरवशाश्चत्वारोऽपि राघवाः (रामलक्ष्मणकुशलवाः) मोहमुपगच्छन्ति । तानभ्युपपत्तुं वाल्मीकेः सीतायाश्च प्रवेशः । लब्धचेतनो रामः सीताया औदासीन्यं स्वस्मिन् वीक्ष्य यावदुपालभते तावन्महर्षिणा सरोषमधिक्षिप्तो वह्निपरीक्षाशुद्धाया जानक्याः परित्यागनिमित्तम् । वाल्मीकिचोदिता सीताऽऽत्मपरिशुद्धिसाक्ष्यसाहाय्यार्थं यावद्विश्वम्भरां देवीं प्रार्थयते तावदसौ पातालमुद्भिद्याविर्भूता सीतां सर्वथा शुद्धां परिख्याप्य सर्वांश्च पौरान् जानपदाँश्च जनान् तन्निमित्तं परितोष्य भूयोऽपि तिरोहिता । प्रकृतिभिः सत्कृता भर्त्रा च परिगृहीता पतिव्रता जनकजा यागे रामसहचरी जाता । वाल्मीकिना कुशः सिंहासनमारोपितो लवस्तु रामेण यौवराज्यपदमालम्भित इति ॥

## ६—सुभाषितानि—

प्रमादः सम्पदं हन्ति प्रश्रयं हन्ति विस्मयः ।
व्यसनं हन्ति विनयं हन्ति शोकश्च धीरताम् ॥ ३. २ ॥

तृषितेन मया मोहात् प्रसन्नसलिलाशया ।
अञ्जलिर्विहितः पातुं कान्तारमृगतृष्णिकाम् ॥ ४. २२ ।

सन्ताप्य लोकमखिलं निरवग्रहेण
तीव्रो नरेश्वर इव प्रथमं स्वधाम्ना ।
सोऽयं वयःपरिणतेरिव शान्ततेजाः
सायं मृदुर्भवति तिग्मरुचिः क्रमेण ॥ ४. २३ ॥

प्रियजनरहितानामङ्गुलीभिर्वधूना-
मवधिदिवससंख्याव्यापृताभिः सहैव ।
व्रजति किरणमालिन्यस्तमेकैकशोऽस्मिन्
सरसकमलपत्रश्रेणयः सङ्कुचन्ति ॥ ४. २४ ।

आकर्षात्प्रग्रहाणां नियमितगतयश्चोदितास्तोत्रपातै-
र्नैव स्थातुं न यातुं सचकितचरणाः सारथेः पारयन्तः ।
दुर्विन्यस्तैः खुराग्रैर्विषमपरिसरादस्तशैलस्य शृङ्गा-
द्राहन्ते वारिराशिं कथमपि विधुरा वाजिनस्तिग्मरश्मेः ॥ ४. २५ ।
अन्तरिता अनुरागा भावा मम कर्कशस्य बाह्येन ।
तन्तव इव सुकुमाराः प्रच्छन्नाः पद्मनालस्य ॥ ५. ६ ।
नरपतिरधिकप्रवृत्ततेजा गुणनिहितैः सचिवैर्निवारणीयः ।
भुवनमभितपन् सहस्ररश्मिर्जलगुरुभिर्व्यपनीयते हि मेघैः ॥ ५. ७ ।
ज्योतिः सदाभ्यन्तरमाप्तपादैरदीपितं नार्थगतं व्यनक्ति ।
नालं हि तेजोऽप्यनलाभिधानं स्वकर्मणो मारुतमन्तरेण ॥ ५. ८ ॥
आपातमात्रेण कयापि युक्त्या सम्बन्धिनः सन्नमयन्ति चेतः ।
विमृश्य किं दोषगुणानभिज्ञश्चन्द्रोदये श्च्योतति चन्द्रकान्तः ॥ ५.१० ।
भवति शिशुजनो वयोनुरोधाद् गुणमहतामपि लालनीय एव ।
व्रजति हिमकरोऽपि बालभावात्पशुपतिमस्तककेतकच्छदत्वम् ॥५. १२॥
यां यामवस्थामवगाहमानमुत्प्रेक्षते स्वं तनयं प्रवासी ।
विलोक्य तां तां च गतं कुमारं जातानुकम्पो द्रवतामुपैति ॥ ५. १३ ।
अपि नाम शरा मोघास्तपःसन्नद्धमूर्तिषु ।
वासवस्यापि सुव्यक्तं कुण्ठाः कुलिशकोटयः ॥ ५. १४ ।

## ७–कुन्दमालास्थ पद्यानां वृत्तनिर्देशः–

### १—अनुष्टुप् ।

प्रथमेऽङ्के—१, ८, १०, १३, १५, १६, २०, २८, ३१, ३२ ।
तृतीयेऽङ्के—२, १५, १६ ।
चतुर्थे—२, १०, १२, १४—१७, २२ ।
पञ्चमे—६, १४ ।
षष्ठेऽङ्के—१—१४, १६—१९, २७—२६, ३२–३४, ३६, ४१–४३ ।

### २—आर्या ।

द्वि०—१ ।
तृ०—४, १३ ।
च०—१८ ।
प०—६ ।

### ३—इन्द्रवज्रा ।

प्र०—६, ११ ।

## ४--उपजातिः।

प्र०—१७।
तृ०—६।
प०—२, ५, ८, १०, ११, १३।
ष०—१५, ३८।

## ५—उपेन्द्रवज्रा।

प्र०—४, ६।

## ६—पुष्पिताग्रा।

तृ०--७।
च०—१, ८, १८, २१।
प०—१, ७, १२।
ष०—२१, २२, ३६।

## ७—मन्दाक्रान्ता।

तृ०--३, ६।
प०—४०।

## ८—मालिनी।

तृ०—१, ५, १२।
च०—३, २४।

## ९—रथोद्धता।

ष०—२०, ३७।

## १०—वसन्ततिलकम्।

प्र०—३, ५, १२, १४, १८, २१—२४, २७, २६।
द्वि०—२।
च०—५, ६, ११, १३, २०, २३।
प०—३, ४, १५, १६।
ष०—३१, ३५, ४४।

## ११—वंशस्थम्।

तृ०—१०।

## १२—शार्दूलविक्रीडितम्।

प्र०—२, ३०।
तृ०—८, १४, १७।
च०—४, ६, ७।
ष०--२५, २६।

## १३—शालिनी।

प्र०—१६, २५, २६।

## १४—शिखरिणी।

प्र०—७।

तृ०—११।

प०—१७।

ष०—२३।

## १५—स्रग्धरा।

च०—२५।

ष०—२४, ३०, ४५।

## ii—अथ वृत्तलक्षणानि।

१—पञ्चमं लघु सर्वत्र सप्तमं द्विचतुर्थयोः।
षष्ठं गुरु विजानीयादेतत्पद्यस्य लक्षणम्॥

२—यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या॥

३—स्यादिन्द्रवज्रा यदि तौ जगौ गः।

४—अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।

५—उपेन्द्रवज्रा जतजास्ततो गौ।

६—अयुजि नयुगरेफतो यकारो युजि च न जौ जरगाश्च पुष्पिताग्रा।

७—मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गयुग्मम्।

८—ननमयययुतेयं मालिनी भोगिलोकैः।

९—रान्नराविह रथोद्धता लगौ।

१०—उक्ता वसन्ततिलका तभजा जगौ गः।

११—जतौ तु वंशस्थमुदीरितं जरौ।

१२—सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितम्।

१३—शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः।

१४—रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी।

१५—म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्।



श्रीः ।

# कुन्दमाला ।

## दिङ्नागाचार्यप्रणीता ।

### प्रथमोऽङ्कः ।

जम्भारिमौलिमन्दारमालिकामधुचुम्बिनः ।
पिबेयुरन्तरायाब्धिं हेरम्बपदपांसवः ॥ १ ॥

---

प्रणम्य परमात्मानं सच्चिदानन्दमव्ययम् ।
व्याख्यार्थं कुन्दमालायाः स्वीकृतोऽयं परिश्रमः ॥ १ ॥
आचार्यशुद्धबोधस्य काशीनाथस्य सद्गुरोः ।
तातस्य बाशिरामस्य क्रियते पादवन्दना ॥ २ ॥
दिङ्नागस्य कृतीरम्या कालवासोऽवगुण्ठिता ।
भूयो दृष्टिपथं याता तनोतु सुधियां मुदम् ॥ ३ ॥
निरन्तरतिरोधानात्पाषाणो विक्रियां व्रजेत् ।
म्लानायाः कुन्दमालाया अयमुज्जीवनक्रमः ॥ ४ ॥
इहान्वयमुखेनैव सर्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ५ ॥

प्रारिप्सितस्य कुन्दमालासञ्ज्ञकदृश्यकाव्यस्य निर्विघ्नपरिसमाप्तये शिष्टविशिष्ट-देवतानुध्यानरूपं मङ्गलं नान्दीद्वाराऽऽरचयति जम्भारीति—

जम्भारिमौलिमन्दारमालिकामधुचुम्बिनः हेरम्बपदपांसवः अन्तरायाब्धिं पिबेयुरिति योजना ।

जम्भो दानवविशेषः तस्य अरिः शत्रुः इन्द्र इति तात्पर्यम्, तस्य मौलौ किरीटे याः मन्दारस्य सुरद्रुमस्य मालिकाः मालाः तासां यत् मधु माक्षिकं तत् चुम्बितुं शीलमेषां ते । हेरम्बपदपांसवः—हेरम्बस्य गणेशस्य पदयोः चरणयोः ये पांसवः धूलिकणाः । प्रणामार्थं नतमस्तकस्य वासवस्य किरीटारोहिणो वैनायका-श्चरणरेणवः इति भावः । अन्तरायाब्धिम्—

अन्तरायाः विघ्नाः तेषां अब्धिः समुद्रः तम्, विघ्नपरम्परामित्यर्थः । पिबेयुः शोषयेयुरिति भावः । रजोबहुले प्रदेशे जलधारा शोषं व्रजतीति लोकप्रसिद्धमेव । एतमेवार्थमनुवदति प्रौढोक्तिनिपुणः कोऽपि कविपुङ्गवोऽन्योऽपि । तथाहि—

( नान्द्यन्ते ततः प्रविशति सूत्रधारः )

---

'आलम्बे जगदालम्बे हेरम्बचरणाम्बुजे।
शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः॥' इति।

विघ्नविघाताय विघ्नराजचरणाश्रयणं सर्वथा युक्तमेव। मल्लिनाथोऽप्याहस्म—

'अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम्।
तं नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः'॥ इति।

गणनायकस्य सुरैः प्रणम्यत्वं कविसमयसिद्धमेव।
तथाहि—

'अभिप्रेतार्थसिध्यर्थं पूजितो यः सुरैरपि।
सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः॥' इति।

जेतुं यस्त्रिपुरं हरेण हरिणा व्याजाद्बलिं बध्नता,
स्रष्टुं वारिभवोद्भवेन भुवनं शेषेण धर्तुं धराम्।
पार्वत्या महिषासुरप्रमथने सिद्धाधिपैः सिद्धये,
ध्यातः पञ्चशरेण विश्वजितये पायात्स नागाननः'॥

इति। उपलक्षणमात्रं चेदम्। तस्माज्जम्भारिकृता नतिततयो नाश्चर्यावहा इति सर्वथापि समुचित एवोपक्रमः समुपनिबद्धस्तत्रभवता कविवर्येणेति दिक्। कोषांशस्तूद्ध्रियते।

'किरीटे मौलिरक्लीबे चूडासंयतकेशयोः'—

इति रभसः। 'मन्दारः स्यात् सुरद्रुमे'। 'विघ्नोऽन्तरायः प्रत्यूहः'–इत्यमरः।

हेरम्बः हे रम्बते इति। 'हः शङ्करे हरौ हंसे रणरोमाञ्चवाजिषु'——इति नानार्थरत्नमाला।

'रबि शब्दे' (भ्वा०) 'पचाद्यच्' (अष्टा० ३। १। १३४), 'तत्पुरुषे कृति'—( ६। ३। १४ ) इत्यलुक्। हे उषसि रम्बते इति स्वामी। अब्धिः आपो धीयन्ते अत्र। 'कर्मण्यधिकरणे च'( ३। ३। ९३ ) इति धात्रः किः॥ १॥

नान्द्याः अन्ते अवसाने सूत्रधारस्य प्रवेशः सूत्रितः कविना कोष्ठकगतसन्दर्भेणामुना। तत्र नान्दीस्वरूपमुच्यते—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैर्युता"॥ इति साहित्यदर्पणे।
"पदैश्चतुर्भिर्द्वादशभिरष्टाभिर्वा पदैरुत"।

इत्यपि कश्चित्। तत्र 'जम्भारी'ति श्लोको नान्दीरूपः कविनोपनिबद्धः। हेरम्बस्य स्तुतिः आशीर्वादाशंसनं च सुस्पष्टमेव। मङ्गल्यं च 'मालिका' पदमप्यु-

पात्तम् । सैषा चतुष्पदा नान्दी । 'जम्भारि'......'चुम्बिनः'—इत्येकम् । 'पिबेयुः'—इति द्वितीयम् । 'अन्तरायाब्धिम्'—इति तृतीयम् । 'हेरम्बः...... पांसवः'—इति च चतुर्थम् । पदञ्चात्र त्रिविधं बोध्यम्—पादरूपम्, सुप्तिङन्त-रूपम्, वाक्यरूपञ्च । तथा चाह नाट्यप्रदीपकृत्—

"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे" ॥ इति ।

सैषा नान्दी नटैः सम्भूय प्रयुज्यमाना पूर्वरङ्गस्य प्रधानमङ्गम् । तथा च दर्पणः—

'यं नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥
प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि ।
तथाऽप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये" ॥

इति । अत्रेदं बोध्यम्—

'प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च ।
आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना ॥
संस्वदना ततः कार्या मार्गसारित एव च ।
ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च ॥
ततः सर्वैस्तु कुतुपैः संयुक्तानीह कारयेत् ।
एतानि तु बहिर्योगान्यन्तर्जवनिकागतैः ॥
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च ।
ततः सर्वैस्तु कुतुपैः संयुक्तानीह कारयेत् ॥
विद्यादन्तर्जवनिकां वृत्तपाठ्यकृतानि च ।
गीतानां भद्रकादीनां योज्यमेकं तु गीतकम् ॥
वर्धमानमथापीह ताण्डवं यत्र युज्यते ।
ततश्चोत्थापनं कार्य्यं परिवर्तन मेव च ॥
नान्दी शुष्कावकृष्टं च रंगद्वारं तथैव च ।
चारी चैव ततः कार्या महाचारी तथैव च ॥
प्ररोचना च त्रिगतं पूर्वरङ्गे भवन्ति हि ।
एतान्यङ्गानि कार्याणि पूर्वरङ्गविधौ द्विजाः ॥
एतेषां लक्षणमहं व्याख्यास्याम्यनुपूर्वशः ।
कुतुपस्य सविन्यासः प्रत्याहार इति स्मृतः ॥
तथावतरणं प्रोक्तं गायकानां निवेशनम् ।
परिगीतक्रियाऽऽरम्भ आरम्भ इति कीर्तितः ॥
आतोद्यरञ्जनार्थं च भवेदाश्रवणा विधिः ।

वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ॥
तन्त्रीयकरणार्थं तु भवेच्च परिघट्टनम् ।
तथा पाणिविभागार्थं भवेत्संस्वदना विधिः ॥
तन्त्रीभाण्डसमायोगान् मार्गसारितमिष्यते ।
कालपातविभागार्थं भवेदासारितक्रिया ॥
कीर्तनाद्देवतानां च ज्ञेया गीतविधिक्रिया ।
यस्मादुत्थापयन्त्यत्र प्रयोगं नान्दिपाठकाः ।
पूर्वमेव तु रंगेऽस्मिन् तस्मादुत्थापनं स्मृतम् ॥
यस्माच्च लोकपालानां परिवृत्य चतुर्दिशम् ।
वन्दनानि प्रकुर्वन्ति तस्माच्च परिकीर्त्तनम् ॥"

इत्येवं भरतादिभिर्यद्यपि पूर्वरङ्गे विधेयानि प्रत्याहारादीनि बहून्यङ्गान्यभिहितानि, तथापि तेषां स्थितिर्न तथाऽऽवश्यकी प्रार्थनीया भवति यथा नान्द्याः ।

इदंत्विह तत्त्वम् । यत्पुनरनर्घराघवादावाद्यश्लोकस्य नान्दीतिव्यपदेशः, वस्तुतो रङ्गद्वाराभिधानं पूर्वरंगस्यांगमेवासौ, नतु नान्दीति । 'सूत्रधारः पठेन्नान्दीं मध्यमं स्वर माश्रितः'—इत्यपि किल पाक्षिकं न सर्ववादिसम्मतं मतम् । तथा च दर्पणकारः—'एषा नान्दीति कस्यचिन्मतानुसारेणोक्तम् ,वस्तुतस्तु पूर्वरंगस्य रंगद्वाराभिधानमङ्गम्।यदुक्तम्—

" यस्मादभिनयो ह्यत्र प्राथम्यादवतार्यते ।
रंगद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥" इति ।

उक्तप्रकारायाश्च नान्द्या रंगद्वारात्प्रथमं नटैरेव कर्त्तव्यतया महर्षिणा निर्देशः कृतः । कालिदासादिमहाकविप्रबन्धेषु च—" वेदान्तेषु यमाहुरेकपुरुषं······निश्रेयसायास्तुवः "—एवमादिषु नान्दी लक्षणायोगात् । उक्तं च "रंगद्वारमारभ्य कविः कुर्यात् "—इत्यादि । अतएव प्राक्तनपुस्तकेषु " नान्द्यन्ते सूत्रधारः " इत्यनन्तरमेव " वेदान्तेषु " इत्यादि श्लोकलेखनं दृश्यते' । इति । दर्पणटीकाकारश्चाह—" वयं त्वेवं प्रतीमः, नान्दीलक्षणं सम्भवतु, न वा सम्भवतु, 'निष्प्रत्यूहमि'त्यादि ( अनर्घराघवे ), 'वेदान्तेषु' इत्यादि ( विक्रमोर्वशीये ) 'पादाग्रस्थितया' इत्यादि च सर्वमेव रंगद्वारम्, नान्दी तु ततः पूर्वमेवानुष्ठिताऽनुमेयेति । "

अथ सूत्रधारः—सूत्रं वर्णनीयवस्तूनि धारयति प्रवर्त्तयतीति सूत्रधारः, नाटकस्थापको नटविशेषः ।

तथाहि—वर्णनीयतया सूत्रं प्रथमं येन सूच्यते ।
रंगभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥ इति ।

स एवाद्यत्वे स्थापककर्त्तव्यान्यपि समाचरति, यथाह विश्वनाथो दर्पणे—

'पूर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।
प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥

काव्यार्थस्य स्थापनात्स्थापकः । तद्वदिति सूत्रधारसदृशगुणाकारः । इदानीं

ज्वालेवोर्ध्वविसर्पिणी परिणतस्यान्तस्तपस्तेजसो
गङ्गातोयतरङ्गसर्पवसतिर्वल्मीकलक्ष्मीरिव ।
सन्ध्येवार्द्रमृणाल कोमलतनोरिन्दोः सदास्थायिनी
पायाद्वस्तरुणारुणांशुकपिला शम्भोर्जटासन्ततिः ॥ २ ॥

---

पूर्वरङ्गस्य सम्यक् प्रयोगाभावात् एकएव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः—" इति।

तत्कर्त्तव्यानि पुनः—

'सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥
रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः ।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत् ॥
ऋतुं च कञ्चित्प्रायेण भारतीं वृत्तिमाश्रितः ।' इति ।

एष चात्र नाट्यकथायाः क्रमो दर्शितः—

"तत्र पूर्वं पूर्वरङ्गः, सभापूजा ततः परम् ।
कवेः सञ्ज्ञादि कथनं नाटकस्याप्यथामुखम्" ॥ इति

तत्र नाट्यवस्तुनः पूर्वं नाट्यशालायां जायमानानां नटादिदुरदृष्टविलसितरूपोपद्रवाणामुपशमनायाद्रियमाणः सूत्रधारप्रभृतिभिर्नटैः कर्मविशेषः पूर्वरंगः । यद्यपि पूर्वं रज्यतेऽस्मिन्निति व्युत्पत्त्या मुख्यः पूर्वरङ्गोनाट्यशालैव, तथापि तत्स्थो मङ्गलहेतुभूतो नान्यादिः कर्मविशेषोऽप्युपचारात्पूर्वरंग एव व्यपदिश्यते इति केचित्। अन्ये त्वाहुः 'पूर्वो रङ्गः पूर्वं क्रियमाणो गानादिनिष्पाद्यः कर्मविशेष इति पूर्वरंगः। "रङ्गो । नृत्ये रणभुवि गाने नृत्याङ्गणेऽपि च । वङ्गे मल्लनियुद्धे तद्भूमौ च"— इति गोपालः । स च 'जम्भारीति' नान्द्या पर्यवसितः । इदानीं क्रमप्राप्ता सभापूजा विधातव्या । सा चेह समुपस्थितसत्समाजस्य कल्याणाय शम्भुजटासन्ततिः कल्पता मित्याशीरूपा रंगद्वाराभिधानरूपेण 'ज्वालेवे'ति श्लोकेन सम्पादिता कविना। स एवेदानीं श्लोको व्याख्यायते समुल्लेखनपुरस्सरं 'ज्वाले'ति—

परिणतस्य अन्तस्तपस्तेजसः ऊर्ध्वविसर्पिणी ज्वालेव, गंगातोय तरङ्गसर्पवसतिः वल्मीकलक्ष्मीरिव, आर्द्रमृणालकोमलतनोः इन्दोः सदास्थायिनी सन्ध्येव, तरुणारुणांशुकपिला शंभोः जटासन्ततिः वः पायादित्यन्वयः । परिणतस्य परिणामं प्राप्तस्य परिपक्वस्य प्रवृद्धस्येत्यर्थः । अन्तस्तपस्तेजसः आन्तरिकतपोवह्नेः । ऊर्ध्वविसर्पिणी ऊर्ध्वगामिनी । ज्वालेव शिखेव । जटासन्ततिविशेषणम् । ज्वाला ज्वलतीति । 'ज्वलितिकसन्तेभ्योणः' ( ३ । १ । १४० ) । स्त्रियां टाप् ( ४ । १ । ४ )! 'प्रसिद्ध मूर्ध्वज्वलनं हविर्भुजः'–इति माघः । जटासन्ततिरपि शिरसि स्थिता ऊर्ध्वं गतैवास्ते । शम्भो रान्तरिकं तपोऽपि सर्वं विदितम् । तथा चाह कविकुलशिखा रत्नं शूद्रको मृच्छकटिकायाम्—

'आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्टया
शंभोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः" ॥ इति

वल्मीकलक्ष्मी रिव वामलूरश्रीरव । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्'-इत्यमरः । वलन्ते प्राणिनोऽत्र । 'अलीकादयश्च' ( ३० ४ । २५ ) इति निपातितः। बिलमध्यादाखवादिनिष्कासितमृत्पुञ्जं वल्मीकमित्युच्यते । तस्य शोभेव । 'शोभा संपत्तिपद्मासु लक्ष्मीः श्रीरिति गद्यते'-इति कोषः । गंगातोयतरंगसर्पवसतिः गंगाया जाह्नव्या स्तोयस्य जलस्य ये तरङ्गाः महोर्मयः ते एव सर्पाः भुजङ्गा स्तेषां वसति रावासो निकेतनम् । शिव मौलौ गंगाया आवासो लोकविदितः । तथाहि-

'दिश्यात्स शीतकिरणाभरणः शिवं वो यस्योत्तमाङ्गभुवि विस्फुरदूर्मिपक्षा ।
हंसीव निर्मलशशांककलामृणालकन्दार्थिनी सुरसरिन्नभसः पपात" ॥ इति ।

ऊर्मयश्च पन्नगाभाः । शिवजटाजूटे गंगातरंगरूपभुजंगा विलसन्ति, वल्मीकेऽपि प्राकृताः सर्पा इत्युभयोः साम्यम् । यद्वा गंगातोयतरंगवर्तिनः सर्पाः शिवमौलौ समुद्भासन्ते यथा वल्मीके इति व्याख्येयम् । गंगातोये सर्पसद्भावः, शिवोऽपि फणिभिः समुपेत इति सर्व सम्मतम् । तथाच—

'पिनाक-फणि-बालेन्दु-भस्म-मन्दाकिनीयुता ।
पवर्गरचिता मूर्तिरपवर्गप्रदाऽस्तुवः' ॥ इति ।

रामायणेऽपि गंगावतरणमुद्दिश्य 'शिशुमारोरगगणैर्मीनैरपि च चञ्चलैः'-इति गंगातोये प्रदर्शिता उरगगणानां सत्ता । आर्द्रमृणालकोमलतनोः इन्दोः सदा स्थायिनी सन्ध्या इव जटासन्ततिः । आर्द्रः जलेन क्लिन्नः, यः मृणालः बिसम् अब्ज-मूल मिति यावत्, तद्वत् कोमला मृदुला तनुः मूर्तिर्यस्य तस्य इन्दोः चन्द्रस्य सदा स्थायिनी सर्वदाऽवस्थायिनी सर्वकालभाविनीत्यर्थः, सन्ध्या प्रदोष इव । सन्ध्याया ईषत्ताम्रत्वादीषत् पिषङ्गीभिर्जटाभिः साम्यम् । मृणाले तु बिसं बिशम्'-इति द्विरूप कोशः । इन्दौ सन्निहिते प्रदोषः प्रवर्त्तते । हरचूड़ायां पुनस्तस्य सर्वदाऽवस्थानात्सदैव सन्ध्यागम इत्यवधेयम् । जटासन्ध्ययो रीषत्ताम्र-त्वरूपसाधर्म्येऽपि तयोर्नित्यत्वानित्यत्वकृतं वैधर्म्यं वारयितुं 'सदा स्थायिनी'ति पदोपपत्तिः ॥ तरुणारुणांशुकपिला तरुणस्य अरुणस्य बालसूर्यस्य अंशवः किरणा स्तद्वत् कपिला ईषत् पिङ्गला । 'उदये सविता रक्तो रक्तश्चास्तमये तथा'-इति बालसूर्यस्य रक्तत्वम् । 'अरुणो भास्करेऽपि स्याद्वर्णभेदेऽपि च त्रिषु'—इत्यमरः । किरणोऽस्तमयूखांशुगभस्ति घृणि रश्मयः'—इति । 'कडारः कपिलः पिङ्ग पिशङ्गौ कद्रु पिंगलौ'-इति चामरः । शम्भोः शिवस्य जटा सन्ततिः लग्नकचालिः । 'जटा लग्नकचे मूले मांस्यां क्षद्रे पुनर्जटी'-इति भेदिनी । वः युष्मान् पायात् रक्षतात् ॥ २ ॥

पूर्वरङ्गस्य प्रधानमङ्गं नान्दी 'जम्भारी'ति श्लोकेन 'ज्वालेवेति श्लोकेन सभा-पूजा च सम्पन्ना । सम्प्रति कवेस्तत्प्रबन्धस्य च नाम्नोः संकीर्तनं क्रमप्राप्तं कर्त्तव्य-मिति तदेव परेण सन्दर्भेण प्रतिपादयति

आदिष्टोऽस्मि परिषदा—तत्रभवतोऽरारालपुरवास्तव्यस्य कवेर्दिङ्नागस्य कृतिः कुन्दमाला नाम, सा त्वया प्रयोक्तव्येति, तद्यावदस्य सन्दर्भस्य प्रयोगसाचिव्यविधायिनीं मार्यामाहूय रङ्गभूमिमवतरामि।

( नेपथ्ये )

इत इतोऽवतरत्वार्या।

---

आदिष्टोऽस्मि आज्ञप्तोऽस्मि परिषदा सभया। 'समज्या परिषद् गोष्ठी सभा समिति संसदः'-इत्यमरः। परितः सीदन्त्यस्याम्, 'षद्लृ विशरणादौ' (भ्वा० तु० प० अ०)। संपदादि क्विप् (वा० ३। ३। १०८) 'सदिरप्रतेः' (८।३।६६) इति षत्वम्। तत्रभवतः पूज्यस्य। 'त्रिषु तत्रभवान् पूज्यस्तथैवात्रभवानपि'—इति वैजयन्ती। अरारालपुरवास्तव्यस्य अरारालपुरनिवासिन इत्यर्थः। कवेःदिङ्नागस्य दिशां नागः दिग्गजः पाण्डित्योत्कर्षवत्त्वात्। प्रसिद्धाः अष्टौ दिग्गजाः प्रतिदिशं नियुक्ता जगतीरक्षणार्थम्, अयं पुनः सर्वासामेव दिशां परिरक्षक इति विशेषः। ते च दिग्गजाः श्रूयन्ते एव, यथाह जगन्नाथः—

'दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः'—इति। नतु दृश्यन्ते। अयं तु दृश्यतेऽपीत्यपरो विशेषः। दिङ्नाग इति तत्रभवतः कवेरभिख्या। तस्य कृतिः रचना कुन्दमाला नाम तदाख्यं रूपकम्। 'कुन्दं माध्यम्'—इत्यमरः। माघे भवं पुष्पम्। 'माध्यः कुन्दः कुरुण्टकः'—इति रत्नकोषात् पुंस्त्वमपि। कुन्दानां माला, कुन्दसंज्ञक कुसुमैर्ग्रथिता स्रगित्यर्थः। तामधिकृत्य कृतो ग्रन्थोऽपि कुन्दमाला 'अधिकृत्य कृते ग्रन्थे' (४। ३। ८७) इति सूत्रेण अण्, तस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति वार्तिकेन लोपः। सा त्वया कुशीलवेन प्रयोक्तव्या अभिनेया इति। तद्यावत् अस्य सन्दर्भस्य प्रबन्धस्य। संदृभ्यते संग्रथ्यते विरच्यते इति, प्रबन्धो रचना। प्रयोगसाचिव्यविधायिनीं प्रयोगः अभिनयः तस्य तत्र वा साचिव्यं सहकारित्वं तस्य विधायिनीं विधात्रीं कारिणीम् आर्यां निजपत्नीं नटीमित्यर्थः आहूय समाकार्य रङ्गभूमिं नाट्यशालाम् अवतरामि प्रविशामि।

नेपथ्यं वेषभूषापरिधानादिकृते रंगभूमौ कोष्ठकम्।

वेषस्थली नेपथ्यमिष्यते'—इति।

( इतः इतः ) इति सम्भ्रमे द्विरुक्तिः। सम्भ्रमश्च स्वामिन्या आर्यायाः सीतायाः सञ्चारे युक्तः। यथाहुः—

विवादे विस्मये हर्षे खेदे दैन्येऽवधारणे।
प्रसादने सम्भ्रमे वा द्विस्त्रिरुक्तिर्न दुष्यति॥ इति।

अवतरतु अवरोहणं करोतु आर्या मान्या। "कर्त्तव्यमाचरन् कार्य्यमकर्त्तव्य-

सू—अये कोनु खल्वयमार्यासमाह्वानेन सहायमिव मे सम्पादयति। (विलोक्य) कष्टं भोः। कष्टं भोः। अतिकरुणं वर्तते—

लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन।
निर्वासितां जनपदादपि गर्भगुर्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम्॥ ३॥

(इति निष्क्रान्तः)

## स्थापना.

---

मनाचरन्। तिष्ठति प्रकृताचारे स वै आर्य इति स्मृतः"॥ इति। अपि च,—'कुलं शीलं दया दानं धर्मः सत्यं कृतज्ञता। अद्रोह इति येष्वेतत्तानार्यान् सम्प्रचक्षते॥ इति। स्त्रीत्वादार्या। 'अजाद्यतष्टाप्' (४।१।४)।

अये इति कोमलामन्त्रणे। कोनु खलु कः पुनः, अयम् एष जनः स्यात् यः आर्यासमाह्वानेन आर्यायाः नट्याः समाह्वानेन समाकारणेन सहायं साहाय्यम् इव मे मम सम्पादयति करोति। अहमेवार्यां स्वपत्नीं माह्वातुकामआसम्, अप्रवृत्तेऽपि मय्याह्वानकर्मणि आर्यासमाह्वानकारी जनो नूनं मम साहाय्यकारी। सूत्रधारस्य मनोगतं भाव मववुध्येव कश्चिदाह्वानकर्मणि प्रवृत्तः ननु परोक्षदर्शी सहायश्च को वा स्यादिति 'को नु खलु' इत्येतैः पदैः सम्भूय द्योत्यते। विलोक्य दृष्ट्वा कष्टं भोः कष्टं भोः अत्याहितम्। खेदप्रकर्षवशाद् द्विरुक्तिः। अतिकरुणं वर्तते पुरोवर्ति यद् दृश्यं दृष्टिपथमेति तत्परमखेदावहमिति तात्पर्यम्। तदेव दर्शयति लङ्केश्वरस्येति—

लङ्केश्वरस्य भवने सुचिरं स्थिता इति लोकपरिवादभयाकुलेन रामेण जनपदादपि निर्वासितां गर्भगुर्वीं सीताम् अयं लक्ष्मणः वनाय परिकर्षति इति योजना।

लङ्काया ईश्वरः अधिपतिः तस्य रावणस्येत्यर्थः भवने मन्दिरे 'निशान्तवस्त्यसदनं भवनागारमन्दिरम्'—इत्यमरः। सुचिरं दीर्घकालं व्याप्येत्यर्थः स्थिता न्युषितवती। अथ च रामेण प्रतिगृहीतेतिशेषः। इति हेतोः लोकस्य परिवादः जनापवादः। 'लोकस्तु भुवने जने'—इति विश्वः। तस्माद् यद् भयं तेन आकुलेन रामेण। 'तृतीया तत्कृतार्थेन गुणवचनेन' (२।१।३०) इति कृतेऽर्थे तृतीया समासः। तस्मात् अपि जनपदः स्वायत्तप्रदेशः स्वविषयः इति यावत्, किमु वक्तव्यं स्वप्रासादादिति अपिना द्योत्यते। जनः पदं वस्तु यत्र। 'भवेज्जनपदो जानपदोऽपि जनदेशयोः'—इति विश्वमेदिन्यौ। निर्वासितां निष्कासितां गर्भगुर्वीं गर्भेणगुर्वीं भाराक्रान्तेति तां तथोक्ताम्। 'वोतो गुणवचनात् (४।१।४४) इति ङीप्। सीतां मैथिलीं अयं पुरोदृश्यमानः लक्ष्मणः रामानुजः सौमित्रिः वनाय काननं प्रापयितुमित्यर्थः 'वनं प्रस्रवणे गेहे प्रवासेऽम्भसि कानने'—इति हैमः।

'अटव्यरण्यं विपिनं गहनं काननं वनम्'—इति चामरे पर्यायाः । परिकर्षति त्वरया नयतीति भावः । 'क्रियार्थोपपदस्य'--( १ । ४ । ४४ ) इति क्रियार्थे चतुर्थी । इति इत्थं, अवाणः प्रस्तुतविषयमवतार्य सूत्रधारः निष्क्रान्तः रंगान्निर्यया-वित्यर्थः । स्थापना प्रस्तावनैव स्थाप्यते उपस्थाप्यते आभिमुख्यं प्राप्यते प्रस्तुतो विषयः नाट्यप्रतिपाद्यवस्तु अनयेति स्थापना । अयं त्विह विवेकः, आमुख पर्याया-यांप्रस्तावनायां सूत्रधारेण सह नट्याः पारिपार्श्विकस्य विदूषकस्य वा मिथः संभाषणं भवति । यथाह दर्पणकारः--

'नटी विदूषको वाऽपि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥" इति ।

अन्योऽपि कश्चनाह--

'नटो विदूषको वापि नटी वा पारिपार्श्विकः ।
एषु द्वौ वा त्रयो यत्र सर्वे वा स्थापकान्विताः ॥
आमुखं तद्विजानीयान्नाम्ना प्रस्तावनां च ताम्' ॥ इति ।

अत्र लिङ्गवचननिर्देशो न विवक्षितः । तथासति—सहितः, सहितौ, सहिताः, सहिता, सहिते वा, सूत्रधारेण सहितो नटो विदूषकः पारिपार्श्विको वा, सहिता वा नटी, सहितौ वा नटीनटौ वा नट विदूषकौ वा नटपारिपार्श्विकौ वा नटीविदूषकौ वा नटीपारिपार्श्विकौ वा विदूषक पारिपार्श्विकौ वा, सहिता नटनटीविदूषकाः नटीविदूषक-पारिपार्श्विका वा नट विदूषकपारिपार्श्विका वा, नटनटीविदूषकपारिपार्श्विका वेति निर्ग-लितोऽर्थः । स्थापनायां पुनः सहचरस्याभावात्केवलं प्रस्तुतविषयः उपक्षिप्यते नतु सम्भाषणं प्रवर्त्तते इति प्रतीमः । यद्यपि केचन स्थापनाप्रस्तावने पर्याये इत्याहुः, तथापि तदुक्तिं स्तयोरविवेकमूलैवेति वेदितव्यम् । प्रस्तावना ऽऽमुखं च साधारणं नाम, स्थापना तु तद्विशेष इति भावः ।

आलंकारिकैः पञ्चभिदाः प्रस्तावनायाः प्रदर्शिताः । तथाहि दर्पणे—

'उद्धात्यकः कथोद्धातः प्रयोगातिशयस्तथा ।
प्रवर्त्तकावगलिते पञ्च प्रस्तावना भिदाः' ॥ इति ।

इयं च प्रस्तावना प्रयोगातिशयरूपा दर्पणकारेण स्वयं प्रदर्शिता । तथाहि--

'यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्च प्रयोगातिशयस्तदा ॥

यथा कुन्दमालायां—'(नेपथ्ये) इत इतोऽवतरत्वार्या । सूत्रधारकः—कोऽयं

( ततः प्रविशति रथाधिरूढा सीता सारथिर्लक्ष्मणश्च )

ल—इत इतोऽवतरत्वार्या। एतानि गहनतरुलता प्रतान संरुद्धतया रथप्रवेशायोग्यानि भागीरथीतीरकाननानि। तदवतरत्वार्या।

सी—वच्छ, लक्खण, अदिप्पउत्ततुरंगमवेअकंपिअदेहा एत्थ ण पारेमि संठादुं, किं प्रण ओदरिदुं।

वत्स, लक्ष्मण, अतिप्रवृत्ततुरंगमवेगकम्पितदेहा अत्र न पारयामि संस्थातुं, किं पुनरवतरितुम्।

---

खलु आर्याह्वानेन साहायकं मे सम्पादयति ? ( विलोक्य ) कष्टमति करुणं वर्तते।

लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन।

निर्वासितां जनपदादपि गर्भगुर्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम्॥

इत्यत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयम्' इति सीता लक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः" । इति ।

ततः सूत्रधारनिर्गमनानन्तरं, प्रविशति प्रवेशं करोति रंगभूमाविति भावः, रथाधिरूढा रथमधिरूढा रथे याने स्थिता । 'याने चक्रिणि युद्धार्थे शताङ्गः स्यन्दनो रथः'—इत्यमरः। सीता जानकी, सारथिः रथनियन्ता सुमन्त्रः, एतानि पुरोवर्तीनि, भागीरथीतीरकाननानि भागीरथी गंगा। 'गंगा विष्णुपदी जह्नुतनया सुरनिम्नगा। भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि' ॥ इत्यमरः। भगीरथस्येयम्, 'तस्येदम्' ( ४ । ३ । १२० ) इत्यण्। तस्याः तीरे तटे । 'कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु'–इत्यमरः । काननानि वनानि । गहनतरुलताप्रतानसंरुद्धतया गहनः यस्तरूणां लतानां च प्रतानः तेन सम्यक् रुद्धतया, गहनं कलिलं दुष्प्रवेशमित्यर्थः। 'गहनं वन दुःखयोः। गह्वरे कलिले चापि'–इति विश्वहैमौ । तरुः शाखी वृक्ष इति यावत्। 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः'—इत्यमरः। लता वीरुद्। 'लता प्रतानिनी वीरुद्गुल्मिन्युलप इत्यपि'–इत्यमरः। प्रतानः शाखापत्रसंचयः। लता प्रतानयोर्मिलितयोः प्रायेण प्रयोगः। यथा रघुवंशेऽपि—

'लताप्रतानोद्ग्रथितैः स केशैरधिज्यधन्वा विचचार दावम्'। इति

संरुद्धता निविड़ता। दुष्प्रवेशो यो वृक्षलताजनितः शाखापत्रनिचयः तेन निविड़भावंगततयेत्यर्थः। रथप्रवेशायोग्यानि रथस्य प्रवेशः सञ्चारः तस्य अयोग्यानि असह्यानि। येषु रथसंचारो दुःशक इति भावः। सन्तीत्यध्याहार्यम्। तत् तस्मात् अवतरतु आर्या अत्रैवावरोहतु पूज्या ममाग्रजस्य जाया स्वामिनी च॥

वत्स, पत्युः कनिष्ठो भ्राता सुतसम इति वात्सल्यवशात् सोऽपि वत्सः,

ल—सुमन्त्र, ननु तुरंगमनियमने क्रियतां यत्नः ।

सु—क्रियमाणमपि यत्नमतिवर्त्तन्ते गान्धर्वप्रिया वाजिनः । तथा हि—

अमी पतद्भिः श्रवणेष्वमन्द्रं विकृष्यमाणाः कलहंसनादैः ।
अनाश्रवाः प्रग्रहसंयमस्य तुरंगमास्तूर्णतरं प्रयान्ति ॥ ४ ॥

---

तत्सम्बोधनम् । यथाह दर्पणे—'वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्यः' । इति । 'पुत्रादौ तर्णके वर्षे वत्सो वत्सं तु वक्षसि'—इति रुद्रः । अतिप्रवृत्त तुरंगम वेगकम्पितदेहा अति अत्यर्थं भृशं प्रवृत्ताः धावने व्यापृताः ये तुरंगमाः शीघ्रगामिनोऽश्वाः तेषां वेगेन जवेन कम्पितो देहः विग्रहः शरीरं यस्याः सा । अहमित्यध्याहार्यम् । तुरेण त्वरया गच्छति तुरगः, तुरंगः, तुरंगमश्च । 'घोटके पीतितुरग तुरंगाश्व तुरंगमाः'–इत्यमरः । 'वेगः प्रवाह जवयो रपि'–इति च । 'गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ कायो देहः'–इति चामरः ।

अत्र अस्मिन् काले न पारयामि शक्नोमि संस्थातुं सम्यक्तया ऽवस्थातुं किं पुनः अवतरितुं अवरोढुं तुरंगमपुंगवेषु महता रयेण विषमे पथि प्रधावत्सु तैरुह्यमाने रथे समवस्थिता जनकनन्दिनी कथं नाम प्रभवेदधो गन्तुं यदाऽऽसौ न समर्था तत्र सुविश्रब्धं स्थातुमपि । 'एत्थ' इति प्राकृतपदस्य पर्यायः 'अत्र' इति पदं प्रथमसम्पादकद्वयेन परित्यक्तं चिन्तनीयम् ।

ननु इहानुज्ञाने । 'प्रश्नावधारणानुज्ञानुनयामन्त्रणे ननु' इत्यमरः । तुरंगमानां अश्वानां नियमनं वल्गाद्याकर्षणपुरस्सरं वशीकरणं तत्र क्रियतां आचर्यतां यत्नः श्रमः । अश्वान् शनैश्चालयितुं प्रयत्न आस्थेय इत्यर्थः । क्रियमाणमपि आधीयमानमपि । 'अपि सम्भावनाप्रश्नशंकागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च ॥' इति विश्वः । यत्नं प्रयत्नं उद्योगं अतिवर्तन्ते समुल्लंघ्य प्रवर्त्तन्ते । नितरां नियम्यमानाः अपि प्रसभं जवेन धावन्त्येवेत्यर्थः । के ? वाजिनः अश्वाः । अवश्यं वजति । 'वज गतौ' ( भ्वा० प० से० ) । 'आवश्यका' (३ । ३ ।१७०) इति णिनिः । यद्वा वाजाः पक्षा अभूवन् यस्य । इनिः ( ५ । २ । ११५ ) । 'वाजी वाणाश्वपक्षिषु'—इति मेदिनी । हेतुगर्भविशेषणं 'गान्धर्व प्रियाः' इति गान्धर्वं प्रियं येषां ते वाजिनः । 'गन्धर्वस्तु नभश्चरे । पुंस्कोकिले गायने च मृगभेदे तुरंगमे । अन्तराभवदेहे च'––इति हैमः । गंधं सौरभमर्वति । 'अर्व गतौ' ( भ्वा० प० से० ) 'कर्मण्यण्' ( ३ । २ । १ ) । शकन्ध्वादिः (वा० ६।१।६४) 'प्रज्ञाद्यणि' ( ५ । ४ । ३८ ) । दीर्घादिरपि दृश्यते । तथा च शब्दार्णवः । 'अपि गन्धर्ब गान्धर्ब दिव्यगायनगातवः'—इति । गान्धर्वं गानं राग इति यावत्, तत् प्रियं येषां ते गान्धर्वप्रिया वाजिनः । तदेव विशिष्य प्रतिपादयति अमीतिश्लोकेन—

**ल—सुमन्त्र ! अतिरभसप्रवृत्तवेगत्वादनालक्षितसमविषमास्तुरंगमा गंगाप्रपाते स्यन्दनं विनिपातयन्ति, तत् सर्वात्मना क्रियतां यत्नः।**

**सु—( रज्ज्वाकर्षणमभिनयति )**

---

अमी तुरङ्गमाः श्रवणेषु अमन्द्रं पतद्भिः कलहंसनादैः
विकृष्यमाणाः प्रग्रहसंयमस्य अनाश्रवाः तूर्णतरं प्रयान्ति।

अमी इमे पुरोवर्तिनः तुरंगमाः हयाः, श्रवणेषु श्रोत्रेषु कर्णेष्विति यावत्। श्रवणं श्रूयते अनेन, करणेल्युट्। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः'—इत्यमरः। अमन्द्रं अगम्भीरं यथा तथेति क्रियाविशेषणम्, 'मन्द्रस्तु गम्भीरे'—इत्यमरः। हंसानां कलनादित्वात्तत्कूजितस्यामन्द्रत्वं बोध्यम्। पतद्भिः कर्णविवरमाविशद्भिः कलहंसनादैः कलहंसानां कादम्बानां नादैः स्वनैः। कलो मधुर वाक् हंसः कलहंसः। 'कादम्बः कलहंसः स्यात्'—इति। 'शब्दे निनाद निनदध्वनिध्वानरवस्वनाः'—इत्युभयत्रामरः। विकृष्यमाणाः विशेषेण भृशमित्यर्थः आकृष्यमाणाः, प्रग्रहसंयमस्य प्रग्रहः प्रग्राहः अश्वरश्मिः, तेषां तैर्वा संयमः नियमनं वशीकरणं तस्य। 'प्रग्रहस्तु तुलासूत्रे वन्द्यां नियमने भुजे। हयादिरश्मौ रश्मौ च सुवर्णे हलिपादपे'—इति विश्वः। प्रगृह्यते इति। 'प्रेवणिजाम्' ( ३ । ३ । ५२ ) 'रश्मौ च' ( ३ । ३ । ५३ ) इति वा घञ्। पक्षे 'ग्रहवृद' ( ३ । ३ । ५८ ) इत्यप्। तथा चामरः 'तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि च'—इति। अनाश्रवाः अविधेयाः प्रवृत्तिनिवृत्त्योर्विधातुमशक्याः, न वचनेस्थिताः इति यावत्। 'आश्रवो वचनस्थिते। प्रतिज्ञायां च क्लेशे च'—इति हैमः। तादृशाः सन्तः तूर्णतरं क्षिप्रतरं प्रयान्ति धावन्ति ॥ ४ ॥

अतिरभसेन प्रवृत्तो यो वेगः तस्यभावः तस्मात् अत्यर्थं रभसेन हर्षेण प्रवृत्तः संजातः वेग रयः। 'रभसो वेगहर्षयोः'—इति विश्वः। कलहंसनादकृतेऽश्वानां हर्षोद्रेकः तेन शीघ्रगामिता। अनालक्षितसमविषमाः अनालक्षिताः अपर्यालोचिताः समाः विषमाश्च प्रदेशा यै स्तथाभूताः। यथा समतले तथैव दन्तुरायामपि भुवि धावमानाः इत्यर्थः। तुरंगमाः हयाः गंगाप्रपाते गंगायाः प्रपातः प्रपतत्यस्मिन्निति तस्मिन्, अवसर्पी ( क्रमशो निम्नतां गच्छन् ) भूभागः प्रपातः।

स्यन्दनं रथं। स्यन्दते 'स्यदू प्रस्रवणे' ( भ्वा० आ० से० ) चलनशब्दार्थादकर्मकाद्युच् ( ३ । २ । १४८ )। 'स्यन्दनं तु स्तुतौ नीरे तिनिशे ना रथेऽस्त्रियाम्'—इति मेदिनी! विनिपातयन्ति प्रक्षिपन्ति, तत् तस्माद्धेतोः सर्वात्मना पूर्णतया साकल्येनेत्यर्थः क्रियतां आस्थीयतां यत्नः उद्योगः। अश्व नियमनार्थ मित्यध्याहार्यम्। तथा चोक्तम्, 'अति रभसकृतानां कर्मणामासमाप्ते—

भवति हृदयदाही शल्यतुल्यो विपाकः—इति !

**ल—एष स्थितो रथः, तदवतरतु देवी ।**

**सी—( अवतीर्य परिक्रामति )**

**ल—सुमन्त्र ! दीर्घमार्गपरिश्रान्ता एते तुरङ्गमाः, तद्विश्रामयैतान् ।**

**सु—यदाज्ञापयति देवः ( इति रथमधिरुह्य निष्क्रान्तः)**

**ल—( परिक्रम्य आत्मगतम् ) ।**

**समादिष्टोऽहमार्येण, अथवा स्वामिना--वत्स लक्ष्मण ! देव्याः किल सीतायाः रावणभवनसंस्थानाच्चारित्रं प्रति समुत्पन्नविमर्शानां**

---

रजोः रज्जूणां रश्मेः रश्मीनां वाऽऽकर्षणं अभिनयति नाटयति । रज्ज्वाकर्षणद्वारा घोटकनियमनार्थमुद्युक्तमात्मानं दर्शयतीत्यर्थः ।

अवतीर्य अवतरणं कृत्वा रथादवरुह्येत्यर्थः परिक्रामति परितः क्रामति इतस्ततो व्रजतीत्यर्थः । चिराय रथा रूढानां दीर्घमार्गवशाज्जान्वाकुञ्चनद्वारा खिन्नजङ्घानां रथादवरोहणसमकालमेव निजाङ्गखेदनिवृत्तये परिभ्रमणाचरणं स्वाभाविकम् ।

दीर्घः दैर्घ्ययुतः सुविस्तीर्णः मार्गः पन्थाः । मृज्यते वितृणीक्रियते पादैः । 'मृजू शुद्धौ' ( अ० प० से० ) । मार्ग्यते । 'मार्ग अन्वेषणे' (चु० उ० से० ) वा । 'मार्गो मृगमदे मासे सौम्यर्क्षेऽन्वेषणे पथि'--इति हैमः । तेन परिश्रान्ताः । विश्रामय एतान् विगतश्रमान् सुस्थितान् कुरु ।

देवः स्वामी । 'राजा भट्टारको देवः'–इत्यमरः । कथं पुना रामे राज्यं प्रशासति लक्ष्मणो राजा ? नूनमार्याणां राज्ये बान्धवा न हन्यन्ते सोदर्या न व्यापाद्यन्ते प्रत्युत तथाद्रियन्ते यथा तेऽपि राजसदृशाः प्रकृतिभिः प्रजाभिश्चाविद्यन्ते । यथाह भारविः–

'सखीनिव प्रीतियुजोऽनुजीविनः समानमानान् सुहृदश्च बन्धुभिः ।
स संततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बन्धुताम्'' ॥ इति ।

निष्क्रान्तः रंगभूमितो निर्गत इत्यर्थः ।

सुमन्त्रस्य निष्क्रमणात् पूर्वं पुनारथाधिरोहणं तस्य रथादवरोहणं कविना साक्षाद प्रतिपादित मपि सूचयति । स्वामिनामवरोहणात्पूर्वं सारथीनामवरोहणं आपाततो ज्ञेयम् । भर्तुराज्ञाश्रवणेन दुर्दशामापन्नां जनकनन्दिनीं सम्राज्ञीं न कश्चनाऽप्यवलोकयतु इति सुमन्त्रोऽपि दूरीकृतो लक्ष्मणेनेति रहस्यम्

परिक्रम्य परितोगत्वा । आत्मगतं स्वगतम् । 'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्'—इति दर्पणः । 'यत् अश्राव्यं परस्य श्रवणानर्हम्, खलु, वस्तु इतिवृत्तम्, तत्, इह रूपके, स्वगतम् । अत्र स्वशब्द आत्मशब्दस्याप्युपस्थापकः, तेन क्वचित् 'आत्मगत—'मित्यप्यभिहितं सङ्गच्छते'—इति च तत्र टीकाकृत् ।

**पौराणामन्यादृशाः प्रलापाः प्रवर्त्तन्ते, तन्न शक्नोमि सीतामात्रस्यं कृते शरच्चन्द्रनिर्मलस्येक्ष्वाकुकुलस्य कलङ्कमुत्पादयितुम् । सीतया चाहं गर्भिणीभावसुलभेन दोहदेन भागीरथीदर्शनं प्रार्थितः । तस्मात् त्वमनेन गङ्गागमनव्याजेन सुमन्त्राधिष्ठितं रथमारोप्य कस्मिंश्चिद्वनोद्देशे परित्यज्य निवर्तस्व--इति । तदहमपि स्वजनविस्रम्भनिर्विशङ्कां देवीमादाय गृहहरिणीमिव वध्यभूमिं वनमुपनयामि ।**

---

समादिष्टः अनुज्ञातः । आर्येण अग्रजेन रामेणेत्यर्थः । 'आर्येति चाग्रजः'—इति दर्पणः । स्वामिना प्रभुणा रामेण । 'आर्ये'ति पदेनैव गतार्थत्वेऽपि 'स्वामी'ति पदस्य पुनरुपादानं रामलक्ष्मणयोः परस्परं सम्बन्धो न यौनः प्रत्युत नैतिक एवादृतः, एवं च सीतापरित्यागविषये रामेण अनुजानामपि सम्मति र्नाकाङ्क्षिता केवलं सीतां वनं प्रापयेत्याज्ञप्तामिति लक्ष्मणचेतसि वर्तमानं महान्तं खेदभारं ध्वनयतीति सुधीभिरेवाकलनीयम् । देव्याः कृताभिषेकायाः राममहिष्याः सीतायाः । 'देवी कृताभिषेकायां तेजनीस्पृक्कयोरपि'—इति हेमचन्द्रः । रावणभवनसंस्थानात् रावणस्य लङ्केश्वरस्य भवनेगेहे संस्थानं निवसनं तस्मात् । चारित्रं चारित्र्यं चरित्रमेव चारित्रं । स्वार्थे अण् । प्रति समुद्दिश्येत्यर्थः । सीतादेव्याश्चारित्र्यविषये इति भावः । समुत्पन्नविमर्शानां समुत्पन्नः संजातः विमर्शो विचारः शंकेति यावत्, तेषाम्, पौराणां पुरे भवाः अयोध्यापुरवासिनः तेषाम्, 'तत्र भवः' ( ४ । ३ । ५३ ) इत्यण् । 'पौरं त्रिषु पुरोद्भूते कतृणे पुंनपुंसकम्'—इति मेदिनी । अन्यादृशाः भिन्नप्रकाराः, अस्मत्तो विरुद्धाः देव्यां पापावेशप्रतिपादकाः इत्यर्थः । प्रलापाः अनर्थकानि वचांसि । 'प्रलापोऽनर्थकं वचः'—इत्यमरः । प्रवर्त्तन्ते जायन्ते । तत् तस्मात् । सीतामात्रस्य केवलं सीतायाः । 'अल्पे च परिमाणेस्यान्मात्रं कार्त्स्न्येऽवधारणे'—इत्यमरः । गीयते अनया वा माति मिमीते वा । 'मा माने' ( अ. प. अ. ) । 'माङ् माने' ( जु. आ. अ. ) वा 'हुयामा—' ( उ०. ४ । १६८ ) इति त्रन् । कृते हेतोः । शरच्चन्द्रनिर्मलस्य शरदि शरदृतौ यश्चन्द्रः शीतदीधितिः तद्वत् निर्मलः, मलरहितः, विमलस्य । वसन्ते ग्रीष्मे च वात्यानां कृते धूलिधूसरा दिशः, प्रावृषि जलदावलीततं नभः, हेमन्ते शिशिरे च नीहारेणाच्छन्नं व्योम, तस्मात्तेषु शीतकिरणस्य न तावती सुषमा लक्ष्यते । शरदि पुनर्धारासारैः धौताननानां दिग्वधूनां वर्षावात्यानीहाराद्युपप्लववर्जितानां भालतिलक इव नितरां शोभते भगवान् हिमद्युतिरिति शरच्चन्द्रस्य युक्तं समुपादानम् । शरच्चन्द्रावदातस्येत्यर्थः । इक्ष्वाकु कुलस्य इक्ष्वाकुः कश्चन पूर्वपुरुषः सम्मान्यः सूर्यवंश्यो नृपः, तस्य कुलं वंशः तस्य । कलङ्कं अपवादम् । 'कलङ्कोऽङ्केऽपवादे च कालायसमलेऽपि च'—इति मेदिनी । उत्पादयितुं जनयितुम् ! प्रेयसी जनकतनया यद्यपि प्राणेभ्योऽपि गरीयसी, तथापि विकर्तनकुलस्य यशोराशिः सुनरां प्रियतर इति सर्वथाऽपि रक्षणीयोऽसौ कलङ्कपङ्कात् ।

**सी-वच्छ लक्खण ! अदिसइदगब्भभरुव्वहणपरिस्संता ण प्पहवंति मे चलणा। ता अग्गदो भविअ णिइवेहि कीसदूरे भअवई भाईरई वट्टदित्ति।**

---

**वत्स लक्ष्मण ! अति शयितगर्भभरो द्वहनपरिश्रान्तौ न प्रभवतो मे चरणौ। तदग्रतो भूत्वा निवेदय कियद्दूरे भगवती भागीरथी वर्तत इति।**

---

'यशोधनानां हि यशो गरीयः' इति भावः। गर्भिणीभावसुलभेन अन्तर्वत्नीदशायां स्वभावसिद्धन दोहदेन अभिलाषेण। 'दोहदो गर्भलक्षणे। अभिलाषे तथागर्भे'—इति हैमः। भागीरथी दर्शनं भागीरथ्याः गंगायाः दर्शनं। 'गंगा विष्णुपदी जन्हु-तनया सुरनिम्नगा। भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि'। इत्यमरः। प्रार्थितः याचितः। गंगागमनव्याजेन गंगांप्रति गमनच्छलेन। सुमन्त्राधिष्ठितं सुमन्त्रसंज्ञकेन सारथिना सनाथितम्। आरोप्य अधिष्ठाप्य। सीतामिति शेषः। वनोद्देशे वनप्रदेशे। परित्यज्य विहाय। निवर्त्तस्व—प्रत्यावर्तस्व। सीता स्वयमेव भागीरथीतीरतपोवनेषु विहर्त्तुकामा किलास्ते। तां नीत्वा तत्रैव च त्यक्त्वा पुनरागन्तव्यमिति निष्ठुरस्य रामस्य लक्ष्मणं प्रति वचः। तदेवानुस्मर्यते लक्ष्मणेन। इति शब्दः समाप्तौ। 'इति हेतु प्रकरण प्रकर्षादि समाप्तिषु'—इत्यमरः। स्वजनविस्रम्भनिर्विशङ्कां स्वस्य जनः स्वजनः बान्धवः, इह देवरो लक्ष्मणः, तस्मिन् यो विस्रम्भः विश्वासः। 'समौ विस्रम्भविश्वासौ'—इत्यमरः। तेन निर्विशङ्का शंकारहिता ताम्। गृहहरिणी गृहसम्बन्धिनीं मृगीं, याहि गृहे एव समुत्पन्ना संवृद्धा संपुष्टा च, सा यथा विश्वस्ता भवति गृहस्वामिषु। वध्यमूमिं सूनां, महानसस्य कृते यत्र पशवो व्यापाद्यन्ते तत्स्थानमुच्यते। प्रकृते तु वनं कान्तारमेव वध्यभूमिः। उपनयामि प्रापयामि।

अतिशयितगर्भभरो द्वहनपरिश्रान्तौ अतिशयितः अत्यर्थं वृद्धिं गतः पूर्णता-प्रायदशां प्राप्त इत्यर्थः यो गर्भः भ्रूणः। 'गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकण्टके'—इति विश्वमेदिन्यौ। तस्य यो भरः भारः तस्य उद्वहनं धारणं तेन परिश्रान्तौ परितः सर्वतः श्रमं गतौ मे मम चरणौ न प्रभवतः समर्थौ स्तः। दूरे गन्तुं मम सामर्थ्यं नास्तीत्यर्थः। अग्रतो भूत्वा मम पुरोवर्ती सन् निवेदय कथय सम्यग्दृष्ट्वा इति भावः, कियद्दूरे कियति दूरे दूरवर्तिनि प्रदेशे भगवती पावनपयःपूरैश्वर्यशालिनी ऐश्वर्यादिषट्कसम्पत्तियुता च। तथाहि

ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" ॥

भागीरथी वर्तते विद्यते इति।

'भगं श्री-योनि-वीर्येच्छा-ज्ञान-वैराग्य-कीर्तिषु।
माहात्म्यैश्वर्य-यत्नेषु धर्मे मोक्षे च ना रवौ' ॥ इति विश्वमेदिन्यौ।

ल--नन्वासन्नैव भगवती भागीरथी, तदलं विषादेन, संप्राप्ता एव वयम्। पश्य--

आदाय पङ्कजवनान्मकरन्दगन्धान्।
कर्षन्नितान्तमधुरान् कलहंसनादान्।
शीतास्तरङ्गकणिका विकिरन्नुपैति
गंगानिलस्तव सभाजन काङ्क्षयेव ॥ ५ ॥

---

सीता पद्भ्यां चलितुमक्षमा, रथाधिरोहणेऽप्यसमर्था। ईदृश्यां दशायां तस्या निर्वासनं अत्यन्तकरुणास्पदमिहालिखितं प्रतिभाशालिना कविवर्येण। कविना दिङ्नागेना लिखितमिहत्यं करुणरसोद्रेकमाकलय्ययत्सत्यं 'अपि ग्रावा रोदित्यपि द्रवति वज्रस्य हृदयम्'-इति भवभूतिवचः कार्तार्थ्यं व्रजति!

नन्विहावधारणे। 'ननु प्रश्नेऽप्यनुनयेऽनुज्ञानेऽप्यवधारणे। आमन्त्रणे चापि ननु'-इति विश्वः। आसन्नैव आसन्ना एव अदूरवर्तिनीत्यर्थः। अलं कृतं' अलमिह वारणार्थकम्। अलं भूषणपर्याप्तिशक्तिवारणवाचकम्'-इत्यमरः। विषादेन उद्वेगेन। संप्राप्ताः परापतिताः।

आदायेति—गंगानिलः पङ्कजवनात् मकरन्दगन्धान् आदाय नितान्तमधुरान् कलहंसनादान् कर्षन् शीताः तरङ्गकणिकाः विकिरन् तव सभाजनकाङ्क्षया इव उपैतीत्यन्वयः।

गंगानिलः गंगायाः गंगासम्बन्धी अनिलः वायुः यस्यां दिशि गंगा प्रवाह स्ततः प्रवहन् पवनः इत्यर्थः। 'श्वसनः स्पर्शनो वायुर्मातरिश्वा सदागतिः। पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः'। इति वायु नामसु पठितोऽमरसिंहेन। पङ्कजवनात् पंके कर्दमे जातं पङ्कजं कमलं तस्य वनं निलयः तस्मात् 'क्लीबं स्यात् कानने नीरे निवासे निलये वनम्''। इति रभसः। कमलाकरादित्यर्थः। मकरन्दगन्धान् मकरन्दः पुष्परसः। तस्य गन्धान् आमोदान्, सौरभानिति यावत्। 'गन्धः सम्बन्धलेशयोः। गन्धकामोदगर्वेषु'--इति हैमः। तथाच पण्डितराजो जगन्नाथः--

'आमोदानथ हरिदन्तरेषु नेतुं नैवान्यो जगति समीरणात्प्रवीणः'॥ इति।

आदाय उपाहृत्य। नितान्तमधुरान् नितान्तं अत्यन्तं मधुरान् माधुर्ययुक्तान् हृद्यानिति यावत्, कलहंसनादान् कलहंसानां स्वनान् कर्षन् आत्मना सह न यन्, शीताः शैत्ययुक्ताः तरङ्गकणिकाः तरङ्गेभ्यः समुत्पद्यमानाः सूक्ष्माः जलकणाः पृषताः इति यावत्। 'पृषन्ति विन्दुपृषताः पुमांसो विप्रुषः स्त्रियाम्'—इत्यमरः। 'लवलेशकणाणवः' इत्यमरेण कणानामेव सूक्ष्मत्वं प्रदर्शितम्। ततोऽप्यधिक सौक्ष्म्यप्रतिपादनाय स्त्रीत्वं 'कणिकाः' इति। विकिरन् विक्षिपन्। शत्रन्तप्रयोगः 'कॄ विक्षेपे' इत्येतस्य धातोः। सभाजन काङ्क्षया सभाजनं आनन्दनम्। 'अथ द्वे

**सी—( स्पर्शं नाटयति ) संपदं जणणीकरप्फरिससुहसीअलस्स भाईरईतरंगमारुदस्स परिसेण परिस्समस्स विअ पावस्स परिक्खओ जाओ, तह वि दोहदकुदूहलं गंगावगाहणे मं समुस्साहेदि । ता इमादो तडप्पपादादो जह परिस्संता ओदरामि तह आदेसेहि मे मग्गम् ।**

---

**साम्प्रतं जननीकरस्पर्शसुखशीतलस्य भागीरथीतरङ्गमारुतस्य स्पर्शेन परिश्रमस्येव पापस्य परिक्षयो जातः । तथापि दोहदकौतूहलं गङ्गावगाहने मां समुत्साहयति । तदस्मात्तटप्रपाताद्यथा परिश्रान्तावतरामि तथादेशय मे मार्गम् ।**

---

'आनन्दनसभाजने । आप्रच्छन्नम्'—इत्यमरः । तस्य काङ्क्षा स्पृहा । 'इच्छा काङ्क्षास्पृहेहातृड्वाञ्छा लिप्सा मनोरथः'—इत्यमरः । उपैति उपागच्छति । यथा कश्चित्स्वप्रियस्य समुपागतस्य स्वागतकरणाय परिमलयुतान् कुसुमसारान् (इत्रादिसंज्ञकान्) आदाय तौर्यत्रिकादि वाद्यनादपुरस्सरं कुसुमसारधानीतः तद्विप्रुषः प्रक्षिपन् समुपैति तद्वत् गंगानिलः सीतायाः स्वागताय मकरन्दगन्धान् आदाय कलहंसनादपुरस्सरं शीता जलकणिका विक्षिपन् समुपैतीति भावः ॥ ५ ॥

साम्प्रतम् इदानीम् । जननीकरस्पर्शसुखशीतलस्य जनन्याः मातुः करः हस्तः जननीकरः तस्य यः स्पर्शः, सुखयतीति सुखः, जननीकरस्पर्श इव सुखः जननीकरस्पर्शसुखः स चासौ शीतलश्च तस्य भागीरथीतरङ्गमारुतस्य भागीरथ्यास्तरङ्गाः गंगायाः महोर्मयः तेषां सम्बन्धी यो मारुतः पवनः तस्य, भागीरथीतरङ्गसम्पर्काच्छीतलस्य वायोरित्यर्थः । स्पर्शेन हेतुना परिश्रमस्येव पापस्य यथा परिश्रमस्य तथैव पापस्य पातकस्यापि । परिक्षयः नाशः । जातः संवृत्तः । दीर्घमार्गावगाहनेन श्रान्ताङ्गानां जनानां शीतशीतः पवमानः पावनः पवनः सुखकर इति सर्वसंवेद्यं विशेषतस्तु घर्मर्तौ । गंगामारुतस्य स्पर्शेन पापस्यापि परिक्षयप्रतिपादनं भक्त्युत्कर्षं द्योतयति । उक्तं च—

'गंगा गंगेति यो ब्रूयाद् योजनानां शतैरपि ।

मुच्यते सर्वपापेभ्यो विष्णुलोकं स गच्छति' ॥ इति

तथापि तथासत्यपि निवृत्तेऽध्वपरिखेदे संवृत्ते च पापनिचयक्षयेऽपीति भावः । दोहदकौतूहलं दोहदकृतं कुतूहलम् । गङ्गावगाहने गंगायामवगाहनं स्नानं तस्मिन् गंगायां स्नातुमित्यर्थः । मां सीतां समुत्साहयति प्रेरयति । चलचित्ता गर्भिण्यः, तासामभिलाषास्तीव्राः विचित्राश्च, दीर्घाध्वखिन्नया तया न सत्वरं शीतजले गात्रविक्षेपः कार्यः, यथेष्टं तत्र स्थितया प्रत्यहं गंगायां द्विस्त्रिर्वा स्नातुं शक्यते इत्युभयमप्यविगणय्य तदानीमेव स्नातुकामा सीता नूनं दोहदेनैव प्रवर्त्तिता । तत् तस्मात् ।

ल—( निर्दिश्य ) अत्यन्तविश्रान्तमनुष्यसंचारतया दुरवतारा-स्तटप्रदेशाः । तस्मात् प्रपदमास्थाय सम्यक्—

वामेन नीवारलतां करेण जानुं समालम्ब्य च दक्षिणेन ।
पदे पदे मे पदमादधाना शनैः शनैरेतु मुहूर्त्तमार्या ॥ ६ ॥

---

अस्मात् तटप्रपातात् यथा येन प्रकारेण परिश्रान्ता अध्वश्रमयुक्तापि सती अवतरामि अधस्तात् स्रोतः प्रति प्रापयाम्यात्मानामिति भावः । तथादेशय संदर्शय मे मम मार्गं पन्थानम् । अध्वश्रमखिन्ना मा नाम पयसि पतेयमिति समीचीनेन मार्गेण मां गंगाप्रवाहं प्रति नयेतिभावः । 'एतर्हि सम्प्रतीदानीमधुना साम्प्रतं तथा'—इति, 'कौतूहलं कौतुकं च कुतुकं च कुतूहलम्—इति चामरः ।

निर्दिश्य निर्देशं कृत्वा, 'हस्तेने' ति शेषः । अत्यन्तं सर्वथा विश्रान्तः विरतः मनुष्याणां सञ्चारः तस्य भावः तया, निर्जने प्रदेशेऽस्मिन् मनुष्यसंचारो दुर्लभ इत्यर्थः । अथवा अत्यन्तम् अत्यधिकं विश्रान्तानां विशेषेण-परिश्रान्तानां मनुष्याणां सञ्चारतया । येऽपि गंगास्नानार्थमत्रागच्छन्ति तेऽत्रागच्छन्तः दीर्घाध्वखिन्ना जायन्ते इतिभावः । अत्यन्तं विश्रान्तः यः सीतारूपोजनस्तस्य संचारतया वा । अविश्रान्तो लक्ष्मणो बलवत्त्वात्, तदर्थं ये तटप्रदेशा न दुरवतारास्त एव विश्रान्तायाः सीतायाः कृते दुरवताराः सम्पन्ना इत्यर्थः । दुरवताराः दुःखेन अवतरितुं योग्याः । तटप्रदेशाः तीरप्रदेशाः, कूलासन्नानि स्थानानीति यावत् । तस्मात् कारणात् । प्रपदं पादाग्रमास्थाय आश्रित्य सम्यक् समीचीनतया—। 'पादाग्रे प्रपदम्'—इत्यमरः ।

वामेन करेण नीवारलतां समालम्ब्य दक्षिणेन च करेण जानुं (समालम्ब्य) मे पदे पदे पदमादधाना आर्या मुहूर्त्तं शनैः शनैः एतु ।

वामेन सव्येन करेण हस्तेन नीवारलतां नीवाराणां लताम्, तृणधान्यानां वल्लीम्, समालम्ब्य गृहीत्वा दक्षिणेन सव्येतरेण च हस्तेन जानुम् उरुसंधिं समाश्रित्य मे मम पदे पदे प्रतिपदमित्यर्थः, पदं चरणम्, 'स्वस्य' इति शेषः । आदधाना निक्षिपन्ती आर्या पूज्या भवती मुहूर्तं क्षणं स्वल्पकालायेत्यर्थः शनैः शनैः मन्दं मन्दं न तु त्वरयेत्यर्थः एतु आगच्छतु । 'नीवारास्तृणधान्यानि'—इत्यमरः ॥

स्वभावोक्तिनिपुणस्य कवेः प्रसन्ना गिरां व्यूतयः सुधीभि रास्वादयितव्याः, यासामेवान्यतमं पद्यमिदं 'वामेने'ति । क्रमशो निम्नस्थल्यां संचरतः परिश्रान्तस्य जनस्य सञ्चारप्रकारवर्णनपरं पद्यरत्न मिदं यत्सत्यमपूर्वमिवाभाति । राज्ञीत्वस्य राजत्वस्य च विचारं विहाय योऽपि परिश्रान्तः स निम्नस्थले गच्छन् कथंकारं प्रचलेदिति सर्वथाऽपि स्वाभाविकं वर्णनमिह दृश्यते । इदं त्विह विचारणीयं सीतया वामेन करेणावलम्ब्यमाना नीवारलता कुत्राभूत् किं लक्ष्मणहस्ते तटप्रदेशे वा ? जान्वालम्बनं नीवारलतालम्बनपुरस्सरमिहाभिहितं तच्च सर्वत्र संभवतीति नीवार-

**सी—(यथोक्तमवतीर्य) वच्छ सुं परिस्संतंमि, एतस्सिं पाअवच्छायाए मुहुत्तं उपविसिअ विस्समिस्सं। ( क )**

**ल—यद्भिरुचितं देव्यै ।**

**(सीता उपविश्य विश्रान्तिं नाटयति )**

---

**(क) वत्स ! सुष्ठु परिश्रान्तास्मि; एतस्यां पादपच्छायायां मुहूर्त्तमुपविश्य विश्रमयिष्यामि ।**

---

लतालम्बनस्य सर्वत्र भावित्वं प्रतिपादयितुं तस्याःपुरः सञ्चरतो लक्ष्मणस्य हस्तेऽवस्थितिः स्वीकार्या । सीतायाः श्रान्तायाः पतनं स्वेन कर्त्तव्यं तस्याः परामर्शञ्च वारयितुं नीवारलताया उभयालम्बो नूनं साधीयान् कल्प इति पूर्वपक्षः । नीवारलता तटप्रदेशारोहिणीति वयम् । न च जान्वालम्बनं नीवारलतालम्बनञ्च समकालम् । पूर्वं वामपार्श्ववर्तिन्या नीवारलतायाः सान्निध्ये वामकरेण सीतया साऽऽलम्बितव्या, तदनु जान्वालम्बनं दक्षिणहस्तेन कार्यं यतो दक्षिणपादः प्रथमं प्रसरति मार्गे गर्भिण्याः यस्याः सुतः समुत्पत्स्यते । सुतासमुत्पत्ति दशायां तु वामः पाद इत्यन्यत् । तदनु लक्ष्मणस्य पादचिह्नाङ्किते प्रदेशे स्वपदं सीतया निधेयम् । तदनु च शनैः शनैस्तयाऽऽगन्तव्यं तत्पदाङ्कितस्थले पदमदत्त्वैवेति क्रमः समञ्जसः प्रतिभाति न इति दिक् ।

यथोक्तम् उक्तमनतिक्रम्य, यथा यथा यद्यल्लक्ष्मणः प्रोक्तवान् तथैव तत्तदनुष्ठायेत्यर्थः । अवतीर्य अवतरणं कृत्वा उपरिष्टादधः प्रदेशे स्रोतः समीपं गत्वेत्यर्थः । सुष्ठु शोभनं परिश्रान्तास्मि भृशं परिश्रमो मे सम जनि, तेन चाहं साकल्येन परिश्रान्तास्मीति द्योतनाय सुष्ठु पदमुपात्तम् । 'अतः' इति शेषः । एतस्यम् अमुष्यां पुरोवर्त्तिन्यां पादपच्छायायां पादपस्य वृक्षस्य छायायां मुहूर्त्तं क्षणं यावत्, उपविश्य निषद्य विश्रमयिष्यामि विश्रामं करिष्यामि । अध्वखेदमपनेष्यामीति भावः । पादपः पादैः पिबति, जलं धरातले वर्तमानं स्वमूलेन पादस्थानिनाऽऽधारभूतेन पिबतीति । 'वृक्षो महीरुहः शाखी विटपी पादपस्तरुः'—इत्यमरः ।

यत् अभिरुचितम् अभिरुचि विषयीभूतम् अभीप्सितमित्यर्थः ।

सीता उपविश्य तत्रैव पादपच्छायायां समास्थाय विश्रान्तिं विश्रामं नाटयति रङ्गस्था जनास्तां विश्राम्यन्तीं यथा ऽवधारयेयुस्तथाऽऽत्मानं दर्शयतीत्यर्थः ।

---

१ 'सु' इति पाठस्तु चिन्तनीयः ।

२ इदं त्विह विचारणीयं 'सीता'–इति पदं कोष्ठकस्य बहिः स्यादभ्यन्तरे वा । प्रथमसम्पादकद्वयेन कोष्ठाद् बहिर्धृतं तत्, अस्माभिस्त्वभ्यन्तरे । यत्र पात्रेण किमपि वक्तव्यं तत्र तत्सूचकं चिह्नं सीतादेः 'सी'–इत्यादिकं लेख्यं नात्र तत्समीचीनं प्रतिभाति यतः सीता उपविश्य विश्रान्तिं नाटयति न पुनः 'सी'-(इति किमपि वस्तु विद्यते यदुपविश्य विश्रान्तिं नाटयेदिति स्वकीयमेव पाठं साधीयस्तरमाकलयामः । )

ल—अहो असंहार्यपरिच्छदाः सुकृतिनः। तथाहि—
तरङ्गा वीजन्ते सजलकणिकान् शीतमरुतस्—
तथैते सङ्गीतं दधति कलहंसाः कलगिरः।
सखीवच्छायेयं रमयति परिष्वज्य हृदयं
वने शून्येऽप्यस्मिन् परिजनवती वात्रभवती ॥ ७ ॥

सी—जह भणिदं कुमारेण, सअणमज्झगदाए विअ एत्थ अहिरमदि मे हिअअं। (क)

(क) यथा भणितं कुमारेण, स्वजनमध्यगताया इवात्राभिरमते मे हृदयम्।

अहो इति विस्मये। असंहार्यपरिच्छदाः असंहार्यः परिच्छदो येषां ते अच्छेद्योपकरणाः इत्यर्थः। सुकृतिनः पुण्यवन्तः, शोभनं कृतं कर्म सुकृतं तद्विद्यते एषां ते पुण्यशालिनो जनाः। पुण्यवतां सर्वत्र सुखसाधनान्युपतिष्ठन्ते इति भावः। तदेव विश्लिष्य प्रतिपादयति 'तरङ्गाः' इति—

तरङ्गाः सजलकणिकान् शीतमरुतः वीजन्ते तथा एते कलगिरः कलहंसाः सङ्गीतं दधति। इयं छाया हृदयं परिष्वज्य सखी इव रमयति, अस्मिन् शून्येऽपि वने अत्रभवती परिजनवती वेति योजना।

तरङ्गाः लहर्यः। सजलकणिकान् ह्रस्वाः कणाः कणिकाः, जलस्य कणिकाः जलकणिकाः ताभिः सहितान्। शीतमरुतः शैत्ययुक्तान् मारुतान्। वीजन्ते चालयन्ति। ग्रीष्मे दासीभिः जलार्द्रैर्व्यजनैर्यथा प्रासादे वीज्यतेस्म सीता तथैवात्रापि गङ्गालहरीभिरात्मसम्पर्केण शैत्यमापादितैर्वातैर्वीज्यते इति तात्पर्यम्। तथा एते अमी। कलगिरः मधुररचनाः कलहंसाः कादम्बाः सङ्गीतं 'नृत्तं वाद्यं च गीतं च त्रयं सङ्गीतमुच्यते'—इति। दधति धारयन्ति। प्रासादे सखीभिः सङ्गीतक मनुष्ठीयतेस्म, अत्रापि कलहंसैरिति कर्तृभेदेऽपि सङ्गीतकाव्यवच्छेदः। इयं छाया गङ्गातीरस्थपादपकृतेति भावः, सखी इव परिष्वज्य समालिङ्गय हृदयं चित्तं रमयति आनन्दयति। प्रासादे आलीनां परिरम्भा यथा सुखावहा अभूवन् तथैवात्र पादपच्छाया ऽऽनन्दहेतुरित्यर्थः। अस्मिन् शून्ये विजनेऽपि वने कान्तारे। अत्रभवती पूज्या श्रीमती। परिजनवती परिच्छदवती, सपरिवारेत्यर्थः। प्रासादसुलभं जलार्द्रव्यजनं सखीसङ्गीतकं तासां परिष्वङ्गं च विनापि तज्जनित आनन्दो नात्र दुर्लभ इत्याशयः।

'अहो ही च विस्मये'—इति; 'कादम्बः कलहंसः स्यात'—इति चामरः।

१ सम्पादकयुगलेन 'शयनमध्यगतायाः' इति संस्कृतच्छाया प्रदर्शिता। वने शून्येऽप्यस्मिन् परिजनवती वात्रभवती' त्येतस्य नैतदुत्तरं सङ्गतं प्रतिभाति। तस्मात् 'स्वजनमध्यगतायाः' इत्येवानुवदितव्यं संस्कृतगिरेति वयम्।

ल—( आत्मगतम् ) एषा विश्रान्ता सुखोपविष्टा च देवी, तद्-यमेवावसरो यथास्थितं व्यवसितुम् । ( प्रकाशम् ) ( सहसा पाद-योर्निपत्य ) अयमनवरतप्रवासदुःखभागी निर्लक्षणो लक्ष्मणो विज्ञापयति—स्थिरीक्रियतां हृदयम् ।

सी—( ससम्भ्रमं ) अवि कुसलं अज्ज उत्तस्स ? (क)

(क) अपि कुशलमार्यपुत्रस्य ?

यथा भणितं प्रोक्तं कुमारेण लक्ष्मणेन, 'यदात्थ राजन्यकुमार तत्तथे'त्यर्थः । अस्मिन् शून्येऽपि वने सत्यमेवाहं परिजनवतीति भावः । यतः स्वजनमध्यगताया इव स्वस्य जनः स्वजनः परिचारिकादिः तस्यमध्ये गता स्थिता तस्याः । अत्र अस्मिन् भागीरथीतीरोपान्ते । मे मम हृदयं चेतः अभिरमते अभितो मोदते । विविक्तेऽपीह प्रदेशे परिजनमध्यवर्तिनीवाहं सुखितमात्मानमाकलयामीत्याशयः ।

कथं पुनरूर्मिलाजानिः कुमारव्यपदेशभाक् ? युवराजोऽपि कुमारः । 'युवराजः कुमारः भर्तृदारकः'—इत्यमरः । युवराजत्वं च लक्ष्मणस्य राजावरजत्वपरमिह बोध्यम् ।

आत्मगतं स्वगतम्, अप्रकाशम्, स्वमनसीति यावत् । एषा विश्रान्ता गृहीत-विश्रामा, अतोऽप्रियं वचोऽपि सोढुं समर्था संवृत्तेतिभावः । सुखोपविष्टा सुखेन उपविष्टाऽऽसीना च । अवसरः कालः । यथास्थितं यथा आस्थितं निर्धारितं, रामेण यथादिष्टं कर्त्तुं मया च तद्वश्येन यथा प्रतिपन्नमित्यर्थः । व्यवसितुं समाचरितुम् । प्रकाशं यत्सर्वैं रंगस्थैरात्मव्यतिरिक्तैः पात्रैश्चश्रूयते तदगोपनीयं परस्य यथा तथा विधीयत इति प्रकाशमित्युच्यते नाटके । सहसा अप्रस्तुतमनालक्षितकालं च यथा तथा पादयोः चरणयोः । 'सीतायाः'—इति शेषः । निपत्य नितरां पतित्वा । अयं पुरोगत इत्यर्थः । अनवरतप्रवासदुःखभागी अनवरतं–निरन्तरं यः प्रवासः स्वविषयतो दूरेऽवस्थानं तस्य तेन वा यद् दुःखं कष्टनिचयः तस्मिन् भागो विद्यते यस्य सः । वक्ष्यति च तृतीयेऽङ्के ।

'पूर्वं वनप्रवासः पश्चाल्लङ्का ततः प्रवासोऽयम् ।
आसाद्य मामधन्यं दुःखाद्दुखं गता सीता' ॥ इति

निर्लक्षणः सल्लक्षणरहितः कुलक्षण इति यावत् विज्ञापयति निवेदयति । विज्ञापनस्य स्वरूपमाह 'स्थिरीक्रियतां हृदयम्'—इति रामवचोऽशनिः पुरा निपततीति सुदृढीक्रियतां चित्तम् ।

दशरथे जीवति यो दण्डकारण्ये प्रवासोऽभूत्सीतायाः तत्र तु समविभागो लक्ष्मणोऽपि, अस्मिन् प्रवासे तु लक्ष्मण एव कान्तारमध्यं प्रापयितेति सीताप्रवासे वर्त्तत एव लक्ष्मणस्यापि भागः, विशिष्टस्तुभागो रामस्येति विवेकः ।

'सर्वश्राव्यं प्रकाशं स्या'दिति दर्पणः ।

१ अपरेषु रूपकेषु आर्यपुत्रस्य प्राकृतरूपं 'अज्जउत्त' इति दृश्यते । अत्राप्य-

ल—( वनं निर्दिश्य ) एवं गते कीदृशं कुशलमार्यस्य ?

सी—अज्जूए केकईए पुणो वि समादिट्ठो वणवासो ? (क)

ल—समादिष्टो वनवासः, न पुनरम्बया।

सी—केण उण समादिट्ठो ? (ख)

ल—आर्येण।

सी—कहं समादिट्ठो ? (ग)

---

(क) आर्यया कैकेय्या पुनरपि समादिष्टो वनवासः ?

(ख) केन पुनः समादिष्टः ?

(ग) कथं समादिष्टः ?

---

ससम्भ्रमं सत्वरं सम्भ्रमस्त्वरा तत्सहितं यथातथेति क्रियाविशेषणम्। 'प्रोवाचे'ति अध्याहार्यम्। अपि प्रश्नार्थे। कुशलं क्षेमम् आर्यपुत्रस्य ममभर्तूरामस्य। एवं गते ईदृश्यां दशायाम्। कीदृशं कुशलं नास्त्येव कुशलमित्यर्थः। आर्यस्य रामचन्द्रस्य। पत्नीविरहे जाते रामस्य कुशलं सर्वथैवास्तमुपगतमितिभावः। यथाह भारविः—

'तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः।
तदैकाकी सबन्धुस्सन्निष्टेन रहितो यदा' ॥ इति—

आर्यया पूज्यया श्वश्र्वा। कैकेय्या केकयस्य अपत्यं स्त्री कैकेयी तया भरतस्य मात्रा। पुनरपि भूयोऽपि। प्रथमः प्रवासश्चतुर्दशवार्षिकः सम्प्रत्येवावसितः। सच सीतायाः सविशेषक्लेशप्रद इति तयाद्यापि स्मर्यते। भूयोऽप्युपस्थीयमानः पुनरपरो गण्डस्योपरि विस्फोट इव भूयसेक्लेशाय स्यादिति साशंकाया जनकजायाः मौग्ध्यं वशंवदत्वञ्च सीमातिक्रान्तमालिखितं कविना। दिवंगतेऽपि पङ्क्तिरथे शासति च वसुन्धरामण्डलं रामे कैकेयी पुनरपि प्रवासाज्ञापने समर्थेति जितमार्यसभ्यतया।

केकयो नाम जनपदः। तस्य राजापि केकयः। तस्यापत्यं स्त्री कैकेयी। 'जनपदशब्दात्' क्षत्रियादञ्। स्त्रीत्वाद् ङीप्। कः पुनः केकयदेशः ? पारसीकाभिधः 'ईरान' इति प्रसिद्धिं गत इति चिन्तामणिर्विनायको वैद्यः। रामायणे मातुलगृहं गतस्य भरतस्यायोध्यां प्रत्यानयनार्थं प्रेषितानां वसिष्ठ-दूतानां तत्र निर्दिष्टः पन्थास्तमेव देशं केकयत्वेन प्रतिपादयति। कैकेय्याः पिता-ऽश्वपतिश्चाभिहितो रामायणे। सम्भवतोऽस्यैव नृपस्य वर्णनं दृश्यते उपनिषदि यत्रेदमुक्तम्—'न मे स्तेनो जनपदे न कदर्यो न मद्यपः, नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः'—इति। तदलं प्रसक्तानुप्रसक्तया, प्रकृतमनुसरामः !

---

नुपदमेव 'आर्यया' इत्येतस्य प्राकृतरूपम् 'अज्जूए' इति दर्शितम्। 'आर्यपुत्रस्य' प्राकृतरूपम् 'अंअ उत्तस्स' इत्येतेनापि 'अज्जउत्तस्स' इत्येव भाव्यम्। प्रकृत-पाठस्तु प्रामादिकः प्रतिभाति।

ल—( वाष्पस्तम्भमभिनीय )

आर्यस्यादेश इत्येव वक्तुमिच्छामि यत्नतः ।
तथापि हृदयं गत्वा ग्रन्थिं बध्नाति भारती ॥ ८ ॥

सी—किं मम समादिट्ठो वणवासो? (क)

---

(क) किं मम समादिष्टो वनवासः?

---

'केन पुनः समादिष्टः'—इति । यदि नाम्बया मध्यमया वनवासोऽनुज्ञातः कः पुनरसौ जनो येन स्यादादिष्टः । राममाता लक्ष्मणजननी च प्रकृत्या सौम्ये न सीतावनवासमादेष्टुमलम् । मध्यमा चाम्बा नादिष्टवतीति पूर्वमेव विदितं सीतयेति विचिकित्सापराया स्तस्याः समुचित एष प्रश्नः ।

'कथं समादिष्टः'इति—प्राणवल्लभो रामभद्रः प्रेयसीमनागसं जनकनन्दिनीं परित्यक्ष्यतीति नाकलयितुं शक्यं तया चेतसापीति युक्तमेव 'कथ'मिति पदम् । वाष्पस्तम्भं अश्रुविष्टम्भम्, अश्रूणि विष्टभ्येत्यर्थः । निष्पापायाः सत्याः सीताया इयमवहेलना कस्य सचेतसो न दुःखाय ? तथाच सर्वप्रत्यक्षस्य लक्ष्मणस्य हृदये कारुण्योद्रेकवशात् पूर्वं दुर्निवारोऽश्रुभारो नेत्रयोः प्रादुरभूत्, धैर्येण तु पुनरवष्टब्धोऽसौ लक्ष्मणेन । 'वक्तुमुपचक्रमे'—इति शेषः ।

यदाह लक्ष्मणस्तदेव दर्शयति 'आर्य्यस्ये'ति—

आर्यस्य आदेशः इति एव यत्नतः वक्तुमिच्छामि । तथापि भारती हृदयं गत्वा ग्रन्थिं बध्नातीति योजना । आर्यस्य सम्मान्यस्य, अग्रजत्वात् । आदेशः आज्ञा । एवं त्वया मद्वचनाद्विज्ञाप्या जानकीत्येवंरूपाऽनुज्ञेत्यर्थः । इत्येव, एतस्मादेव हेतोः केवलम्, न पुनः सीतायाः वृजिनलेशोऽप्यस्ति येन सैवमुच्येतेति भावः । वक्तुमिच्छामि कथयितुं प्रवर्त्ते । यत्नतः यत्नाद् । एतेषां वज्रसमानां निष्ठुराणां वचसा मुच्चारणं न खलु प्रयत्नं नापेक्षते इत्यर्थः । तथापि । महति प्रयत्ने क्रियमाणेऽपीत्यर्थः भारती शब्दावली हृदयं गत्वा हृत्प्रदेशं प्राप्य ग्रन्थिं बध्नाति । 'इवे'त्यध्याहार्यम् ? न हि सत्यमेव हृदये ग्रन्थिवन्धः सम्भवति ।

मुद्राराक्षसे चन्द्रगुप्तोऽपीदृशमिवभावं प्रदर्शयामास, तथाहि—

'आर्याज्ञयैव मम लङ्घितगौरवस्य बुद्धिः प्रवेष्टमवने विवरं प्रवृत्ता ।
ये सत्यमेव न गुरून् प्रतिमानयन्ति तेषां कथं नु हृदयं न भिनत्ति लज्जा' ॥ इति

सीतापवादरूपा ये शब्दाः प्रोच्चारयितव्याः पूर्वं ते मनोगताः । 'यन्मनसा मनुते तद्वाचा वदति'–इत्युक्तेः । हृदयगताश्च ते शब्दाः पूर्वं हृदयमेव तथा ग्रन्थिमद् विदधति यथा ते तत्र प्रवेष्टुमसमर्था भवन्ति । न हि ग्रन्थिमति वस्तुनि कस्यचित्प्रवेशः सम्भवति । हृदयेऽपि ते शब्दाः पर्यवस्थातुमसमर्थाः किमु वाचीति भावः ।

ल——न केवलं तव, आत्मनोऽपि।

सी——कहं विअ ? ( कथमिव ? )

ल——प्रकामभुक्ते स्वगृहाभिमानात्
सुहृज्जनेनाहितयागवह्नौ।
आर्यस्य रम्ये भवनेऽपि वास-
स्तव प्रवासे वनवास एव ॥ ६ ॥

---

'किं ममे'ति—जनकेन प्रतिपादितायाः रामेण प्रतिगृहीतायाः दशरथेनानुमतायाः अपहारकयातुधानपरिवृढं समूलमुन्मूल्य पुनरानीतायाः सुविश्रब्धतया प्राणवल्लभेन साकं लौकिकसुखमनुभवन्त्याः अन्तर्वत्न्याः रामपत्न्याः सीतायाः स्थाने विचिकित्सा किमहमेव वनवासार्थमाज्ञप्ता भर्त्रेति। नेति—अयं वनवासः न केवलं तवैव, अपितु आत्मनः निजस्य स्वस्य रामस्यापि।

कथमिति—कान्तारमध्ये केवल मात्मानं पश्यन्ती रामञ्चापश्यन्ती परिपृच्छति लक्ष्मणं कथं नाम मम प्रवासे रामप्रवासोऽपि सम्भवति। यद्यहं प्रवासिता रामेण, आत्मापि च प्रवासितस्तेन तर्हि तत्सन्निधौ स्थितायाः सीतायाः विपिनमपि भवनायते इति सम्यगवबोद्धुमेव स्वपरिस्थितिमेष प्रश्नः। यथा तु सीताप्रवासे रामप्रवासस्तद्दर्शयति 'प्रकामेति—स्वगृहाभिमानात् सुहृज्जनेन प्रकामभुक्ते आहितयागवह्नौ रम्ये भवनेऽपि आर्यस्य वासः तवप्रवासे वनवासः एवेत्यन्वयः।

स्वगृहाभिमानात् स्वस्य निजस्य गृहं तस्य अभिमानं तस्मात्, रामगृहं स्वकीयमेवेति येषा मतिशयपरिचयवतां सुहृदां प्रत्यय स्तस्मात्। सुहृज्जनेन शोभनं हितप्रवणं हृदयमस्य स सुहृत्। सुहृद्दुर्हृदौ—( ५।४।१५० ) इति साधुः, स चासौजनश्चेति कर्मधारयः, मित्रमण्डलमिति यावत्। 'अथ मित्रं सखा सुहृत्'—इत्यमरः। तेन प्रकामभुक्ते प्रकामं यथेष्टं भुक्तं खादितं यस्मिन् तस्मिन्। 'कामं प्रकामं पर्याप्तं निकामेष्टं यथेप्सितम्'—इत्यमरः। तथा चोक्तम्—

> ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
> भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ इति।

यत्र गृहे सुविश्रब्धमास्य मित्रमण्डलेन पर्याप्तमशितमिति भावः। रामेण वा यस्मिन् भवने मित्रमण्डल्या सह यथेष्टं भुक्त मित्यर्थः। आहितयागवह्नौ आहितः संस्थापितः यागार्थं यज्ञानामर्थं वह्निरग्निर्यस्मिन् तस्मिन्। यत्र रामभवने दर्शपौर्णमास्यादियागानुष्ठानार्थं पूतस्य यज्ञियस्याग्नेराधानं कृतमस्ति रामविवाहकाले इतिभावः। तस्मिन् रम्ये मनोहरे भवनेऽपि आर्यस्य पूज्यस्य रामस्य वासः निवासः तव सीतायाः रामपत्न्याः प्रवासे, त्वयि प्रोषितायामित्यर्थः। वनवास एव, 'आर्यस्ये'ति भावः। गृहनिवासे सति मित्रजन आमन्त्र्यते, यागनिचयश्चानुष्ठीयते न तथा वनवासे। कृतदारेण रामेण पर्याप्तं भोगाः भुक्ताः पितरो देवाश्च प्रीणिताः। सीताविरहे तु न

सी—वच्छ, परिप्फुडं कहेहि, अज्ज कहं मम वणवासो अंज्ज-उत्तस्स वणवासोत्ति ? (क)

ल—किमपरं कथयामि मन्दभाग्यः ।

त्यक्ता किल त्वमार्येण चारित्रगुणशालिना ।
मयापि किल गन्तव्यं त्यक्त्वा त्वामिह कानने ॥ १० ॥

सी—हा ताद, अय्य कोसलाहिप, अज्ज उवरदोसि। (ख)

ल—(ससम्भ्रमम्) कष्टं भोः ! कष्टं भोः ! निर्घातपातदारुणे-

---

(क) वत्स, परिस्फुटं कथय, अद्य कथं मम वनवास आर्यपुत्रस्य वनवास इति ।

(ख) हा तात, आर्य कोसलाधिप ! अद्योपरतोऽसि। (मोहं गच्छति)

---

तथा शक्य माचरितुम्, तस्मात्सीताप्रवासे सति रामस्य भवने निवासो वनवासश्च सम एव । भार्याविरहे भवनमपि वनायते । यथाहुः—

'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम्' ॥ इति ।

तस्मात्सीताप्रवासे भवनेऽपि वसतोरामस्य वनवास इति सिद्धम् ॥ ६ ॥

अद्यापि मुग्धतया सुविश्रब्धतया च लक्ष्मणेरितेषु वचस्सु निहितं मर्माविधं रहस्यं साकल्येनानवबुध्यमानाऽनिष्टाशङ्कमाना देवी पुनः परिपृच्छति वत्सेति— परिस्फुटं परितः स्फुटं विकसितं विशदं सुस्पष्टमित्यर्थः । कथय वद, कथं केन प्रकारेण मम वनवासः अद्य आर्यपुत्रस्य रामस्य वनवासः 'संवृत्तः' इति शेषः । वनेऽहमस्मि समागता नाद्य भर्त्ता मम समागतोऽत्र मया सार्धमिति कथं मम वनवासस्तस्य वनवास इति । त्वं लक्ष्मणो मया सार्धं वनमसि प्रपन्न इति तव मम च वनवासः प्रत्यक्षो ननु मम च रामस्य चेति युक्ता शङ्का ।

तां समाधातुमिच्छन्नपि विशेषं वक्तुमशक्नुवन् परवशतया ईदृशीं नृशंसां दशामापन्न आत्मन्यवज्ञां वहन् वराको लक्ष्मणः समुत्तरयति किमपरामिति— चारित्रगुणशालिना आर्येण त्वं त्यक्ता किल, त्वामिह कानने त्यक्त्वा मयापि गन्तव्यं किलेत्यन्वयः ।

चारित्रगुणशालिना चरित्रमेव चारित्रं तदेवगुणः तेन शालते शोभते तच्छीलेन, शोभनचरितेनेत्यर्थः । आर्येण पूज्येन ममाग्रजेण रामेण त्वं त्यक्ता किल परित्यक्तासि । किलेति वार्तायां 'वार्तायामरुचौ किल'—इति त्रिकाण्डशेषः । त्वां इह अत्र कानने वने त्यक्त्वा परित्यज्य मया लक्ष्मणेनापि गन्तव्यं अयोध्यां प्रति निवर्तनीयमिति भावः ॥१०॥

**नानेन परित्यागवार्ताश्रवणेन नूनमुपरता देवी। ( निर्वर्ण्य ) दिष्ट्या श्वसिति। तत्कोनु खल्वस्याः प्रत्यानयनेऽभ्युपायः। ( विषादं नाटयति ) आश्चर्यमाश्चर्यम्—**

**भागीरथीशीकरशीतलेन सम्भाव्यमाना मृदुनानिलेन।**
**मद्भाग्यशेषेण च बोध्यमाना प्रत्यागता राजसुता कथञ्चित् ॥११॥**

---

तात पूज्य पितः। श्वशुरोऽपि पितेव। कोसलाधिप कोसलाना मेतत्संज्ञकानां जनपदानां अधिप रक्षक, कोसलेश्वर इह दशरथ इष्टस्तत्सम्बोधनम्। कोसलानामेव 'राज्ञामयोध्येति पुरी रघूणा' मासीत्। अद्य उपरतोऽसि मृतोऽसि। यद्यपि दशरथश्चिराय दिवङ्गतः, परं रामेण सम्यक् परिपाल्यमानया सीतया तददर्शनं तथात्वेन न प्रतीतम्, अद्य पुनारामेणापि परित्यक्तया अनाथया हीनया दीनया च सीतया श्वशुराभावोऽनुभूतः। नहि दशरथे जीवति सीताया विवासनं राजप्रासादतोऽपि सम्भवमभविष्यत् किम्पुना राजधानीतः। निरपराधां जानकीं रामः पत्नीधर्मेण स्वीकरोतु मा वा स्वीकुरुतां दशरथस्तु तस्याः शरण्य आसीदेव। अद्य तु निरङ्कुशेन रामेण सा परित्यक्ता, न कश्चिदप्यनुजः तं दुरन्तादेतस्माद् व्यवसायाद्वारयितुं क्षमः, न च रामवश्यत्वादाश्रयं प्रदातुम्। दशरथस्तु जानक्याः पितेव, रामस्य चावश्योऽभविष्यत्, सच तामेवं गतेऽप्यपालयिष्यदेवेति तात्पर्यम्। मोहः मूर्च्छा। निर्घातो वज्रं, निश्शेषेण हन्तीति। तस्य पातः पतनं तद्वद् दारुणेन व्यथकेन पीडाकरेणेत्यर्थः, परित्यागवार्ताश्रवणेन परित्यागो रामकृतो वियोगः, तस्य वार्ता वृत्तान्तः। 'वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः'—इत्यमरः। तस्य श्रवणेन निशमनेन। नूनमिति निश्चये। उपरता पञ्चत्वं गता मृतेत्यर्थः। निर्वर्ण्य सम्यङ् निध्याय नितरां ध्यात्वा सावधानेन मनसा सम्यग् विलोक्येति यावत्। 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्'—इत्यमरः। दिष्ट्या भाग्येन। 'दैवं दिष्टं भागधेयं स्त्री दिष्टिर्नियतिर्विधिः'—इत्यमरः। श्वसिति प्राणिति। अस्याः प्राणापानगतिरव्याहता तिष्ठतीत्यर्थः। प्रत्यानयनं विसञ्ज्ञायाः पुनः ससञ्ज्ञतां प्रापणम्। विषादः खेदः, विसञ्ज्ञायाः सीतायाः मूर्च्छानिवृत्तये कस्याप्युपायस्याप्रतीयमानत्वात्, प्रतीतेऽपि चोपयुक्तसाधनस्याभावाद् मन्युर्लक्ष्मणस्य।

अकृतेऽपि प्रतीकारे स्वयमेव यदा सञ्ज्ञामापन्ना देवी, तां तदवस्थां विलोक्य साश्चर्यो लक्ष्मणो भागीरथीशीकरशीतलं वातमात्मसौभाग्यं च पुनश्चैतन्यप्रतिलम्भहेतुं मत्वाह भागीरथीति—भागीरथी शीकरशीतलेन मृदुना अनिलेन सम्भाव्यमाना मद्भाग्यशेषेण च बोध्यमाना राजसुता कथञ्चित् प्रत्यागतेति योजना।

भागीरथ्याः शीकराणि सीकराणि वातप्रक्षिप्तजलकणाः। 'शीकरोऽम्बुकणाः स्मृताः'—इत्यमरः। 'शीकरं सरले वातसृताम्बुकणयोः पुमान्'—इति कोषात् क्लीवत्वं पुंस्त्वञ्चोभयं सङ्गच्छते। तैः शीतलेन शैत्यमापन्नेन। मृदुना कोमलेन

सी—वच्छ लक्खण ! किं गदोसि ? (क)

ल—आज्ञापय, तिष्ठाम्येष मन्दभाग्यः ।

सी—किं उवालंभिअ म्हि परिच्चत्ता । (ख)

ल—कीदृशो देव्या उपालम्भः ।

सी—अहो मे अधण्णत्तणं, किं उवालम्भमेत्तएण विणा णिगहिदंह्मि । किं अत्थि किं वि देण संदिट्टं ? (ग)

ल—अस्ति ।

सी—कहेहि कहेहि । (घ)

ल—तुल्यान्वयेत्यनुगुणेति गुणोन्नतेति
दुःखे सुखे च सुचिरं सहवासिनीति ।
जानामि केवलमहं जनवादभीत्या
सीते त्यजामि भवतीं न तु भावदोषात् ॥ १२ ॥

अयमार्यस्य संदेशः ।

---

(क) वत्स लक्ष्मण ! किं गतोऽसि ?

(ख) किमुपालभ्यास्मि परित्यक्ता ?

(ग) अहो मेऽधन्यत्वम् , किमुपालम्भमात्रेण विना निगृहीतास्मि । किमस्ति किमपि तेन सन्दिष्टम् ?

(घ) कथय कथय ।

---

नतु प्रचण्डेन झञ्झावातेनेति भावः । अनिलेन वायुना सम्भाव्यमाना आसेव्यमाना । मद्भाग्यशेषेण मम भाग्यं मद्भाग्यं तस्य शेषेण अवशेषेण बोध्यमाना चैतन्यमापाद्यमाना । राजसुता राज्ञो जनकस्य दुहिता । कथञ्चित् महताऽऽयासेनेत्यर्थः । प्रत्यागता पुनश्चेतनामापन्ना ॥ ११ ॥

उपालम्भः सनिन्दभाषणम् । उपालम्भमात्रेण विना उपालम्भलेशेनापि विनैव । निगृहीतास्मि दण्डितास्मि।नाहमपराधिनी,अनपराधित्वेऽपि सम्भवति निन्दा,परं तामपि विना दण्डं प्राप्तवतीति । तेन रामेण । सन्दिष्टं सन्देशः प्रेषितः । 'मदर्थ' मिति शेषः ।

आर्यस्य सन्देशमेवाह ' तुल्ये 'ति—

तुल्यान्वया इति अनुगुणा इति गुणोन्नता इति सुचिरं दुःखे सुखे च सहवासिनी इति जानामि सीते ! अहं केवलं जनवादभीत्या भवतीं त्यजामि न तु भावदोषादिति योजना ।

तुल्यान्वया तुल्यः समानः अन्वयः वंशः यस्याः सा, नतु हीनकुलजेत्यर्थः । अनुगुणा गुणैरनुगता समानगुणशालिनीत्यर्थः । गुणोन्नता गुणैः सौन्दर्यदाक्षिण्यादिभिः उन्नता प्रोच्चा गुणगणेन समृद्धेत्यर्थः । सुचिरं दीर्घकालं यावत् दुःखे सुखे च सुखदुःखयोः सम्पादि विपदि चेत्यर्थः सहवासिनी ममेति शेषः । अत्यन्तं स्निग्धाऽनु-

सी---कहं जणवादभयेणेत्ति। किंवि वअणीअं मे अत्थि ? (क)

ल---कीदृशमार्याया वचनीयम्।

ऋषीणां लोकपालानामार्यस्य मम चाग्रतः।
अग्नौ शुद्धिं गतादेवी किन्तु---

सी....(लज्जां नाटयति) कहेहि, किंतु--- (ख)

ल....लोको निरङ्कुशः॥ १३॥

सी....अग्गिसुत्थिसंकित्तणेण पडिबोदिदाम्हि। रावणभवणउत्तंतो पुणोवि उव्वादिअदि। सीदाए वि णाम एव्वं संभावीअदित्ति सव्वहा अलं महिलत्तणेन। एव्वं परिच्चत्ता। णु परिच्चत्ताम्मि। किं ण खु जुत्तं मम अअउत्तपरिच्चत्तं अत्ताणं परिच्चइदुं, किं ण खु तस्स एव्व णिरनुक्कोसस्स समाणो एसो पसओ पेक्खिदव्वोत्ति वअणीअकंटकोपहिदं जीविदं परिरक्खामि।(ग)

(क) कथं जनवादभयेनेति। किमपि वचनीयं मेऽस्ति ?

(ख) कथय किन्तु---

(ग) अग्निशुद्धिसङ्कीर्तनेन प्रतिबोधितास्मि। रावणभवनोदन्तः पुनरप्युद्बाधयति। सीताया अपि नाम एवं सम्भाव्यत इति सर्वथाऽलं महिलात्वेन। एवं परित्यक्ता। ननु परित्यक्तास्मि ? किन्न खलु युक्तं ममार्यपुत्रपरित्यक्तमात्मानं परित्यक्तुम् ? किन्न खलु तस्यैव निरनुक्रोशस्य समान एव प्रसवः प्रेक्षितव्य इति वचनीयकण्टकोपहितं जीवितं परिरक्षामि।

रक्षा चेति भावः। इति जानामि वेद्मि भवतीमित्यत्रापि योज्यम्। जनवादभीत्या जनवादाद् भयेन निन्दाभयेन केवलं अहं भवतीं त्यजामि। न तु भावदोषात् भावोऽभिप्रायः मनोविकारः चेष्टा वा तद्दोषात्। 'भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु'---इति मेदिनी॥ १२॥

वचनीयं आक्रोशास्पदं वस्तु यद्दृष्ट्वा जनापवादः प्रवर्त्तते। 'वचनीयं तु निर्वादे मुहुर्दृष्टे च गर्हिते'---इति विश्वः।

ऋषीणा मगस्त्यादीनाम्। लोकपालानामिन्द्रादीनां आर्यस्य रामस्य मम लक्ष्मणस्य च अग्रतः पुरतः समक्षमिति यावत्, देवी तत्रभवती भवती अग्नौ वह्नौ शुद्धिं गता, स्वशुद्धिं प्रत्याययितुं अग्निप्रवेशं स्वीकृतवती, अग्निपरीक्षा भवत्या समुत्तीर्णा सर्वैश्च समवेतैर्निष्पापेति प्रतिपन्नेत्यर्थः किन्तु तथापि लोकः जनः। 'लोकस्तु भुवने जने'---इति कोषः। निरङ्कुशः अङ्कुशरहितः निरर्गलभाषीत्यर्थः। अग्निपरीक्षामप्यश्रद्दधानो जनः सकलङ्कामेव भवतीं शङ्कते इति तात्पर्यम्॥१३॥

संकीर्तनं कथनम्। प्रतिबोधिता पुनरपि ज्ञापिता स्मारितेति यावत्। उदन्तः वृत्तान्तः। उद्बाधयति परिक्लेशयति। सीताया..............महिला-

ल—अनुगृहीतोऽस्मि। (उत्थाय प्रणमति) इदमपरमार्येण सन्दिष्टम्।
सी—किं णु खु भविस्सदि । (क)
ल—त्वं देवि चित्तनिहिता गृहदेवता मे
स्वप्नागता शयनमध्यसखी त्वमेव ।

---

(क) किन्नु खलु भविष्यति ।

त्वेन-सीताया अपि विषये पापमाशङ्कते जनः इति महिलात्वं स्त्रीत्वमेव सर्वथा ऽपराध्यति । सर्वथा सत्योपि लोके केवलं स्त्रीत्वस्य कृते आक्रोशं लभन्ते । परगृहे विवशतया सीतया न्युषितं न स्वेच्छया, भर्तुः परोक्षे स्थिता सीता जनापवादभाक् संवृत्ता, ननु पत्नीविरहितो रामः केनाप्याक्रुश्यते । सत्यं रामो धार्मिकः, सीतापि नियतं स्वधर्मेस्थिता नोत्पथप्रवृत्ता जात्वपि । पुनरपि सा जनापवादपात्रं जातेति सर्वथा महिलात्वस्यैवैष परिणामः । तस्मात् कापि महिला न भवेदेवेत्याशंस्यते सीतया । नराएव जायेरन् न नार्यः इति भावः । एवं परित्यक्ता एव मनेन हेतुना परित्यक्तास्मि । रामेण परित्यक्तास्मि, रक्षोगृहवासश्च तन्निमित्तमिति सम्प्रति विज्ञातं मयेतिभावः । ननु परित्यक्तास्मि । अहमपि पत्नीनां धुरिस्थिता सत्यमेव परित्यक्तैवेति साश्चर्यं सीता चिन्तयति । स्वपरिस्थितिं सम्यगवबुध्य सम्प्रति किं विधातव्यमिति तदेवाह 'किंन खलु.........परित्यक्तुम्'—इति । यदा भर्त्रा परित्यक्तास्मि मयाप्यात्मा परित्याज्यः । स्वविनाशः कर्त्तव्य इत्यर्थः । मानिनीनां मानहानौ सत्यां जीवनं दुर्भरं भवतीत्यतो मरणमेव तासां शरणमितिभावः । 'किंनखलु.........
...परिरक्षामी'ति—निरनुक्रोशस्य निर्दयस्य, अनुक्रोशोदया । 'कारुण्यं करुणा घृणा। कृपा दयानुकम्पा स्यादनुक्रोशोऽपि'—इत्यमरः । गर्भगुर्वीमदोषां जायां परित्यजन् रामः सर्वथापि निर्दयानामग्रणीः । प्रसवः अपत्यं सन्तान इति यावत् । 'प्रसवो गर्भमोचने । उत्पादे स्यादपत्येऽपि फलेऽपि कुसुमेऽपि च'—इति मेदिनी । तस्यैव निर्दयस्य रामस्य समानः तुल्यरूपः, जनकजातयोः रूपसाम्यं भवति । यद्वा यथा भर्त्ता निर्दय स्तथैष प्रसवोऽपि पीडाकरत्वात् । प्रेक्षितव्यः निध्यातव्यः सुगोपायितव्यः इत्यर्थः । इति हेतोः वचनीयकण्टकोपहितं वचनीयमेव कण्टकं तेन उपहितं आच्छन्नं सर्वथाऽपवादशङ्कुनापीडितमितिभावः जीवितं जीवनं परिरक्षामि धारयामि । अदोषाः सत्या जायास्तथा नाम निराकृता विप्रियकारिणः प्रियस्य सर्वथा प्रियकारिण्यो न जातु विरोधिन्य इति जितमार्यसंस्कृत्या । एवं गतेऽपि धैर्यमालम्ब्य निराकर्तृ रामस्यैव प्रियहितमाचरन्ती सीता सर्वथा सीमन्तिनीनां मूर्धन्या चरितलेखकस्य कविप्रवरस्यापि यशः परितनोति । यथाहुः—

ते वन्द्यास्ते महात्मानस्तेषां लोके स्थिरं यशः ।
यैर्निबद्धानि काव्यानि ये वा काव्येषु कीर्तिताः ॥ इति ।

अनुगृहीतोऽस्मीति—राघवकुलपरिवृंढेन तथा न्यक्कृतापि तस्यैव कुलप्रतिष्ठा-

दारान्तराहरणनिःस्पृहमानसस्य
याये तव प्रतिकृतिर्मम धर्मपत्नी ॥ १४ ॥

सी—एव्वं संदिशंतेण अअउत्तेण परिच्चाअदुक्कं मयि निरवसेसं अवणीदं, णहि तह अण्णासत्ता पइणो इत्थिआजणस्स दुक्कं उप्पादेदि जह अण्णासत्तो। (क)

(क) एवं सान्दशतार्यपुत्रेण परित्यागदुःखं मयि निरवशेषमपनीतम्, नहि तथान्यासक्ता पत्युः, स्त्रीजनस्य दुःखमुत्पादयति यथान्यासक्तः।

परिपालनाय तत्रभवती सन्ततितन्तुं न व्यवच्छेत्तुमिच्छतीति परमोऽनुग्रहः श्रीमत्या इति भावः।

'किन्नु खलु भविष्यति'—इत्यनुक्तमपि सम्पादकद्वयेन तथानधिकृतमपि स्वगतं प्रतिभाति।

अपरसन्देशस्वरूपमाह 'त्वं देवी'ति—

देवि! मे गृहदेवता चित्तनिहिता त्वम्, स्वप्नागता शयनमध्यसखी त्वमेव, यागे दारान्तराहरणनिःस्पृहमानसस्य मम धर्मपत्नी तव प्रतिकृतिरिति योजना।

देवि दिव्यगुणशीले! मे मम, गृहदेवता गृहाणां देवता अधिष्ठात्री देवी, चित्तनिहिता चित्ते चेतसि हृदीति यावत् निहिता प्रतिष्ठापिता। तथा चात्यन्तं विरहविच्छेदः प्रेमपूरस्यागाधता च सूच्यते। स्वप्नागता स्वप्नेषु आगता समीपम्, स्वप्नेषु दृष्टिपदवीं प्राप्ता, सान्निध्यमाप्ता वा, 'रसेन शय्यां स्वयमभ्युपागता' स्वप्नदशायामित्यर्थः, शयनमध्यसखी शयनं संस्तरणं पल्यङ्को वा तस्य यन्मध्यं तत्र सखी, स्वप्नेषु नतु जाग्रद्दशायां रामेण सह पर्यङ्कार्धभागित्यर्थः त्वमेव नतु काचिदन्या रमणी तव रमणस्य प्रोषितायां त्वयि पर्यङ्कमारोढुं प्रभविष्यतीत्यर्थः। मम (रामस्य) दारान्तराहरणनिःस्पृहमानसस्य अन्ये दाराः दारान्तरं तस्य यदाहरणं उपादानं स्वीकरणमिति यावत्, तत्र निःस्पृहस्य अनिच्छुकस्य अन्यां भार्यां यो नोद्वोढुकामस्तस्य, धर्मपत्नी धर्मेण पत्नी, यागे यज्ञावसरे तव (सीतायाः) प्रतिकृतिः प्रतिमा तवाकारसंवादि तैलचित्रं वा, 'भविष्यती'ति शेषः। दाराशब्दः स्त्रीवाचकः नित्यपुंल्लिङ्गो बहुवचनान्तश्च भार्या जायाथ पुंभूम्नि दाराः'—इत्यमरः। सीतारामयोर्विरहो नैतिको नतु भावशैथिल्यनिबन्धनः इति सर्वमवदातम् ॥ १४ ॥

एवं नाहमन्यां नारीं परिणेष्यामीत्येवंरूपं, संदिशता संदेशं प्रेषयता, आर्यपुत्रेण रामेण, परित्यागदुःखं विरहकष्टं, मयि वर्तमानं निरवशेषं निःशेषं साकल्येनेति यावत्, अपनीतं दूरीकृतम्, नहि तथा अन्यासक्ता अन्यस्मिन् पतिव्यतिरिक्ते जने आसक्ता अनुरक्ता पत्युर्दुःखमुत्पादयति नारीति शेषः, स्त्रीजनस्य नारीवर्गस्य दुःखं क्लेशमुत्पादयति जनयति यथा अन्यासक्तः अन्यस्यां नार्यां

ल—कः प्रतिसन्देशः ?

सी—कस्स ? (क)

ल—आर्यस्य।

सी—एव्वं गदेवि पडिसंदेशो। अज्जूणं उण मम वअणादो पादवदणं कदुअ विण्णवेहि—एव्वं अहं णीरव्वा सावदसमाइण्णे वणे पडिवसंती अ सव्वहा हिअएण अय्याहिं अणुगहीदव्वेत्ति। (ख)

ल—प्रतिगृहीतेयमाज्ञा। आर्यस्य न किञ्चित् सन्दिष्टम्।

सी—तह णिट्ठुरो णाम संदीसीअदित्ति अप्पडिहदवअणदा एसा लक्खणस्स, ण सीदाए धण्णत्तणं। तह मम वअणादो तं जणं विण्णवेहि—मंदभाइणीं अणुसोअंतो वण्णस्समपरिवालणं अहिग्घंतो अत्ताणं ण बाधेहि[१] सद्धम्मे ससरीरे सावधाणो होहित्ति। वच्च लक्खण, किं उवालंभामि महाराअं ? (ग)

---

(क) कस्य ?

(ख) एवं गतेऽपि प्रतिसन्देशः। श्वश्रूणां पुनर्मम वचनात् पादवन्दनं कृत्वा विज्ञापय—एवमहं नीरक्षा श्वापदसमाकीर्णे वने प्रतिवसन्ती च सर्वथा हृदयेनार्याभिरनुगृहीतव्येति।

(ग) तथानिष्ठुरो नाम सन्दिश्यत इत्यप्रतिहतवचनतैषा लक्ष्मणस्य, न सीताया धन्यत्वम्। तथा मम वचनात्तं जनं विज्ञापय—मन्दभागिनीमनुशोचन् वर्णाश्रमपरिपालनमभिघ्नन्नात्मानं न बाधय। सद्धर्मे स्वशरीरे सावधानो भवेति। वत्स लक्ष्मण ! किमुपालभे महाराजम् ?

---

आसक्तः अनुरक्तः पतिरिति शेषः। अयं भावः, परपुरुषानुरक्ता नारी पत्युर्मनसि न तथा दुःखमुत्पादयति यथा परस्त्रीसक्तः पतिर्नार्याः। स्वैरिणीं स्त्रियं परित्यज्य नार्यन्तरं वोढुं सपदि प्रवृत्तस्य पत्युर्न तावद् दुःखं भवति यावत् परनार्यनुरक्तं पतिमवलोक्य स्थातुं गन्तुं द्वयमप्यशक्नुवत्याः भार्यायाः। नहि सत्यः परपुरुषं कामयन्ते, भर्त्तर्युत्पथगामिन्यपि सति पतिपरायणाः पतिमेव परं दैवतं मन्वानाः सुकालं प्रतीक्षन्ते नितरां तप्यमानमानसाः आत्मानं व्यापादयितुं वा यतन्ते इति सत्यमेव जनेभ्यो जनीनां दुःखाधिक्यम्। नारीणां दुःखमात्रा नरेभ्यो विशिष्यते

---

१ 'बाधेहि'—इत्येतस्य 'बाधय'—इति यत्संस्कृतरूपं सम्पादकद्वयेन प्रदत्तं तच्चिन्तनीयमेव, बाधेरात्मनेपदित्वाद् 'बाधस्व'—इति प्रयोगः शिष्टानुमतः। भोजप्रबन्धेऽप्येतत्स्पष्टम्—'न तथा बाधते नीरं यथा बाधति बाधते'—इति।

हिन्दुसमाजे सर्वथेति नात्र सन्देहलवोऽपि ।

प्रतिसन्देशः प्रतिवाचिकम् 'सन्देशवाग्वाचिकं स्यात्'-इत्यमरः। एवं गतेपि एतस्यां दशायामपि, रामेण यदा सम्बन्धलेशोऽपि नेष्यते तदा प्रतिसन्देशनं तदिच्छाविरुद्धमेव स्यादिति प्रतिसन्देशो नापेक्ष्यते इति रहस्यम्। श्वश्रूणां तिसृणां कौशल्याकैकेयीसुमित्राणां नीरक्षा रक्षारहिता कस्यापि रक्षकस्याभावात्, श्वापदसमाकीर्णे श्वापदाः श्वसदृशपादवन्तो हिंस्राः सिंहादयः प्राणिनः तैः समाकीर्णे पूर्णे हिंस्रजन्तुभरिते वने कान्तारे प्रतिवसन्ती निवसन्ति अहं आर्याभिः पूज्याभिः अनुगृहीतव्या अनुग्राह्या । कल्याणाभिनिवेशिमानसाभिरत्रभवतीभिः सर्वदा मम मङ्गलमाशंसनीयमिति भावः।

निष्ठुरः कठोरहृदयः एकपदे तथारूढस्य प्रणयस्य सर्वथावहेलनात्, ईदृशोऽपि जनो रामरूपोयत्संदिश्यते तत् लक्ष्मणस्य अप्रतिहतवचनतावशादेव मा नाम लक्ष्मणवचनं प्रतिहतं भवतु निष्फलतामुपैतु । न सीताया धन्यत्वम्—न खलु तादृशं भागधेयम् । अयमाशयः—यत्र प्रणयवशात्सन्देशप्रतिसन्देशौ प्रवर्तेत दम्पत्योस्तत्रनूनमुभयोः सुखिनोर्जनयोर्धन्यत्वम्, अत्र तु न तथा, प्रणयशतान्यविगणय्य सीतासम्बन्धविच्छित्तये किल प्रयतितं रामेण, तदानीं रमणं प्रति रामायाः प्रतिसन्देशावसरो व्याहत एव । तथापि यत्सन्दिश्यते तल्लक्ष्मणप्रेरणावशादेव न पुनः स्वारस्येन । स्वारस्येन प्रतिसन्दिशन्त्याः सीताया भवेदेव धन्यत्वम् । इदानीं तु अनाथायाः दीनायाः सुखवर्जितायाः दुःखशताकुलाया स्तस्या धन्यत्वं सर्वथा दूरातीतम्। तं जनं राममित्यर्थः, दुःखोद्रेकात् सम्बन्धलेशमविगणय्य सीताया वचनम्। मन्दभागिनीं मन्दभाग्यां मामिति शेषः अनुशोचन् अनुचिन्तयन् वर्णाश्रमपरिपालनं वर्णा ब्राह्मणत्वादयः आश्रमाः ब्रह्मचर्यादयः तेषां परिपालनं परितः पालनं संरक्षणं तत् अभिघ्नन् अभितो घ्नन् विनाशयन्। हन्तेः शत्रन्तं रूपम् । वर्णाश्रमपरिपालनमकुर्वन्नित्यर्थः। आत्मानं स्वं न बाधस्व स्वप्रतिघातं न कुरुष्वेत्यर्थः। अयमाशयः। वर्णाश्रमपरिपालनं राज्ञो धर्मः, यावदसौ स्वयं तन्मार्यादां नावेक्षते प्रजाभिरपि तावत्तत्परिपालनं न शक्यं कर्तुम्। स्वयमननुतिष्ठतः सुतरां स्वहानम्। प्रजास्वपि च मुह्यमानासु कुपथगामिनीषु नियतं नियन्तापराध्यतीति राज्ञो हानिर्दुर्वारैव। सद्धर्मे सतां धर्मे सद्भिराचरिते वर्त्मनि, स्वशरीरे स्वस्य शरीरं गात्रं तस्मिन्, सावधानः अवधानेन सहितः दत्तचित्तः इति यावत्। सद्भिः सेविते पथि विचरतां हानिः स्वयं हीयते, सत्यामपि च हानौ लाभ एव। यथाह भारविः—

> स्पृहणीयगुणैर्महात्माभिश्चरिते वर्त्मनि यच्छतां मनः।
>
> विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः॥ इति ।

स्वधर्मानुष्ठाने दत्तमनस्केन तावदादौ स्वशरीररक्षणमेव कार्यम्, यतः स्वस्थेन शरीरेणैव शक्यते धर्मोऽनुष्ठातुम्। शरीरं हि धर्मसेवने प्रथमं साधनम्। यथा प्राह

ल—किमेतावत्यपि न प्रभवति देवी ?

सी—एव्वं वि तं जणं विएणवेहि—ण जुत्तं तव णिरपराहं इमं जणं सपदि हिअआदो णिव्वसिदुं, किं उण विसआदोत्ति । (क)

---

(क) एवमपि तं जनं विज्ञापय—न युक्तं तव निरपराधमिमं जनं सपदि हृदयतो निर्वासयितुं किं पुनर्विषयत इति ।

---

कालिदासः—'शरीरमाद्यं खलु धर्मसाधनम्'—इति । मयि सीतायां दूरीभूतायां सहचर्या खिन्नेन निर्विण्णेन च मानसेन संतिष्ठमानेन भवता न प्रजानामवेक्षणे प्रमदितव्यं नापि स्वशरीरसंरक्षणे इति सत्या जायायाः सुसङ्गतं प्रार्थनम् । पत्या निराकृताया निर्वासितायाः सीताया स्तस्मिन्नेव काले तमेव प्रति संदेशवचनानीमानि सुवर्णमयानीति जितमार्य-महिलासंस्कृत्या । प्रकृतमनुसरामः ।

किमुपालभे महाराजमिति—यद्यपि पत्यास्मि परित्यक्ता निरपराधापि तथापि मया नोपालभ्यतेऽसाविति बोधयति लक्ष्मणम् । महाराजं रामभद्रं किं उपालभे ? शपामि ? नैवेत्यर्थः । यद्वा लक्ष्मणानुमतिग्रहणपरायाः समुपालम्भोन्मुखायाः सीतायाः प्रश्नः, किं मया महाराज उपालब्धुं' शक्यते ? किमहमेवं कदर्थिता सती महाराजमुपालब्धुं क्षमा न वेति ?

एतावति एतावन्मात्रेपि न प्रभवति न समर्था, अवश्यमेव महाराजमुपालब्धु-मर्हति तत्रभवतीत्यर्थः ।

एवमपि यद्यपि राममुपालब्धुमर्हामि तथापि केवलमिदमेव वक्तुमिच्छामि भव-द्द्वारा विज्ञापयितुञ्च न युक्तम् उचितं, निरपराधम् अपराधरहितं सर्वथाऽनागसम् । 'आगोऽपराधो मन्तुश्च'—इत्यमरः । इमं जनं मां सीतामित्यर्थः, सपदि झटिति । 'स्राग्झटित्यञ्जसाह्नायसपदिद्राङ्मङ्क्षु द्रुते'—इत्यमरः । हृदयतः हृदयात्, निर्वास-यितुं निष्कासयितुम् । विषयतः स्वप्रदेशात् । अयमभिप्रायः—अपराधं विना कश्चन न दण्डनीयो राज्ञा । यथाहुः—

अदण्डयान् दण्डयन् राजा दण्ड्याँश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकञ्चैव गच्छति ॥ इति ।

विशेषतस्तु' महिषी । सत्यपि कस्मिंश्चिद्दारुणेऽपराधे भर्त्रा स्त्री उपेक्षणीया भोजनाच्छादनादिभिश्च नाभरणीया नतु जनपदादेव बहिर्निस्सार-यितव्या । रावणगृहनिवासरूपापराधस्य च कृते सीता सर्वथापेदण्डं नार्हति, न सा कुलटा सती स्वयं तत्र गतवती । बलवता रक्षसा बला-न्नीयमांना वराकी किं करोतु । लंकां प्राप्तायाश्चापि कायेन मनसा वचसा न जात्वपि

ल—सन्देष्टव्यमार्यया सन्दिष्टम्—

आर्या निर्वासिता नाम हृदयात्प्रभविष्णुना ।
कथं गृहाद् गृहं नाम कथं जनपदादपि ॥ १५ ॥

सी—एव्वं वि मम वअणादो विण्णविदव्वो—सा तपोवणवासिणी सव्वहा सीमण्टणिहिदेन अंजलिणा विण्णवेदित्ति जइ अहं णिग्गुणा चिरपरिचिदेत्ति वा, अणाहेत्ति वा, सीदेत्ति वा, सुमरणमेत्तएण अणुगहिदव्वेति । (क)

---

(क) एवमपि मम वचनाद् विज्ञापयितव्यः—सा तपोवनवासिनी सर्वथा सीमन्तनिहितेनाञ्जलिना विनिवेदयति यदि अहं निर्गुणा चिरपरिचितेति वा, अनाथेति वा, सीतेति वा स्मरणमात्रकेणानुगृहीतव्येति ।

---

व्यभिचारलेशोऽभूत् । निरपराधां रामार्थे रावणप्रयुक्तानेकान् क्लेशान् सोढवतीं सीतां मुधा दण्डयता परिक्लेशयता वा रामेण नूनं ऋते चारमिवाहितम् । सर्वथाऽन्याय्यमिदं वृत्तं रामस्य शरच्चन्द्रचन्द्रिकाधवलं यशः आप्रलयं कलङ्कयिष्यतीति ध्रुवो निश्चयो नः ।

सन्देष्टव्यं सन्देष्टुं योग्यं वाचिकम् ।

आर्येति—प्रभविष्णुना आर्या हृदयात् नाम निर्वासिता, कथं गृहाद् गृहं नाम कथं जनपदादपीति योजना ।

प्रभविष्णुना समर्थेन आर्या पूज्यात्रभवती हृदयात् निर्वासिता निष्कासिता । नामेति अभ्युपगमे । 'नाम कामेऽभ्युपगमे विस्मयेस्मरणेऽपि च । सम्भाव्य कुत्साप्राकाश्यविकल्पेष्वपि दृश्यते' । इति मेदिनी । रामोऽत्रभवत्याः स्वीकरणे निराकरणे वा समर्थः, तेन च तत्रभवती निराकृता, अथच हृदयादपि निराकृता इति मयाभ्युपगम्यते स्वीक्रियते । गृहात्तु कथं निर्वासिता गृहं नाम किं जनपदादपि कथं निर्वासिता इत्येतत्तु सर्वथापि अन्याय्यमेवाचरितम् । दम्पत्योः प्रणयशैथिल्ये संवृत्ते एकस्मिन् गृहेऽपि निवसद्भ्यां ताभ्यां शक्यः कालोऽतिवाहयितुं परस्परमसम्भाषमाणाभ्याम् । यदि नैकत्र गृहे संवासोऽभीष्टः पृथक् पृथग्गृहेऽवस्थितिः शक्यते कर्त्तुं ताभ्याम् । प्रणयमतिवृत्ता नारी स्वविषयादपि बहिस्तिष्ठतु इत्येतत्तु सापराधानामपि नारीणां विषये बलात्कारः प्रतिभाति किमु वक्तव्यं सर्वथा मन्तुशून्याया जानक्या विषये इति लक्ष्मणेनापि सीतानिर्वासनस्यौचित्यं न शक्यमवधारयितुमिति भावः ॥ १५ ॥

सा सीता तपोवनवासिनी तपोवने निवसन्ती । सीमन्तनिहितेन सीमन्ते निहि-

ल—इमं सन्देशमाकर्ण्य त्तते त्तारमिवाहितम् ।
　　दशामसह्यां शोकस्य व्यक्तमार्यो गमिष्यति ॥ १६ ॥

सी—अदिमहिदे वि सअमंडले कहं तुमं सोंत्ति एत्तिआं दुक्ख-
　　सहाया, संपदं मए विणा तए एक्केण एसो चिंतिदव्वो । तुमं
　　वादुस्सरीरे सावहाणो होहित्ति । (क)

---

(क) अतिमहितेपि स्वमण्डले कथं ते सन्ति स्त्रियो दुःखसहायाः । साम्प्रतं मया विना त्वयैकेनैष चिन्तयितव्यः । त्वं भ्रातुः शरीरे सावधानो भवेति ।

---

तेन, सीमन्तः केशविन्यासः 'द्विफालबद्धाश्चिकुराः शिरःस्थिताः'—इति यावत्, तत्र स्थापितेन, अञ्जलिना करयुगलेन संयुतेन भालतले निहितेनेत्यर्थः । निर्गुणा गुण-वर्जिता । चिरपरिचिता चिराय साहचर्यात्सम्प्रवृद्धपरिचयवतीत्यर्थः । इति हेतोः । अनाथा नाथरहिता ।

त्तते त्तारम् इव आहितम् इमं सन्देशम् आकर्ण्य व्यक्तम् आर्यः शोकस्य असह्यां दशां गमिष्यतीत्यन्वयः ।

त्तते रुग्णस्थले त्तारं लवणम् इव आहितं स्थापितं यथा पीडाकरं भवति तद्वत् इमं सीतयोदीर्यमाणां सन्देशं वाचिकम् आकर्ण्य श्रुत्वा व्यक्तं नूनम्, आर्यः रामः शोकस्य मन्योः पश्चात्तापस्य वा, असह्यां सोढुमशक्यां चरमामित्यर्थः दशाम् अवस्थां गमिष्यति प्राप्स्यति । प्राणेभ्योपि प्रियं निरपराधं जनं तथा नाम परिक्लेश्य 'सचेतसः कस्य मनो न दूयते', विशेषतस्तु निकारे सत्यपि प्रतीकारानभिलाषिणं प्रियंवदं शुभचित्तकमिति । पश्चात्तापस्तु दुर्निवारः ॥ १६ ॥

अतिमहिते अत्यर्थं गौरवयुक्ते, स्वमण्डले स्वस्य निजस्य मण्डलं राष्ट्रं तस्मिन् स्वीये प्रदेशे इत्यर्थः । 'कथं ते सन्ति एतावन्तो दुःखसहायाः—इति ।

---

१ 'एत्तिआ' इति प्राकृतपदं 'स्त्रियः' इति संस्कृत पदेनानूदितं सम्पादक-द्वयेन । तथा सति वाक्यं निरर्थकं भवति, पाणिनिव्याकरणविरुद्धञ्च । 'ते' इति प्रथमाबहुवचनान्तं पदं न 'स्त्रियः' इत्येतेन सम्बद्धुं शक्यते भिन्नलिङ्गत्वात् । षष्ठ्येकवचनान्तत्वे तु यदि लक्ष्मणस्य सन्ति स्त्रियस्तर्हि रामस्यापि भविष्यन्त्येव । पाणिगृहीती तु लक्ष्मणस्योर्मिलैव, तदर्थञ्च बहुवचनान्तं 'स्त्रियः' इति पदमसङ्गत-मेव स्यादिति 'एत्तिआ'—इत्येतस्य 'एतावन्तः' इति संस्कृतपदमादृतमस्माभिः सर्वथा चैतत्सङ्गतमिति बनारसीदासमहोदयः ।

२ 'स्वक' इति शोभनतरम् ।

ल—अनुरूपमेतन्महानुभावतायाः।

सी—वच्छ लक्खण, पणमिदव्वा तुए मम वअणादो राहवउलराअधाणी भअवदी अयोज्ञा, सुस्सूसिदव्वो पडिमागदो महाराओ, साहिदव्वा अज्जूणं आणत्ति, समस्सासिदव्वा पिअंवदा मम पिअसहीओ, सुमरिदव्वा सव्वकालं मंदभाइणी। (क)

( इति रोदिति )

ल—( सोद्वेगम् )

आर्यां स्वहस्तेन वने विमोक्तुं श्रोतुश्च तस्याः परिदेवितानि।
सुखेन लङ्कासमरे हतं मामजीवयन्मारुतिरात्तवैरः॥ १७॥

( विलोक्य )

एते रुदन्ति हरिणा हरितं विमुच्य
हंसाश्च शोकविधुराः करुणं रुदन्ति।
नृत्तं त्यजन्ति शिखिनोऽपि विलोक्य देवीं
तिर्यग्गता वरममी न परं मनुष्याः॥ १८॥

---

(क) वत्स, लक्ष्मण! प्रणमितव्या त्वया मम वचनात् राघवकुलराजधानी भगवत्ययोध्या। शुश्रूषितव्यः प्रतिमागतो महाराजः। साधयितव्या श्वश्रूणामाज्ञप्तिः। समाश्वासयितव्याः प्रियंवदा मम प्रियसख्यः। स्मर्तव्या सर्वकालं मन्दभागिनी।

---

यद्यपि पौरा बहवो निवसन्ति मम भर्तुः समीपं तथापि न ते दुःखे सहाया भवितुमर्हन्ति तस्येत्यर्थः। अयम्भावः—मम निन्दापरैः पुरवासिभिरहं वनमध्ये प्रेषिता, तैर्मयि प्रोषितायां दुःखे सुखे च रामस्य साहाय्यं स्वयं विधातव्यमिदानीम्। रामस्य सुखावसरे नूनं ते सर्वेऽपि समुपस्थास्यन्ति, दुःखावसरेपि यदि समुपतिष्ठेयुस्तदा न कापि क्षतिः, परं दुःखकाले पर्युपस्थानं सर्वथा दुःशक्यमिति मया विरहितो रामस्त्वयैव लक्ष्मणेन पर्यवेक्षणीय इत्यर्थः।

त्वया एकेनेति—बहूनां पौराणामन्येषां च भृत्यानां न त्वया कार्याऽपेक्षा, स्वयमेव त्वया प्रयतितव्यं रामशरीरहितायेति।

अनुरूपं सदृशम्, महानुभावता उदाराशयता। 'अनुभावः प्रभावे स्यात्सताञ्च मतिनिश्चये'—इत्यमरः। उदाराशयया रामहितानुध्यानपरया यन्मन्त्रितं तत्रभवत्या भवत्या तत्सर्वथा भवतीं शोभते इत्यर्थः। महाराजः श्वशुरो मम, दशरथ इत्यर्थः। आज्ञप्तिः आज्ञा, आदेश इति यावत्। समाश्वासयितव्याः सान्त्वयितव्याः। प्रियंवदाः सुभाषिण्यः। स्मर्तव्या स्मरणीयास्मि सर्वकालं सर्वदा काले काले इत्यर्थः, अहमिति शेषः, 'स्मरणीयाः समये वयं वयः'—इति।

सोद्वेगं सव्यथं लक्ष्मण आहेति शेषः। आर्यामिति—स्वहस्तेन आर्यां वने

सी——वच्छ लक्खण, आसण्णात्थमयो सूरो । दूरे अ इदो माणुस-
संपादो । उड्डीणा पक्खिणो । संचरंति सापदा । गच्छ, ण जुत्तं परिलंविदुम् । (क)

---

(क) वत्स लक्ष्मण! आसन्नास्तमयः सूर्यः। दूरे चेतो मानुषसम्पातः। उड्डीनाः पक्षिणः। सञ्चरन्ति श्वापदाः। गच्छ न युक्तं परिलम्बितुम्।

---

विमोक्तुं तस्याः परिदेवितानि च श्रोतुम् आत्तवैरः मारुतिः लङ्कासमरे सुखेन हतं माम् अजीवयत्—इति योजना।

स्वहस्तेन निजेनैव करेण आर्यां पूज्यामग्रजस्य पत्नीं वने जङ्गले विमोक्तुं परित्यक्तुं तस्याश्च परिदेवितानि विलापान् मन्युभराक्रान्तानि वचांसीत्यर्थः, श्रोतुमेव केवलम् आत्तवैरः बद्धवैरः मारुतिः हनुमान् लङ्कासमरे लङ्कायुद्धे सुखेन हतं माम् अजीवयत्। अयं भावः—लङ्काजन्ये हतेन मया नायं दुःखावसरो द्रष्टव्य आसीत्। एतद्दर्शनं परमदुःखकरम्। हनुमता सञ्जीवनी मोषधिमानीय तत्प्रयोगेण मां पुनरुज्जीवयता न शोभनमाचरितं नूनम्, जीवन्नेव पश्यामीममवसरम्, मृतस्तु नाद्रक्ष्यम्, हनुमतैव नूनमेषोऽवसरः प्रदर्शितः। बद्धवैरस्य तस्य वैरनिर्यापण-प्रकारः किलायं नोपकारः। वरं तदा मरणं नाद्य दुःखावसरदर्शनमित्यर्थः। रावणशक्त्या विद्धो लक्ष्मणो विगतसञ्ज्ञो भूतले छिन्नमूलो द्रुम इव निपपात, हनूमतानीतेन महाप्रभावेण सञ्जीवनौषधेन सुषेणप्रयुक्तेन पुनश्चैतन्यं लेभे इति रामायणे युद्धकाण्डे सुस्पष्टम्॥ १७॥

विलोक्य परितोदृष्ट्वा इत्यर्थः।

देवीं विलोक्य एते हरिणाः हरितं विमुच्य रुदन्ति, शोकविधुराः हंसाश्च करुणं रुदन्ति, शिखिनोऽपि नृत्तं त्यजन्ति, अमी तिर्यग्गताः वरं न परं मनुष्याः इत्यन्वयः।

देवीं सीतां विलोक्य दृष्ट्वा, एतस्यां दुःखावस्थायामित्यर्थः, एते पुरोगताः हरिणा मृगाः हरितं शष्पं विमुच्य परित्यज्य रुदन्ति अश्रुमोचनं कुर्वन्ति। शोकविधुराः शोकेन विधुराः आप्लुताः शोकाभिभूता इति यावत्, हंसाः इमे पुरोवर्तिनः कलहंसाः करुणं यथा तथा रुदन्ति, करुणमाक्रन्दन्ति। शिखिनः मयूराः। 'शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे। मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः' ॥ इति मेदिनी। नृत्तं नृत्यं त्यजन्ति। अमी पशवः पक्षिणश्च तिर्यग्गताः तिर्यग्योनिगताः, बुद्धिप्रागल्भ्यहीना इति तात्पर्यम्, वरं मनाक्प्रियम्। 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक्प्रिये'—इति कोशः। न परं मनुष्याः मानवाः। परकीयदुःखेन सर्वं वृत्तमजानानामपि तिरश्चां मनो दुःखपूरपूर्णं जातं, निरागसं सीतां स्वयं सन्तापानले प्रक्षिपतां मनुष्याभिमानिनां जनानां कथं न हृदयं दीर्णमिति शोच्यैव जनसमाजस्य स्थितिरिति

ल—(अञ्जलिं बध्वा) सर्वपश्चिमोऽयं लक्ष्मणस्य प्रणामाञ्जलिः। तत्सावधानं परिगृह्यताम्।

सी—णिच्चावहिदा खु अहं। (क)

(क) नित्यावहिता खल्वहम्।

भावः। एतच्च जनापवादहेतुभूतान् पौरानुद्दिश्य लक्ष्मणस्य संरम्भवचनमिति विज्ञेयम् ॥ १८ ॥

आसन्नास्तमयः आसन्नं समीपवर्ति अस्तमयनम् अस्तङ्गमनं यस्य सः, अस्ताचलगामीत्यर्थः। सूर्यः भास्करो दिनमणिः, अपि वा सूर इत्येव पदम्। 'सूरसूर्यार्यमादित्यद्वादशात्मदिवाकराः'—इत्यमरेण रविपर्यायेषु पठितत्वात्। 'शूरश्चारुभटे सूर्ये'—इति च विश्वः। 'सुभटे शूरः सूर्ये च दन्त्योऽपि' इत्यूष्मविवेकः—इति च दीक्षितः। इतश्च अस्माच्च प्रदेशात् दूरे विप्रकृष्टः, मानुषसम्पातः मानुषाः मनुजाः मनुष्या इति यावत्, तेषां सम्पतनं गमनागमने यत्र स प्रदेशः, मनुष्यसञ्चारगोचरो भूभागः, पुरं तन्निकटवर्ती भूप्रदेशश्चैवमुच्यते। उड्डीनाः पक्षिणः, प्रदोषे समुपस्थिते निजावासान् प्रति पतत्रिणो गच्छन्तीति प्रसिद्धमेव। श्वापदाः वन्याः पशवः सञ्चरन्ति यातायातमारब्धवन्तः। गच्छ प्रयाहि वनादस्मात्, न युक्तम् उचितं परिलम्बितुं कालक्षेपं कर्तुमित्यर्थः।

प्रदोषसमयस्य स्वाभाविकं वर्णनं कविप्रवरेण यदिहोपनिबद्धं तत्परमरमणीयं सरसं चारु चेति मन्यामहे।

शूरस्य लक्ष्मणस्य परिप्रेषणं भीरोश्च सीतायाः निश्शंकतैषा न स्वाभाविकीति कश्चित्, ज्येष्ठाया अग्रजपत्न्याः कनिष्ठस्य देवरस्य समक्षं स्वमनोगतभयसञ्चारप्रदर्शनमसङ्गतम्, कनिष्ठस्य च देवरस्य सुतसमस्य परिरक्षोपायचिन्तनञ्च स्वाभाविकमेवेति सर्वमवदातम्।

अञ्जलिं बध्वा निजकरयुगलं संयोज्येत्यर्थः। सर्वपश्चिमः सर्वेषामन्तेभवः, चरमतम इत्यर्थः। अयं मत्कृतः प्रणामाञ्जलिः प्रणामार्थं संयुतं करयुगम्, इतः परं न कस्यापि प्रणामाञ्जलिः समुदेष्यति बन्धुभृत्यादेरभावे। तत् तस्मात्, वनमध्ये चेतः परमेकाकिन्या तत्रभवत्या भवितव्यमित्यतः सावधानम् अवधानेन सहितं यथास्यात्तथा परिगृह्यतां स्वीक्रियताम्।

नित्यावहितेति नित्यम् अवहिता दत्तावधाना खलु अहमस्मीति यद्वचनं तदभिमानपुरस्सरं प्रतिभाति। कान्तारे विजने सुकोमलाङ्ग्याः सीतायाः स्थितिर्लक्ष्मणं साशङ्कं स्थाने करोतु नाम। ज्येष्ठभ्रातृजाययापि आत्मसम्मानवत्या देवरस्य सुतसमस्य समक्षं मनोगतं कातर्यं न बहिः प्रदर्शनीयमिति युक्तमेव सीताया उत्तरम्।

न केवलमिदानीमेव, अपि तु त्वयि गतेपि सर्वदा प्रमादरहिता स्थास्यामीति

ल—विज्ञापयामि देवीम्—

आर्यं मित्रं बान्धवान् वा स्मरन्त्या
शोकादात्मा मृत्यवे नोपनेयः ।
इक्ष्वाकूणां सन्ततिर्गर्भसंस्था
सेयं देव्या यत्नतो रक्षणीया ॥१६॥

सी—अप्पडिहदवअणो खु सोमित्ती । (क)

---

(क) अप्रतिहतवचनः खलु सौमित्रिः ।

---

सीताया आश्वासनमूलं वचः । येन लक्ष्मणः कान्तारे तां परित्यक्तुमुत्सहेत, अग्रजस्य आदेशपालकश्च चारुतया स्यादिति महती धैर्यमात्रा सीतया प्रदर्श्यते । अबलानामपि काले सबलात्वं भूषणमेव गौरवास्पदञ्च । अत एव पण्डितराजो जगन्नाथोऽप्याह स्म भामिनीविलासे—

वनान्ते खेलन्ती शशकशिशुमालोक्य चकिता
भुजप्रान्तं भर्तुर्भजति भयहर्तुः सपदि या ।
अहो सेयं सीता दशवदननीता हलरदैः
परीता रक्षोभिः श्रयति विवशा कामपि दशाम् ॥ इति ।

आर्यं मित्रं बान्धवान् वा स्मरन्त्या देव्या शोकात् आत्मा मृत्यवे न उपनेयः । सेयं गर्भसंस्था इक्ष्वाकूणां सन्ततिः यत्नतो रक्षणीयेति योजना ।

आर्यं भर्तारं रामं, मित्रं सखीजनं, बान्धवान् अपरांश्च भर्तृकुले पितृकुलेच वर्तमानान् वन्धून् स्मरन्त्या ध्यायन्त्या देव्याऽत्रभवत्या दिव्यगुणवत्या शोकात् कारणात् अत्यन्तं शोकस्य वशवर्तिन्या सत्या आत्मा स्वं मृत्यवे नोपनेयः मरणव्यवसायो न कार्य इत्यर्थः । सेयं त्वयि वर्तमाना गर्भसंस्था सम्प्रति गर्भावस्थामाप्ता इक्ष्वाकूणां संततिः अपत्यं यत्नतः यत्नमास्थाय रक्षणीया परिरक्ष्या ।

निस्स्वार्थं वचनमिदं लक्ष्मणस्य सुवर्णाक्षरैर्लेख्यमिति नात्र सन्देहः । अपरत्र देशे समाजे च सोदर्या राज्यकामा यादृशान् जघन्यान् व्यापारान् कुर्वते तेषां गन्धोऽपि नात्र दृश्यते । रामस्यानन्तरं तदपत्यं राज्यभाग्भवेदिति लक्ष्मणस्य हृद्गतो मनोरथः । तदर्थञ्च रामप्रसूतिरक्षणार्थमापदां सहस्रं सोढ्वा स्वजीवनं रक्षणीयमिति सीतां प्रार्थयते । अवमाननम् उच्चैःपदात्पतनं निर्वादञ्चासहमानया क्रियेतैवात्मघातः सीतयेति जागर्त्येवाशङ्का लक्ष्मणचेतसीति दिक् ॥१६॥

अप्रतिहतवचनः अप्रतिहतं वचनं यस्य सः, विफलं यस्य वचो नभवति; यदपि तेनोच्यते स्वीक्रियते परिपाल्यते चापरैरिति । सौमित्रिः सुमित्रानन्दनः ।

ल—इयमपरा विज्ञापना।

सी—का अएणा ? (क)

ल—ज्येष्ठस्य भ्रातुरादेशादानीय विजने वने।

परित्यक्तासि देवि त्वं दोषमेकं क्षमस्व मे ॥ २० ॥

सी—( ससम्भ्रमम् ) जेट्ठवअणाणुवत्ति तुमेत्ति परितोसकाले को दोसो आसंकीअदि ? (ख)

ल—( सप्रदक्षिणं प्रणम्य परिक्रामति )

---

(क) कान्या ?

(ख)ज्येष्ठवचनानुवर्ती त्वमिति परितोषकाले को दोष आशङ्क्यते।

---

विज्ञापनान्तरमेवाह ज्येष्ठस्येति—

देवि ! ज्येष्ठस्य भ्रातुः आदेशात् आनीय विजने वने परित्यक्तासि, एकं दोषं मे क्षमस्वेत्यन्वयः।

ज्येष्ठस्य अग्रजस्य भ्रातुः रामस्येत्यर्थः, आदेशात् नियोगात्, आनीय रथमारोप्य अत्र प्रापय्य विजने जनरहिते वने परित्यक्तासि परित्यक्ता असि एतस्यां दशायां विमुक्तासि विरहिणी, एकं दोषम् इममेव प्रथमं दोषं अपराधम् मे मम क्षमस्व क्षम्यताम्। अद्यावधि न कश्चनापि कृतोऽपराधः, अयं तु प्रथमापराधः, प्रथमश्चापराधः क्षन्तव्यो भवति।—यद्वा नायमपराधो लघुः, अपि तु गुरुरेव। गौणोऽपराधः सर्वेण क्षम्यते, अयं तु प्रधानोऽपराधः सोऽपि क्षन्तव्यः इति प्रार्थयते। 'एकोऽन्यकेवलप्रधानेषु'— इति कश्चित्। 'एके मुख्यान्यकेवलाः'— इत्यमरसिंहश्च ॥ २० ॥

ससंभ्रमं सत्वरम्। ज्येष्ठस्य गुरुजनस्य वचनम् अनुवर्तते अनुगच्छति तच्छीलः, तादृशः त्वम् इति परितोषकाले परितोषस्य संतोषस्य प्रसन्नतायाः काले अवसरे को दोषः अपराधः आशङ्क्यते त्वयेतिशेषः। गुरुजनवशवर्तित्वं ननु भूषणं नतु दूषणमिति भावः। यथाह कविपुङ्गवो भारविः—

स वंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम्।
कृच्छ्रेषु व्यर्थया यत्र भूयते भर्तुराज्ञया ॥ इति।

प्रदक्षिणेन सहितं सप्रदक्षिणं प्रदक्षिणपुरस्सरमित्यर्थः प्रणम्य नमस्कृत्य सीतामिति शेषः, परिक्रामति गच्छति। सविशेषपूज्येषु विशिष्टेऽवसरे वा पूज्यवर्येषु नमस्कारः प्रदक्षिणासहितो भवतीति मातृदेवानां पितृदेवानामाचार्यदेवानाञ्च भारतीयानामार्याणामाचारः। अत्यन्तं सत्करणीयायाः सीतायाः आजन्मावधि परित्यागकाले समुपस्थिते युक्त एव सप्रदक्षिणः प्रणामो लक्ष्मणस्य।

सी—( रोदिति )

ल—( [१]दिशोऽवलोक्य ) भो भो लोकपालाः, शृण्वन्तु भवन्तः—

एषा वधूर्दशरथस्य महारथस्य ।

सी—अदि सिलाहणिज्जाइं अक्खराइं सुणीअंदि । ( क )

ल—रामाह्वयस्य गृहिणी मधुसूदनस्य ।

सी—कुदो मे तादिसो वाहधेओ ? ( ख )

ल—निर्वासिता पतिगृहात्—

सी—( कर्णौ पिदधाति )

ल—विजने वनेऽस्मिन्

एकाकिनी वसति रक्षत रक्षतैनाम् ॥ २१ ॥

---

(क) अतिश्लाघनीयान्यक्षराणि श्रूयन्ते ।

(ख) कुतो मे तादृशो भागधेयः ?

---

धैर्यभरेणावद्धान्यश्रूणि मन्युवेगोद्रेकाल्लक्ष्मण प्रस्थानवेलायां सहसा विवृत-द्वाराण्यभूवन्निति भावः ।

दिशः प्राच्यादयः ताः अवलोक्य दृष्ट्वा । दिगवलोकनं दिक्पालसम्बोधनाभिप्रायेण वेदितव्यम् । लोकपालाः लोकानां पालका इन्द्रादयस्तत्सम्बुद्धौ । शृण्वन्तु आकर्णयन्तु ।

एषा महारथस्य दशरथस्य वधूः, रामाह्वयस्य मधुसूदनस्य गृहिणी, पतिगृहात् निर्वासिता एकाकिनी अस्मिन् विजने वने वसति, एनां रक्षत रक्षतेति योजना।

इदानीं ग्रन्थांशो यथाक्रमं व्याख्यायते । एषा ( सीता ) महारथस्य महान् रथो यस्य स महारथः रथिश्रेष्ठः तस्य, दशरथस्य एतन्नाम्नो नृपस्य वधूः स्नुषा, अस्तीति शेषः । 'वधूर्जाया स्नुषा स्त्री च'—इत्यमरः ।

अतिश्लाघनीयानि प्रशस्यानि अतिमनोहराणीत्यर्थः, अक्षराणि वचनानि, श्रूयन्ते निशम्यन्ते । रामाह्वयस्य राम इति आह्वयो यस्य स रामाह्वयः तस्य रामसञ्ज्ञकस्येत्यर्थः । 'अथाह्वयः आख्याह्वे अभिधानञ्च नामधेयञ्च नाम च'—इत्यमरः । मधुसूदनस्य मधुसञ्ज्ञकस्य दैत्यविशेषस्य सूदनो हन्ता, सूदयतीति, विष्णोरित्यर्थः । गृहिणी भार्या । भागधेयं भाग्यम् । निर्वासिता वराकी कुतो नाम गृहिणीदानीं रामस्य । निर्वासिता निष्कासिता । पतिगृहात् पत्यूरामस्य भवनात्, रामेणैवेत्यर्थः । इदं श्रुत्वा सीता कर्णौ पिधत्ते, अत्यन्तनिष्ठुरत्वादस्य वचनस्य । 'निर्वासिता

सी—(गर्भं दर्शयति)

ल—एनामपि भगवतीम् आर्यायाः कृते विज्ञापयामि—

जातश्रमां कमलगन्धकृताधिवासैः
काले त्वमप्यनुगृहाण तरङ्गवातैः।
देवी यदा च सवनाय विगाहते त्वां
भागीरथि! प्रशमय क्षणमम्बुवेगम्॥ २२॥

पतिगृहादि'ति वचनं सीतायां वृजिनभावमप्यापादयतीति सती सीताऽसहा सोढुं तदिति युक्तं कर्णपिधानम्। एकाकिनी असहाया, विजने जनरहिते अस्मिन् वने वसति, अद्यप्रभृति निस्सहायाऽवतिष्ठते, एनां सीतां रक्षत रक्षत गोपायत, सर्वथा भवन्तो लोकपाला एवास्याः शरणमित्यर्थः॥ २१॥

सीताऽऽत्मनो रक्षां न प्रार्थयते, अतिनिर्विण्णायाः कुतो नाम स्वीये जीविते भवेन्मोहः। स्वस्मिन् वर्तमानः प्रजानिषेकस्तु सर्वथा संरक्ष्य इति तस्यैव कृते तयाऽऽत्मा रक्ष्यते इति तमेव दर्शयति हस्तेन निर्दिशति। लोकपाला एतं परिरक्षन्तु, न मम जीवनव्यपेक्षेति तस्या हृद्गतो भावः।

आर्यायाः पूज्यायाः सीतायाः कृते निमित्तम् एनामपि पुरोवर्तिनीं भगवतीं भागीरथीं गङ्गां विज्ञापयामि विनिवेदयामि।

भागीरथि! जातश्रमां कमलगन्धकृताधिवासैः तरङ्गवातैः काले त्वमप्यनुगृहाण। यदा च देवी सवनाय त्वां विगाहते क्षणं अम्बुवेगं प्रशमयेत्यन्वयः।

भागीरथि गङ्गे! जातश्रमां जातः श्रमो यस्यास्ताम्। एकाकिनीत्वात् सर्वमपि जीवनोपायभूतं कर्मजातं स्वयमनुष्ठास्यति जनकजा, गर्भभरेण च सद्यः श्रान्ता भविष्यती त्यायतिमवेक्ष्य हितैषिणो मनीषिणो लक्ष्मणस्य वचः। काले श्रमावसरेष्वित्यर्थः। कमलगन्धकृताधिवासैः कमलानां गन्धेन कृतः अधिवासो येषु तैः, अरविन्दसौरभेणापादितपरिमलैः, तरङ्गवातैः तरङ्गाणां वातैः ऊर्मिसम्पृक्तैरनिलैः। एतेन तेषां शीतलत्वमतिशयसौरभवत्वं च सूचितम्, तादृशा एव वायवः श्रान्तानां श्रमापहरणाय कल्पन्ते। अनुगृहाण सीतामनुगृह्णीष्व, श्रमापनोदेन जीवननोदनेन च तां सेवस्व प्रतिदिनमित्यभ्यर्थनम्। एतत्तु तटप्रदेशेऽवस्थितायाः सीतायाः सेवनाभिप्रायेणोक्तम्, स्नानकालेऽपि भवत्याऽनुग्राह्या तत्रभवतीत्याह देवीति—यदा यस्मिन् काले देवी दिव्यगुणशीला सवनाय अभिषवाय स्नानायेति यावत् त्वां गङ्गां विगाहते विलोडते, त्वयि निमज्जतीत्यर्थः, तदेत्यध्याहार्यम्. क्षणं मुहूर्त्तं यावत्, अम्बुवेगम् अम्बुनो जलस्य वेगं रयं प्रशमय शान्तं कुरु, तीव्रवेगेन भावत्के पयःपूरे प्रवहति तत्रभवती सीता मा नामानिष्टं विन्देतेति प्रवाहगतिमान्द्यं प्रार्थ्यते 'सवनं त्वध्वरे स्नाने सोमनिर्दलनेऽपि च'—इति मेदिनी। 'संस्कारो गन्धमाल्याद्यैर्यस्यात्तदधिवासनम्'—इत्यमरश्च॥ २२॥

ये केचिदत्र मुनयो निवसन्त्यरण्ये
विज्ञापयामि शिरसा प्रणिपत्य तेभ्यः।
स्त्रीत्युज्झितेत्यशरणेति कुलागतेति
देवी सदा भगवतीत्यनुकम्पनीया ॥ २३ ॥
एषोऽञ्जलिर्विरचितो वनदेवतानां
विज्ञापनां क्षणमिमामवधारयन्तु।
सुप्ता प्रमादवशगा विषमस्थिता वा
यत्नादियं भगवतीभिरवेक्षणीया ॥ २४ ॥

---

भगवतीं भागीरथीं सम्प्रार्थ्य करुणार्द्रहृदयो लक्ष्मणः सम्प्रति गङ्गातीरवर्तिनो मुनीन् सीतास्वस्तये प्रार्थयते 'ये केचिदिति—

ये केचिद् मुनयः अत्र अरण्ये निवसन्ति तेभ्यः शिरसा प्रणिपत्य विज्ञापयामि, स्त्री इति उज्झिता इति अशरणा इति कुलागता इति भगवती इति देवी सदा अनुकम्पनीया।

ये केचित् येषां नामस्वरूपप्रतिलम्भः सम्प्रति नैवास्माकं ते भगवन्तो मुनयः तपोधनाः अत्र अस्मिन् अरण्ये वने निवसन्ति तेभ्यः शिरसा शीर्षेण प्रणिपत्य प्रणिपातपुरस्सरं, नतमस्तकः सन्नहमित्यर्थः विज्ञापयामि निवेदयामि। किमिति ? एषा देवी दिव्यगुणगणवती सीता सदा अनुकम्पनीया दयनीया, दयादृष्ट्या भवद्भिरनुग्राह्येत्यर्थः। कुत इत्याह—स्त्री इति, यतः इयमबला, उज्झिता त्यक्ता पत्या पतिबान्धवैरपि तथा, तादृशी मानधना च तादृश्यां दशायां पितृकुलेपि गन्तुं नालमिति बन्धुभिरुभयपार्श्ववर्तिभिः परित्यक्ता, अशरणा शरणरहिता नीरक्षकेत्यर्थः। शरणं गृहरक्षित्रोः'—इत्यमरः। कुलागता इति कुलादागता सत्कुलजा महावंशप्रसूतिरिति यावत्, भगवती दयादाक्षिण्यादिगुणग्रामैश्वर्यशालिनीत्यर्थः ॥ २३ ॥

परिश्रान्ता क्लान्ती च परिश्रमनिवृत्तये गङ्गया पर्यवेक्ष्या सीता, जाग्रती च सती सन्निकृष्टैर्मुनिजनैः, सुप्ताऽनवधाना पुनर्वनदेवताभिरिति तासां प्रार्थनमुपक्रमते 'एषोऽञ्जलि'रिति—

एषः अञ्जलिः वनदेवतानां विरचितः इमां विज्ञापनां क्षणम् अवधारयन्तु, सुप्ता प्रमादवशगा विषमस्थिता वा इयं भगवतीभिः यत्नादवेक्षणीयेति योजना।

एषः अञ्जलिर्विरचितः, मयेति शेषः। करद्वयं सम्पुटीकृतमित्यर्थः। वनदेवतानां वनस्य देवता अधिष्ठात्र्यो देव्यः तासां निमित्तं, तासां प्रसत्तिलाभायेतिभावः। इमां विज्ञापनां मत्कृतामिदं निवेदनं क्षणं मुहूर्तं यावत् न तु चिरम्, अवधारयन्तु सावधानेन मनसा शृण्वन्तु इत्यर्थः। सुप्ता शयाना, अतएवात्मानं रक्षितु मशक्ता समुपस्थितादुपद्रवात्, प्रमादवशगा प्रमादस्य वशं गता प्रमादवशवर्तिनी सती, सर्वोपि काले प्रमाद्यति जनः इति सीताया अपि सुलभः प्रमादः। विषमस्थिता वा,

भो भो हिंस्रा भूमिरेषा भवद्भिः
वर्ज्या देशो न प्रवेश्यः परेषाम्।
मृग्यो मृग्यो विप्रवासे सखीनां
यूयं सख्यो मा क्षणं मुञ्चतैनाम् ॥२५॥
सख्यो नद्यः स्वामिनो लोकपालाः
मातर्गङ्गे भ्रातरः शैलराजाः।
भूयो भूयो याचते लक्ष्मणोऽयं
यत्नाद्रक्ष्या राजपुत्री गतोऽहम् ॥२६॥

(प्रणम्य निष्क्रान्तः)

---

वेति विकल्पे। विषमे स्थिता आपदं प्राप्ता वेत्यर्थः। इयं सीता भगवतीभिः यत्नात् स्वयं प्रयत्य अवेक्षणीया परिपालनीया। सीतेयं वनं प्राप्ता वनदेवतानां शरणं गतैव, शरणागतपरिपालनञ्च सतां धर्मः, तस्माद् भगवतीभिर्वनदेवताभिः सर्वदा परिरक्षणीयेति सादरं ताः प्रार्थ्यन्ते लक्ष्मणेन ॥२४॥

भो भो हिंस्राः। एषा भूमिः भवद्भिः वर्ज्या, परेषां देशः न प्रवेश्यः। मृग्यः। सखीनां विप्रवासे यूयं सख्यः एनां क्षणं मा मुञ्चत।

भो भो हिंस्राः हिंसकाः जन्तवः! एषा भूमिः सीतानिषेवितेयं वनस्थली भवद्भिः सर्वैरेव वर्ज्या वर्जनीया, परिहातव्येति यावत्। परेषां भवद्विरुद्धस्वभावानां हिंसारहितानां जन्तूनां गोमृगादीनां यमनियमवताञ्च तपोधनानां देशः न प्रवेश्यः प्रवेष्टव्यः, शान्तचेतसां हिंसादोषवर्जितानामयं विषयः सर्वथापि भवत्प्रवेशानर्ह इति भावः। किञ्च, भो मृग्यः हरिण्यः! सखीनां विप्रवासे विरहे, यूयं भवत्यः, एवेत्यध्याहार्यम्, सख्यः, 'सीतायाः' इति शेषः, 'भवत' इत्यपिच। एनां सखीप्रियां जानकीं क्षणम् अचिराय, मुहूर्त्तमिति यावत्, मा मुञ्चत न परित्यजत। अयोध्यावासिनीनां सखीनां विरहे भवतीभिरेव जनकजा विनोदयितव्येति भावः। 'मास्म मालं न वारणे'—इत्यमरः ॥२५॥

सख्योनद्यः! स्वामिनो लोकपालाः! मातर्गङ्गे! भ्रातरः शैलराजाः, राजपुत्रा यत्नाद् रक्ष्या (इति) भूयः भूयः अयं लक्ष्मणः याचते, अहं गतः।

भो नद्यः सख्यः सत्यो दिवानिशं राजपुत्रीं रक्षत, भो स्वामिनः प्रभवः लोकपालाः इन्द्रादयः। इन्द्रो वरुणो यमः कुबेरश्च लोकपाला उच्यन्ते। ते सर्वेपि यूयं जानकीं परिरक्षत। जननि भागीरथि। भ्रातरश्च पर्वतराजाः, शैलानां राजानः इति, पर्वतश्रेष्ठाः इत्यर्थः। भवद्भिः एषा राजपुत्री राज्ञो जनकस्य नन्दिनी यत्नात् परिरक्षणीयाऽखिलेभ्योऽनिष्टेभ्यः। अयं लक्ष्मणः भूयः भूयः पुनः पुनः, याचते प्रार्थयते। सखीषु, संरक्षकेषु, मातरि, भ्रातृषु च भवत्सु सङ्क्रमय्य नैजं भारं कृतकृत्योऽस्मीदानीं संवृत्तः इति अहं गतः, एषोऽस्मि प्रस्थितः स्थानादस्मात् ॥२६॥

सी—कहं सच्चं एव मं एआइणीं परिच्चइअ गदो लक्खणो, ( विलोक्य ) हद्धी हद्धी ! अत्थमिदो सूरो, सरेण वि लक्खणो ण दीसई, हरिणा वि सअं आवासं आअन्ति, उड्डीणा पक्खिणो, संचरंति सापदा, आच्छादीअदि अंधआरेण दिट्ठी, णिमाणुसं महारण्णं, किं करेमि मंदभाआ, कीस अरण्णहिं पव्वजमि एआइणी अदेस असलाका ति णं मि मि ( ? ) किंणुखु मए पापं किदं, जस्स दाणिं एव विरहं सव्वहा अणुभाविदोह्मि, कहं देहवितोनलि ( ? ) कहं दाव लक्खणणिउत्तावण-देवता..............., कहं दे राहवकुलक्कमागदा वसिट्ठवंमीइप्पमुहा महाप्पहावा महेसिणो ते दाणिं मं परित्ता अ अभिदेहिति ? (क)

(क) कथं सत्यमेव मामेकाकिनीं परित्यज्य गतो लक्ष्मणः, ( विलोक्य ) हा धिक् ! हा धिक् ! अस्तमितः सूर्यः, स्वरेणापि लक्ष्मणो न दृश्यते, हरिणा अपि स्वकमावासमायान्ति, उड्डीनाः पक्षिणः, सञ्चरन्ति श्वापदाः, आच्छाद्यतेऽन्धकारेण दृष्टिः, निर्मानुषं महारण्यम्, किं करोमि मन्दभाग्या, कीदृशमरण्यैः प्रव्रजाम्येकाकिनी,............किन्नु खलु मया पापं कृतम्, यस्येदानीमेव विरहं सर्वथाऽनुभवितास्मि । कथं.........कथं तावल्लक्ष्मणनियुक्ता वनदेवता.........कथं ते राघवकुलक्रमागता वसिष्ठवाल्मीकिप्रमुखा महाप्रभावा महर्षयस्त इदानीं मां परित्यज्य...... ।

एवमुक्त्वा भूयोऽपि नमस्कृत्य जानकीं यद्वा लोकपालादीन् सीतासंरक्षकान् लक्ष्मणः निष्क्रान्तः रङ्गभूमितो निर्गत इत्यर्थः ॥

कथं......लक्ष्मणः, ' मयापि किल गन्तव्यं त्यक्त्वा त्वामिहकानने '—इति यदुक्तं लक्ष्मणेन तत् तथैव परिणतम्, गतश्चासौ मां विहायेति भावः । अस्तमितः अस्तङ्गतः सूर्यो दिनकरः । स्वरेण...दृश्यते, इतो गतेपि लक्ष्मणे तस्य कण्ठरवं निशम्य तस्योपस्थितिरनुमीयते स्म, इदानीं पुनः स्वरसञ्चाराभावात्स इह नास्त्येवेति प्रतीयते । हरिणाः मृगाः, स्वकं स्वीयम्, आवासं विश्रामस्थलम्, आच्छाद्यते आव्रियते, अंधकारेण तिमिरेण । दृष्टिः चक्षुः । ' दृष्टिर्ज्ञानेऽक्ष्णि दर्शने '—इति हैमः । निर्मानुषं मनुष्यशून्यम्, कीदृशं केन प्रकारेण कथङ्कारं वा, अरण्यैः वनैः । भयस्य कृते वनेऽत्र संस्थानम् इतो वा क्वचिदन्यत्र स्थाने वनमध्याद्गमनमुभयमेव दुःशकमिति भावः । भयाकुलया सीतया न स्थातुं शक्यते नवा गन्तुम् । प्रासादेषु

१ ' स्वयम् ' इत्यनुवादः सम्पादकयोः, ' स्वकम् ' इत्यस्माकम् ।
२ 'परित्यक्त्वा' इत्यनुवादस्तु सम्पादकयुगलेनादृतोऽशुद्धः ।

( इति मोहं गच्छति )

( ततः प्रविशति वाल्मीकिः )

वा—( ससम्भ्रमम् )

आकर्ण्य जह्नुतनयां समुपागतेभ्यः
सन्ध्याभिषेकविधये मुनिदारकेभ्यः।
एकाकिनीमशरणां रुदतीमरण्ये
गर्भातुरां स्त्रियमतित्वरयागतोऽस्मि ॥ २७ ॥

तद्यावत्तामेवान्वेषयामि।

( अन्वेषं नाटयति )

---

विहरन्ती दासीशतपरिवारा कथं नाम विजने वने विशेषतो घोरायां तमोबहुलायां निशायामेकाकिनी सहेत वनेऽवस्थितिम्। कालिदासादिभिरपरैः कवयितृभिर्लक्ष्मणद्वितीया सीता वाल्मीकिपदं प्रापिता, कविना दिङ्नागेन तु वराकी कान्तारमध्ये संस्थापितेति कथावस्तुप्रभावस्तीव्रतामापद्यते सहृदयहृदयानि च भृशमाप्लावयति चेत्यलं पल्लवितेन। 'नासूचितस्य प्रवेशः कार्यः' इति राद्धान्तितत्वाद् वाल्मीकेर्नामग्रहणम्।

सीता मूर्छति।

सन्ध्याभिषेकविधये जह्नुतनयां समुपागतेभ्यः मुनिदारकेभ्यः एकाकिनीं अशरणां अरण्ये रुदतीं गर्भातुरां स्त्रियं आकर्ण्य अतित्वरया आगतोऽस्मि।

सन्ध्याभिषेकविधये सन्ध्यायां सन्ध्याकाले यः अभिषेकः स्नानं स एव विधिर्विधानं कर्म तस्मै, सायं स्नातुमित्यर्थः। जह्नुतनया जाह्नवी गङ्गा तां समुपागतेभ्यः समुपेतेभ्यः। मुनिदारकेभ्यः मुनीनां दारकाः अपत्यानि तेभ्यः सकाशात्। एकाकिनीं असहायाम्, अशरणां अरक्षकाम्, अरण्ये रुदतीं वने विलपन्तीम्, गर्भातुरां गर्भभरेण परिखिन्नाम्, स्त्रियं आकर्ण्य श्रुत्वा, एवमवस्था कापि रमणी कान्तारमध्ये विलपन्ती दृष्टास्माभिरिति श्रुत्वेतिभावः। अतित्वरया क्षिप्रमेव आगतोऽस्मि इदं स्थानं प्राप्तोऽस्मि। मुनिदारकैर्निर्दिष्टं स्थानं समधिगतं मया रमणी तु नाद्यापि समधिगतेति गम्यते।

गङ्गा जन्हुतनया जाह्नवी चोच्यते—पुरा किल तपोभरेण प्रीणिता स्वर्गङ्गा हरमौलितो मुक्तिं लब्ध्वा जह्नोर्महर्षेः क्षेत्रं विनाशयतिस्म। रोषावेशात्तेन सम्पीता भगीरथप्रार्थनेन कर्णपुटाद्बहिर्निस्सारितेति पुराणकथात्रानुसन्धेया।

मुनिदारकैर्विलपन्ती सीता दृष्टा नपुनस्तया मानुषचिन्हं दृष्टमिति सीमातिवर्ती सीताशोक इति सूच्यते।

अनाथा आर्यनार्यो न तदा विधर्मिणां हस्तगता अभूवन्, दुराचाराणामपि नाभूदेतावान् प्रचारः, परमपावनानामाश्रमसंस्थानामासीत् सद्भाव इति शोभनो-

सी—( प्रत्यागम्य ) को एस मं विक्खई । ( विचिन्त्य ) ण कोवि, आणत्तिकरलक्खणविण्णत्तिआ अणिचरिन्ती भअवई भाईरई तरंगाए मामणुगह्लादि । ( क )

वा—अयमन्धकारसंरुद्धतया[1] दृष्टिसञ्चारस्य न दृश्यते, अतः शब्दापयिष्ये । अयमहं भोः ।

सी—(सहर्षम्) वच्छ लक्खण पडिणिउत्तोसि ? (ख)

वा—नाहं लक्ष्मणः ।

सी—(अवकुण्ठं नाटयति) अच्चाहिदं, अण्णो एसो को वा परपुरुसो, कहं दाणिं वारइस्सं महाहिदं[2] । ( विचिन्त्य ) एव्वम्—इत्थिआहं एआइणी अ । (ग)

---

( क ) क एष मां वीक्षते । ( विचिन्त्य ) न कोपि, आज्ञप्तिकरलक्ष्मणविज्ञप्त्या अनुचरन्ती भगवती भागीरथी तरङ्गैर्मामनुगृह्लाति ।

(ख) वत्स लक्ष्मण ! प्रतिनिवृत्तोऽसि ?

(ग) अत्याहितम् ! अन्य एष को वा परपुरुषः । कथमिदानीं वारयिष्यामि महाहितम् ? (विचिन्त्य) एवम्—स्त्री अहमेकाकिनी च ।

---

ऽभूत्स समयः । 'विधिर्ना नियतौ काले विधाने परमेष्ठिनि'—इति मेदिनी ॥ २७ ॥

प्रत्यागम्य भूयोऽपि सञ्ज्ञां लब्ध्वा मूर्च्छापगमे सति, वीक्षते पश्यति । वीक्षमाणश्च सीतान्वेषी भगवान् वाल्मीकिरेव नान्यः कश्चन । मूर्च्छातिरिक्तः सन्ध्यागमो भूयोऽपि सीतादृष्टिं विकारितवान्, तेन विस्फारितेक्षणा पश्यन्त्यपि पूर्वं नावधारितवती, अवधारणेऽपि न वाल्मीकिं पुरुषं वाऽविशेषेण प्रत्युत भागीरथीमेव प्रतिपन्नेति महान् व्यामोहः सीतायाः पर्याकुलतातिशयं दर्शयति । आज्ञप्तिकरेति—यो हि लक्ष्मणः समनुल्लङ्घितशासनः सर्वेषामाज्ञापकोभूत्, तेनैव मदर्थं मत्यर्थविनयेन कृता विज्ञप्तयः प्रार्थनानि । अनुचरन्ती मामनुगच्छन्ती ममानुसारिणीत्यर्थः । अद्यापि सीता पुरुषं समीपे सञ्चरन्तं न प्रत्येति, प्रत्युत तरङ्गमालाकुला मूर्तिमती भगवती भागीरथीति निश्चिनोति ।

अन्धकारबाहुल्येन संरुद्धा अवरुद्धा दृष्टिर्न प्रसरति स्वे विषये, अतः स्त्रियमुद्दिश्य करिष्यामि शब्दं मुखेन, येन सापि मामभ्युपपत्तुकाम मिहागतमवगच्छति ।

---

१ 'संरुद्धतया' इति पाठः कल्पितोऽस्माभिः ।
'समृद्धतया' इति तु अपपाठः प्रतिभाति ।

२ 'महाहिदम्' इति सत्यनुस्वारे प्राकृतसुलभे मकारोऽनर्थक इति परित्यक्तोऽस्माभिः ।

वा—एष स्थितोऽस्मि। वत्से, तवाप्यलं परपुरुषशङ्कया, दिवसावसानसवनाय भागीरथीं समुपास्य प्रतिनिवृत्तेभ्यो मुनिदारकेभ्यस्त्वद्वृत्तान्तमुपलभ्य तपोधनोऽहं त्वामेवाभ्युपपत्तुमुपागतः। पृच्छामि चात्रभवतीम्—

धर्मेण जितसङ्ग्रामे रामे शासति मेदिनीम्।
कथ्यतां कथ्यतां वत्से विपदेषा कुतस्तव ॥२८॥

---

वाल्मीकिशब्दमाकर्ण्याविदूरस्था सीता लक्ष्मणमेव प्रतिनिवृत्तं मन्यते।

नाहं लक्ष्मणः इति श्रुत्वा स्मृतएव स्यात्तया रावणः। तस्य मृतत्वादनेन केनाप्यन्येनैव भाव्यमिति परपुरुषमवगत्य भीतभीता सीता पूर्वं स्त्रीसुलभमवगुण्ठनं करोति, नाद्यापि चोत्तरं प्रतिपद्यते किङ्कर्त्तव्यविमूढा सती। महाहितं महान्तमनर्थम्। रावणेन पुरा धर्षिततया तस्यैव परिपाको ऽद्याप्यनुभूयते–इदानीं तु किं भविष्यतीति न ज्ञायते। लक्ष्मणगमनसमकालमेव कोऽयं ग्राहः समुपागतो मां निगलितुमिति निर्गलितोऽर्थः।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद् द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥ इति

भावनैषाऽवश्यं समजनि जानकीमनसि तदानीम्। भयपर्याकुलया महाहितनिवृत्तये परमं साधनं चिन्तितम्। ततश्च जगाद 'स्त्री अहमेकाकिनी च। धार्मिको जनः श्रुत्वैतद्वचः सुदूरं तिष्ठतु नाम, लम्पटाः लुण्टाकास्तु किमन्यदिच्छन्ति। विजने वने निस्सहाया स्त्रीति सर्वथाऽभीष्टमेव तेषाम्। एतदुत्तरं यद्यपि महाहितनिवारणे सर्वथाऽसमर्थं तथापि सत्यवाक्तया पर्याकुलतया च तदेव दत्तं बोद्धव्यम्।

'स्त्री अहमेकाकिनीचे'ति वाक्यं निशम्य पदात्पदमपि गन्तुं नैच्छत्तपोधनः। परमसहानुभूतिमानसौ यदैव वारितस्तदैवावस्थितः, तदानीञ्च तामाश्वासयितुं ब्रवीति एष स्थितोऽस्मि' इति।

तवाप्यलं परपुरुषशङ्कयेति—अहं च निजबान्धवेष्वेवैकतमो गणनीयः, बन्धुभावेन च प्रत्येतव्यं मयीति भावः।

दिवसावसानसवनायेति—दिवसस्य दिनस्य अवसानं अन्तः समाप्तिरित्यर्थः, सवनं स्नानम्, दिवसावसानस्य सवनं दिवसावसानसवनं तस्मै सन्ध्यास्नानायेति यावत्।

समुपास्य संसेव्य निमज्जनोन्मज्जनसंतरणपुरस्सरं सम्यङ् निषेव्येत्यर्थः।

प्रतिनिवृत्तेभ्यः पुनराश्रमं प्रति समुपागतेभ्यः, त्वामेव अभ्युपपत्तुं तवैव साहाय्यं सम्पादयितुमित्यर्थः। धर्मेणेति—वत्से! धर्मेण जितसङ्ग्रामे रामे मेदिनीं शासति कुतस्तव एषा विपद् (इति) कथ्यताम्।

धर्मेण धर्मपुरस्सरं धर्मयुद्धस्याखिलानपिनियमान् परिपाल्येति भावः, जितसङ्ग्रामे जितः सङ्ग्रामो येन तस्मिन्, लङ्कासमरे कूटयुद्धं विहाय धर्मपुरस्सरं

सी—तदो एव्व पुण्णचंदादो मे असणिपादो । (क)

वा—कामं रामादेव हि विपत्तिमुपागता ?

सी—अह इं । (ख)

वा—यदि त्वं वर्णाश्रमव्यवस्थाभूतेन महाराजेन निर्वासितासि तत् स्वस्ति भवत्यै, गच्छाम्यहम् । ( परिक्रामति )

सी—अह विण्णवेमि— । (ग)

वा—कथय ।

सी—जइ रहुवरेण णिव्वासिदेत्ति भअदा णाणुकंपणीआ, एसा उण गब्भगदा रहुसअरदिलीपदसरहपहुदीणं तादिसीणं संतदित्ति दाणिं पडिपालणीआ । (घ)

---

(क) तत एव पूर्णचन्द्रान्मेऽशनिपातः ।

(ख) अथ किम् ।

(ग) अथ विज्ञापयामि ।

(घ) यदि रघुवरेण निर्वासितेति भवता नानुकम्पनीया, एषा पुनर्गर्भगता रघुसगरदिलीपदशरथप्रभृतीनां तादृशानां सन्ततिरितीदानीं प्रतिपालनीया ।

---

युद्धमाचरता रावणो येननिर्जितस्तस्मिन् रामे मेदिनीं पृथ्वीं शासति । येन कूटयोधिनां बलवतां रक्षसामपि साम्मुख्यं धर्मेणैव व्यधायि तस्मिन् रामे राज्यधुरं वहति सति । एषा तव विपद् विपत्तिः कुतः कस्मात्प्रादुर्भूता इति कथ्यतां प्रोच्यताम् । धर्मराज्ये सम्प्रवृत्ते तव क्लेशनरूपोऽधर्मः केनानुष्ठित इति भावः ॥२८॥

ततः तस्मात् , पूर्णचन्द्रात् राकेन्दोः, अशनिपातः वज्रपातः, सुधांशोः सुधासञ्चारो भवति, न कदाचिद् वज्रपातः ततः सम्भवति, सौम्यमूर्तेः प्रणयप्रवणाद् रामात्प्रेयस्या ममायं निर्वासनरूपो निकारः सर्वथाऽनाशंसितः सम्पन्न इति भावः ।

अथ किम् ओमिति, आमिति वा । 'ओमेवं परमं मते' इत्यमरः ।

वर्णाश्रमव्यवस्थाभूतेन, वर्णाश्रमव्यवस्थारूपतां प्राप्तेन, राममूर्त्या साक्षाद् वर्णाश्रमव्यवस्थैवतीर्णा प्रतिभाति, तथा नाम रामेण वर्णाश्रमव्यवस्थापरिपालनं क्रियते यथा तद्रूप एवासौ प्रतीयते इत्यर्थः । स्वस्ति क्षेमं कल्याणं भवतु इत्याशीः । 'स्वस्ति मङ्गलाशीर्वादपापनिर्णेजनादिषु'—इति भागुरिः ।

गच्छाम्यहमिति—रामस्य दण्डव्यवस्थायां नास्ति गन्धोप्यन्यायस्येति भावना वाल्मीकिचेतसि जागर्त्ति, तत्र हस्तक्षेपो निरर्थकः इति सीतां परित्यज्य सोऽपि गन्तुं प्रवृत्तः ।

७

वा—(प्रतिनिवृत्य) कथमिक्ष्वाकुवंशमुदाहरति, तदनुयोक्ष्ये। वत्से! किञ्च दशरथस्य वधूः?

सी—जं भअवं आणवेदि। (क)

वा—किञ्च विदेहाधिपतेर्जनकस्य दुहिता?

सी—अह इं। (ख)

वा—किञ्च सीता?

सी—णहि सीदा, भअवं मंदभाइणी। (ग)

वा—हा हतोऽस्मि मन्दभाग्यः। किंकृतोऽयमत्रभवत्याः प्रासाद-तलादधोऽवतारः?

सी—( लज्जां नाटयति )

वा—कथं लज्जते! भवतु, योगचक्षुषाहमवलोकयामि। ( ध्यानमभिनीय ) वत्से! जनापवादभीरुणा रामेण केवलं परित्यक्ता, नतु हृदयेन। निरपराधा त्वमस्माभिरपरित्याज्यैव। एह्या-श्रमपदं गच्छावः।

---

( क ) यद् भवान् आज्ञापयति।

( ख ) अथ किम्।

( ग ) नहि सीता, भगवन् मन्दभागिनी।

---

रघुवरेण रघुश्रेष्ठेन रामेणेत्यर्थः। अनुकम्पनीया दयनीया। गर्भगता गर्भरूपेणावस्थिता। रघुसगरदिलीपाः पूर्वपुरुषाः दशरथस्तु जनक इति विवेकः। तादृशानां महाप्रभावाणामित्यर्थः।

संततिरिति—सन्तानो मयि वर्तमानोऽस्ति इति हेतोः। प्रतिपालनीया—अहमिति शेषः। आश्रयप्रदानेनानुग्राह्येति भावः।

ईदृशं निकारं प्राप्य सीताया जीवनेच्छा रघुकुलप्रतिष्ठायाः अक्षुण्णतायै, रघुकुलप्ररोहस्तस्यां वर्तमानः सर्वथा प्रतिपालनीय इति। एकामेव रात्रिं विजने वने एकाकिन्या यापयन्त्याः सीतायाः हिंस्रजन्तुद्वारेण विनाशः सम्भवति श्रूयते हि—

सिंहो व्याकरणस्य कर्तुरहरत् प्राणान् प्रियान् पाणिनेः,
मीमांसाकृतमुन्ममाथ तरसा हस्ती मुनिं जैमिनिम्। इति।

शिष्यैः परिवृतानां पाणिनिजैमिन्यादीनामाश्रमस्थानामपि विनाशः सम्भवति वराक्याः सीताया निस्सहायायाः पुनः सुतरां सम्भवति। ततश्च राघवकुलतन्तुविच्छेदः। रामेण निर्वासितेति हेतोः परित्यज्य गच्छंस्तपोधनो रामदण्डभीतो वा स्यादुपघ्नप्रदानानपेक्षो वा। परमेतत्स्त्रीसामान्यावबोधात्। सन्ततिसंकीर्तनेन रघु-

सी—कोणु तुमं ? (क)

वा—श्रूयताम् ।

सोऽहं चिरन्तनसखा जनकस्य राज्ञ-
स्तातस्य ते दशरथस्य च वालमित्रम् ।
वाल्मीकिरस्मि विसृजान्यजनाभिशङ्कां
नान्यस्तवायमवले श्वशुरः पिता च ॥२६॥

---

(क) को नु त्वम् ?

---

कुलकलत्रतानुमाने सति सर्वविचिकित्सानिरासः उपाश्रयप्रदानाभिलाषश्च मुनेरिति दृश्यते किलोच्चैः पदस्य माहात्म्यम् । भारविनापि प्रतिपादितम्—

'वीतस्पृहाणामपि मुक्तिभाजां भवन्ति भव्येषु हि पक्षपाताः'—इति ।

अनुयोक्ष्ये प्रक्ष्यामि । अनुयोगः पृच्छा । 'प्रश्नोऽनुयोगः पृच्छा चे' त्यमरः ।

रघुसगरदिलीपदशरथप्रभृतीनां तादृशानां सन्ततिरिति सीतावचनेन वाल्मीकेर्मनसि तस्याः दशरथस्यवधूत्वानुमानम् । अतः परिपृच्छति 'किञ्च दशरथस्य बधू' रिति बधूः स्नुषा । 'वधूर्जाया स्नुषा स्त्री च'—इत्यमरः । 'विदेहे'ति—विगतो देहो यस्य स विदेहः, निरस्तदेहाभिमानः इत्यर्थः । विदेहो जनकः, तस्य जनपदोपि विदेहः । जनपदनिवासिनोपि विदेहाः । 'जनपदेलुप्'—(४।२।८१), 'लुपि युक्तवद्-व्यक्तिवचने'—(१।२।५१) ।

किङ्कृतः किन्निमित्तः । प्रासादो राजभवनम् । 'हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम्'—इत्यमरः । तलं अनूर्ध्वं अधः इतियावत् । 'अधः स्वरूपयोरस्त्री तलं'—इत्यमरः । 'तलं स्वरूपेऽनूर्ध्वेऽस्त्री'—इति च मेदिनी । अवतारः अवतरणं अंशः इति यावत् । योग चक्षुषा योगचित्तवृत्तिनिरोधः । स एव चक्षुर्नेत्रम् । चक्षुः चष्टे रिति । यथा चक्षुषा इतरो जनः पश्यति योगी योगद्वारा समाहितेन मनसा विप्रकृष्टं परोक्षञ्च कालातीतञ्च सर्वं वेत्तुं समर्थः इति पातञ्जलानां मतम् । दर्शन-सामान्याद्योगोपि चक्षुः तेन । एहि आगच्छ । आश्रमपदं आश्रमस्थानम् ।

तेन तपोधनेनाद्यापि स्वपरिचयो न दत्तः सीतायै, यद्यपि तेन सर्वं विदितं सीताविषये । नचतत्परिचयाभावे तेन सह क्वचिद् गमनं सीतायाः युज्यते इत्यतः पृच्छति—'कः' इति ।

अवले ! सः अहं राज्ञः जनकस्य ते तातस्य चिरन्तनसखा, दशरथस्य च बालमित्रं, वाल्मीकिः अस्मि न अन्यः, अन्यजनाभिशंकां विसृज, तव अयं श्वशुरः पिताचेति योजना ।

अबला निर्बला शारीरिकबलरहिता कोमलाङ्गीत्वात् । व्यायामभ्रमणादिसां-कर्याभावे स्त्रीणां गात्राणि सबलानि कथं भवेयुः । स प्रसिद्धस्तव च विदितचरः

सी—भअवं वंदामि। (क)

वा—वीरप्रसवा भव, भर्तुश्च पुनर्दर्शनमाप्नुहि।

सी—तुमं लोअस्स वम्मीई, मम उण तादो एव्व, ता गच्छ सयं अस्समपअं। (गङ्गामवलोक्याञ्जलिं बध्वा) भअवइ भाईरइ ! जइ अहं सोत्थिणा गब्भं अभिणिउत्तेमि तदा तव दिणे दिणे सुछ उच्छाए कुंदमालाए उवहारं करइस्सम्। (ख)

---

(क) भगवन् वन्दे।

(ख) त्वं लोकस्य वाल्मीकिः, मम पुनस्तात एव, तद्गच्छ स्वमाश्रमपदम्। (......) भगवति भागीरथि ! यद्यहं सुखेन गर्भमभिनिर्वर्तयामि तदा तव दिने दिने सुष्ठु ग्रथितया कुन्दमालयोपहारं करिष्यामि।

---

अहं राज्ञः जनकस्य तव पितुः चिरन्तनसखा चिरन्तनः सखा सुहृत्, जनकस्य मम च मैत्री चिरप्ररूढेति भावः। ते तव तातस्य पूज्यस्य श्वशुरत्वात्। तातः पितरि पूज्ये च'—इत्यमरः। दशरथस्य इति वा दशस्वपि दिक्षु रथो यस्य, अव्याहतगतित्वमनेन सूच्यते। बालमित्रं बालश्चासौ मित्रं चेति बाल्यदशायामेव जातमैत्रीकः। एतेन परमविश्वसनीयता दर्शिता। वाल्मीकि रिति नाम्नाऽस्मि विश्रुतः। वल्मीकस्यापत्यं पुमान्। न अन्यः कश्चनेतरः, यो ह्यविश्वासपात्रं स्यात्। अन्यजनाभिशङ्कां अन्यस्य जनस्य विश्वासानर्हस्य कस्यचिदितरस्य जनस्य अभिशङ्का आशङ्का ताम्। विसृज परित्यज। तव सीतायाः अयमहं श्वशुरश्च पिताचोभयमपि। धन्यासि भो ! या एवं गतेपि 'प्राप्तासि वैदेहि पितुर्निकेतम्'।

वन्दे नमस्करोमि। वीरप्रसवा वीरः प्रसवो यस्याः सा, बलवत्सन्तानजननीत्यर्थः। सुखेन गर्भविमोचनं सम्प्रति मुख्यतमं वस्तु, पतिदर्शनलाभस्तुगौणः, 'जीवन् नरो भद्रशतानि पश्येत्'—अशोकवाटिकामध्येऽवस्थितया स्वयं जानक्येवोक्तम्—

'कल्याणी वत गाथेयं लौकिकी प्रतिभाति मे।
एति जीवन्तमानन्दो नरं वर्षशतादपि' ॥ इति

तस्मात्सुखेन प्रसवविमोकार्थमाशीर्वादो मुनिना प्रथमं प्रयुक्तः। लोकस्य जनस्य। स्वकं स्वीयम्। स्वस्तिना सुखेन। गर्भं अभिनिर्वर्त्तयामि गर्भं सम्पादयामि, गर्भविमोचनं करोमीत्यर्थः। कुन्दमालया कुन्दानां माघ्यानां पुष्पाणां माला स्रक्

---

१ 'स्वकं' इति पाठः साधुतरः। २ 'स्वस्तिना' इति पाठः समीचीनतरः

३ 'करिष्यामि' इत्यनुवादः सङ्गततरः।

वा—अत्यन्तदुःखसञ्चारोऽयं मार्गः, विशेषतस्त्वां प्रति; तद्यथा यथा मार्गमादेशयामि तथा तथा समागन्तव्यम् ।

एतस्मिन् कुशकण्टके लघुतरं पादौ निधत्स्वाग्रतः
शाखेयं विनता नमस्व शनकैर्गर्त्तो महान् वामतः ।
हस्तेनामृश तेन दक्षिणगतं स्थाणुं समं साम्प्रतं
पुण्येऽस्मिन् कमलाकरे चरणयोर्निर्वर्त्यतां क्षालनम् ॥ ३० ॥

सी—(यथोक्तं परिक्रामति)

वा— (निर्दिश्य)

---

तया । प्रथमेऽङ्केऽपि कुन्दमालोपादानमावश्यकमासीत् । यथा च कुन्दमालायाः कृते रूपकस्य सञ्ज्ञा तत्तु–परिष्टाद् वक्ष्यते । उपहारः उपायनं उपढौकनमिति यावत् । 'उपायनमुपग्राह्यं प्राभृतं चोपदा स्त्रियाम्'—इत्यमरमाला ।

अत्यन्तेति—अत्यन्तं यद् दुःखं तेन सञ्चारो यत्रासौ, विषम इत्यर्थः । विशेषतः विशेषेण, त्वां सीतां प्रति, गर्भभराक्रान्तानां नारीणां राजपथेपि सञ्चलनं न सुकरं किम्पुनर्विषमे पथि । मार्गस्य वैषम्यं दर्शयति 'एतस्मिन्नि'ति—

एतस्मिन् कुशकण्टके अग्रतः पादौ लघुतरं निधत्स्व, इयं शाखा विनता शनकैः नमस्व; वामतः महान् गर्त्तः; तेन हस्तेन दक्षिणगतं स्थाणुं आमृश; साम्प्रतं समम्, अस्मिन् पुण्ये कमलाकरे चरणयोः क्षालनं निर्वर्त्यताम् ।

एतस्मिन् कुशकण्टके कुशं दर्भः तस्य कण्टकः सूच्यग्रवत्सूक्ष्मोंऽशः तस्मिन्, अग्रतः कुशकण्टकपरिहाराय ततोऽग्रे पादौ स्वीयौ चरणौ लघुतरं क्षिप्रतरं यद्वा लाघवेन निधत्स्व स्थापय । इयं शाखा कस्यचिद् वृक्षस्य विनता विशेषेण नता अस्ति । तां परिहर्तुं शनकैः शनैः नमस्व नमनं कुरु । वामतः वामपार्श्वे महान् विशालः गर्तः श्वभ्रम्, तेन हस्तेन दक्षिणेने ति भावः, दक्षिणगतं दक्षिणपार्श्ववर्तिनं स्थाणुं शाखा-पत्ररहिततरुं आमृश पतनं वारयितुं तत्स्पर्शनं कुर्वित्यर्थः । साम्प्रतं सम्प्रति समं स्थलं न दन्तुरम्, अतो निःशङ्कमागन्तव्यमिति भावः । अस्मिन् पुण्ये पावने कमलाकरे कमलानां आकरे, यत्र कमलानि प्ररोहन्ति तत्सर उच्यते आकरः खनिः, आकीर्यन्ते (धातवः) इहतु कमलानि अत्रेति । चरणयोः क्षालनं धावनं निर्वर्त्यतां क्रियताम् । रामेण सहागतायाश्चरणौ महता सम्भारेण परैरेव क्षाल्येयाताम्, इदानीं तु तया स्वयमेव क्षालनीयाविति दशावैषम्यं शोकास्पदम् ॥ ३० ॥

यथा यथा वाल्मीकिरादिष्टवान् तथैवेत्यर्थः ।

सर्वेषां इक्ष्वाकूणां पुंसवनादयः क्रियाः अस्माभिः एव पच्यन्ते आत्मनः गर्भं माशुचः ॥

कौशल्यापादशुश्रूषासौख्यं वृद्धासु लप्स्यसे । एताः मुनिकन्यकाः तव सख्यः भगिन्यश्च (इति) पश्य ॥

इक्ष्वाकूणाञ्च सर्वेषां क्रियाः पुंसवनादयः।
अस्माभिरेव पच्यन्ते मा शुचो गर्भमात्मनः॥ ३१॥
कौसल्यापादशुश्रूषासौख्यं वृद्धासु लप्स्यसे।
पश्य सख्यो भगिन्यश्च तवैता मुनिकन्यकाः॥ ३२॥

( इति निष्क्रान्ताः सर्वे )

प्रथमोऽङ्कः।

---

सर्वेषां इक्ष्वाकूणां इक्ष्वाकुवंश्यानामित्यर्थः पुंसवनादयः पुंसवनादिकाः, पुमान् सूयते अनेन इति क्रियाः गर्भाधानादिकाः संस्काराः, अस्माभिरेव पच्यन्ते पूर्णतां नीयन्ते, आत्मनो, गर्भविषयेऽपि माशुचः चिन्तां न कुरु, सर्वोऽपि संस्कारो सीमन्तोन्नयनजातकर्मादिः समीचीनतया सम्पत्स्यते इति भावः॥ ३१॥

किञ्चायोध्यायां कौसल्याद्याः वृद्धाः ऊर्मिलाद्या भगिन्योऽपराश्च सख्योऽभूवन्, अत्राश्रमेऽपि चित्तरञ्जनहेतुभूताः सन्ति तापस्य इत्याह कौसल्येति—

कौसल्यायाः पादयोः चरणयोः या शुश्रूषा सेवा तत्र यत्सौख्यं प्रसन्नता तत् वृद्धासु तापसीषु लप्स्यसे प्राप्स्यसि। वृद्धतापस्यः श्वश्रूवत्सेवनीयाः इति भावः। एताः पुरोवर्तिन्यः मुनिकन्यकाः मुनीनां बालिकाः तव सख्यः भगिन्यश्च सन्ति, तद्रूपत्वेन ताः द्रष्टव्याः इत्यर्थः। इति पश्य अवेक्षस्व। यद्यपि 'घटानां निर्मातुस्त्रिभुवनविधातुश्च कलहः' इति न्यायेन प्रासादविहारो वन्यञ्चेदं जीवनं न तुल्यम्। अपरिचिता वृद्धतापस्यो मुनिकन्यकाश्च श्वश्र्वाः भगिनीनां सखीनाञ्च रूढपरिचयानां तुलां नार्हन्ति तथापि म्रियमाणस्य तृणमप्यालम्बनं भवतीतिकृत्वा एतदेव सीतया बहुमन्तव्यम्। वाल्मीकिसविधे तु सैव सामग्री चित्तरञ्जनार्थमभूत्, सा च तेन प्रस्तुतेति परमसुखावहा तदानींतननानामाश्रमाणां संस्थितिः पावनानाम्॥ ३२॥

अवसितः प्रथमोऽङ्कः। रंगपात्राणि रंगमञ्चं परित्याज्य सर्वेऽपि वहिर्गताः।

अङ्कलक्षणं तु दर्पणकारैरेतद्दर्शितम्—

'प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नविन्दुकः।
युक्तो न बहुभिः कार्यैं र्वीजसंहतिमान्नच॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्।
आवश्यकानां कार्याणामविरोधाद् विनिर्मितः॥
नानेकदिननिर्वर्त्य-कथया सम्प्रयोजितः।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा।
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।
विवाहो भोजनं शापोत्सर्गौ मृत्यूरतं तथा॥

दन्तच्छेद्यं नखच्छेद्यमन्यद् व्रीडाकरञ्च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः ।
देवीपरिजनादीनाममात्यवणिजामपि ॥
प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तितः' ॥ इति

इति श्रीपण्डितकाशिरामतनूजस्य वजीराबादपत्तनवास्तव्यस्य जयचन्द्रस्य
कृतावशोकभगिन्यां सञ्जीवन्यां कुन्दमालाटीकायां
प्रथमोऽङ्कः पर्यवसितः । शुभं भवतु ।

# अथ द्वितीयोऽङ्कः।

( ततः प्रविशतो द्वे मुनिकन्यके )

**प्रथमा**—हला वेदवदि ! दिट्ठिआ वड्ढसि, सीदाए तव पिअसहीए रामच्छामा दुवे पुत्तआ जाआ। (क)

**वेदवती**—पिअं मे पिअं मे। किंणामहेआ ? (ख)

**प्र**—जेट्ठो दाणिं भअवदा कुसोत्ति सद्दाविदो दुदिओ लवोत्ति। (ग)

**वे**—किं समत्ता पहि परिब्भमिदुम् ? (घ)

**प्र**—किं समत्थात्ति भणिअदि,

धावंति हरिणएहिं जहपडिमल्ला किसोरसीहाणं।
तह अ तपस्सिणिहिअअं हरंति पिअदंसणा जुअला ॥१॥

मुणिजणस्स अंकादो अंकादो अदि संचरंति। संपदं वंमी इविरइदं रामाअणं पडति। (ङ)

---

(क) हला वेदवति ! दिष्ट्या वर्द्धसे, सीतायास्तव प्रियसख्या रामश्यामौ द्वौपुत्रकौ जातौ।

(ख) प्रियं मे प्रियं मे। किन्नामधेयौ ?

(ग) ज्येष्ठ इदानीं भगवता कुश इति शब्दापितो द्वितीयो लव इति।

(घ) किं समर्थौ पथि परिभ्रमितुम् ?

(ङ) किं समर्थाविति भण्यते—

धावतो हरिणकैर्यथा प्रतिमल्ला[1] किशोरसिंहानाम्।
तथा च तपस्विनीहृदयं हरतः प्रियदर्शनौ युगलौ॥

मुनिजनस्याङ्कादङ्कादतिसञ्चरतः। साम्प्रतं वाल्मीकिविरचितं रामायणं पठतः।

---

'दिष्ट्या वर्द्धसे' इति सुहृदोः परस्परदर्शने जाते उभयोः प्रियस्य सुखसमाचारस्य प्रबोधनावसरे प्रबोधकेन प्रयुज्यते हर्ष संवर्धनार्थम्।

हलाशब्दष्टावन्तः सखीपर्यायः। 'वाला वासूः सखी हला' इति कोषः।

रामश्यामौ—राम इव श्यामौ, तप्तकाञ्चनवर्णौ। यद्यपि श्यामशब्दः कृष्णवर्णे प्रसिद्धः, घनश्याम इत्यादिश्च प्रयोगस्तथापि कृष्णवर्णस्य कस्यचित्सौन्दर्य

---

१ 'प्रतिमल्लाः' इति बहुवचनान्तं पदं न साधु, 'प्रतिमल्लौ' इति व्याकरणरीत्या समीचीनतरं तथा च व्याख्यातम्।

वे—इमं उत्तंतं सुणिअ एदावत्थं सीदा किदपुण्णेत्ति तक्केमि । अहं
इहवहंति सीदासोवोअणिवत्यं आओ सिणिद्धं अणोएणं (?)।(क)
प्र—संभरणीअं खु एदं । को णेमिसउत्तंतो ? (ख)

(क)इमं वृत्तान्तं श्रुत्वा एतदर्थं सीता कृतपुण्येति तर्कयामि।······
स्निग्धमन्योन्यम् ।

(ख)सम्भरणीयं खल्वेतत् । को नैमिशवृत्तान्तः ?

भारतीय दृष्ट्या अदृष्टचरमश्रुतपूर्वञ्च । सीता–दमयन्ती–द्रौपद्यादीनां परमसुन्दरीणां रमणीरत्नानां रूपराशिवर्णने श्यामशब्दप्रयोगो रामायणमहाभारतनैषधचरितेषु वहुत्र दृश्यते कृष्णवर्णवत्त्वेऽपि ताः सुन्दरीशिरोरत्नानीति नैतन्मन्यामहे । यदि ताः सुन्दर्यो न कृष्णवर्णाः अथ कृष्णवर्णा न सुन्दर्यः । सुन्दरीत्वं कृष्णवर्णवत्वञ्च विप्रतिषिद्धम् । सुन्दरीत्वं तासामव्याहतं तस्मान्न ताः कृष्णवर्णाः इति सिद्धम् । एतदेव चिन्तामणि–विनायकवैद्यमहोदयेनापि स्वीकृतम् । अवश्यं तु ताः श्यामा अभूवन्, तस्माच्छ्यामशब्दस्य कश्चिदन्योऽर्थः स्वीकार्यः, सचायं पुरातनैर्विज्ञैः प्रदर्शितः ।

'शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला ।
तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते ॥'

तप्तकाञ्चनवर्णसाम्येन कुशलवौ श्यामावित्यलं प्रसङ्गेनानेन ।

किन्नामधेयौ—किं नामधेयं ययोस्तौ । किन्नामकौ । 'आख्याह्वयामभिधानञ्च नामधेयञ्च नाम च'—इत्यमरः, शब्दापितः आहूतः, सम्बोधित इति यावत् ।

किं समर्थौ पथि परिभ्रमितुम् ? कविना कुशलवौ किशोरदशायामालिखितौ न स्तनन्धयौ ।

धावत इति—-

यथा प्रियदर्शनौ युगलौ हरिणकैः ( सह ) धावतः तपस्विनीहृदयं च हरतः तथा किशोरसिंहानां प्रतिमल्लौ ( प्रतिभातः ) इति योजना ।

यथा येन प्रकारेण प्रियदर्शनौ प्रियं दर्शनं ययोः तौ सुश्रीकौ युगलौ यमलौ कुशलवौ हरिणकैः मृगशावकैः सह धावतः धावनं कुरुतः, तपस्विनीनां तापसीनाञ्च सर्वासां हृदयं हरतः आकर्षतः, तथा किशोरसिंहानां किशोराश्च ते सिंहाश्च तेषां सिंहपोतानां प्रतिमल्लौ = प्रतियोधिनौ सदृशौ इत्यर्थः प्रतिभातः इति शेषः ।

तथा च कुशलवयोः शरीरे सुश्रीके सुघटिते वलवती स्वास्थ्यभाजने स्फूर्तिमती चेति सूच्यते । 'युग्मं तु युगलं युगम् '—इत्यमरः, युग्मं यमलयामले'—इति च रभसः ।

१ 'एतावदर्थं'—इति वयम्, तथैव च व्याख्यातम् ।

वे—संभरिदो एव्व जएणसंभारो महाराअस्स, णिमंतिदो सांतरवासिणीओ तपोधणाणं संपादो। (क)

प्र—किं णिमंतिदो भअवं वमीई ? (ख)

वे—सुदं वंमीइतपोवणं वि आअदो रामदूदोत्ति। कहिं दाणिं सीदा पेखिदव्वा ? (ग)

प्र—एत्थ एव्व सालपाअवच्छाआए उपविसदि कहं अदिवाहेमित्ति?(घ

( इति निष्क्रान्ते )

प्रवेशकः

---

(क)सम्भृत एव यज्ञसम्भारो महाराजस्य,निमन्त्रितः सान्तर्वासिनीकस्तपोधनानां सम्पातः।

(ख) किं निमन्त्रितो भगवान् वाल्मीकिः ?

(ग) श्रुतं वाल्मीकितपोवनमपि आगतो रामदूत इति।
कुत्रेदानीं सीता प्रेक्षितव्या ?

(घ)अत्रैव सालपादपच्छायायामुपविशति—कथमतिवाहयामीति?

---

इमं वृत्तान्तं श्रुत्वा—सीतायाः स्वास्थ्यसम्पन्नौ प्रियदर्शनौ च सुनौ कुशलत्रौ जातावितीमसुदन्तमाकरर्थ । एतावदर्थं नातोधिकं नातोन्यूनमित्यर्थः। राघवकुलप्रतिष्ठापकौ द्वौ सुतौ यौ प्राप्तौ सीतया तौ तस्याः पुण्यफलरूपौ । सीतया स्वयं तु राजपत्न्यापि राजसुखं नोपभोक्तुं शक्यमिति तत्पुण्यस्येयत्तावधारणम् । तर्कयामि अनुमिनोमि।

सम्भरणीयम् सम्यक्क्रया पूरणीयं खलु एतत् सीतायाः पुण्यमित्यर्थः। सीतादुःखस्यापि समाप्तिः सद्योभाविनी। निवृत्तेच दुःखे सुखागमः । अचिरायैव भर्तृसमागमे जाते सा सुखिनी भविष्यति। सुखञ्च पुण्यानां फलमिति न्यूनं प्रतीयमानं साम्प्रतिकं पुण्यं नितरां वृद्धिं गच्छत्पूर्णतां प्राप्स्यतीति भावः।

सीताया भूयः पुण्योदयो राममूलकः, स च रामोनैमिशारण्ये सत्रमाहर्तुमिच्छतीति रामस्यकृते नैमिशारण्यस्य स्मरणात्तद्विषयकः प्रश्नः 'कोनैमिशवृत्तान्तः' इति—नैमिशं तत्सञ्ज्ञकं वनम्, तस्य वृत्तान्तः उदन्तः।

सम्भृतः सम्भूयैकत्रोपस्थापितः । यज्ञसम्भारः यज्ञोपकरणनिकरः। सान्तर्वासिनीकः अन्तर्वासिनी अभ्यन्तरवासिनी गृहिणी ताभिः सहितः सान्तर्वासिनीकः, सतापसीकः, वनप्रस्थाः गृहस्थाश्रमोपभोगानन्तरं गृहिणीभिः सहिता रहिता वा तपोवनेषु न्यवसन्। यथाह मनुः—'पुत्रेषु भार्यां निक्षिप्य वनं गच्छेत् सहैव वा'—इति। ता एवान्तर्वासिनीव्यपदेशभाजः। सम्पातः व्रातः समूह इति यावत्।

( ततः प्रविशति चिन्तां नाटयन्ती भूम्यासनोपविष्टा सीता )

सी—( निःश्वस्य ) अहो अविस्ससणीअदा पइदिणिट्ठुरभावाणं पुरुस हिअआणं । जं, तंभप्पलिहिदव्वणेआणं दंपदीणं पसंगे उमामहेस्सारोत्ति सग्गे पुडवीए सीदारामोत्ति अदिप्पसिद्धिं आरोविअ णिरवराधा एदं गईं अत्तमणुभाविदोम्हि । अथ कीस अहं अअउत्तं णिंदामि, एव्वं पुरा अअउत्तेण एअस्स वअणीअगाधाधयं सुअमेत्तएण अदरीदमएणुत्ति संपदं अणेअजोअणांतरिदे······सणं आकरणं मारिसि पुण्णदुक्कारिणी जादा । तेण सह दिट्ठो चंदोदओ, तेण सह सुदो कोकिलकलप्पलाओ, तेण सह अणुभूदो मलअमारुदप्परिसो, संपदं मए एआइणीए दिट्ठो अ सुदोअ अणुभूदोअ । पाणं

---

प्रेक्षितव्या द्रष्टव्या । सालपादपच्छायायां सालश्चासौ पादपश्च तस्य छायायाम् । सालः सर्जतरुः, सारो दाढर्यमतिशयितमस्येति । 'पुंसि भूरुहमात्रेपि सालो वरणसर्जयोः'—इति रभसः । उपविशति निषीदति । अतिवाहयामि प्रापयामि भवतीं सीतासमीपे ।

प्रवेशकेऽस्मिन् कुशलवयोर्जन्मकथावर्णनं मुख्यं वस्तु, जुगुप्साकरत्वाद्-बालकजन्मदृश्यं रङ्गे न दर्शयितुं शक्यम्, अतः प्रवेशकावतरणम् । प्रथमा तापसी सर्वं विदन्ती वेदवतीमपि सीतासुतादिवृत्तमवबोधयति । तत्र क्रमप्राप्तं प्रवेशकलक्षणमुच्यते ।

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥

विष्कम्भकः पुनः—

वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः ।
शुद्धः स्यात्सतु सङ्कीर्णो नीचमध्यमकल्पितः ॥ इति ।

नाटयन्ती प्रदर्शयन्ती । भूम्यासनोपविष्टा भूमौ यदासनं तत्र समासीना । प्रकृतिनिष्ठुरभावानामिति—प्रकृत्या स्वभावेन निष्ठुराः कोमलेतराः भावाः आशयाः अभिप्रायाः येषां तेषाम् ।

स्तम्भप्रतिलिखितव्यस्नेहानामिति—स्तम्भेषु प्रतिलिखितव्यः प्रतिलिखितुं योग्यः स्नेहो येषां तेषाम् । चिरस्मरणार्थमशोकादिभीराजभिर्यथा स्तम्भेषु प्रतिलिपीनां लेखनं कारितं, तथैवासामान्यस्नेहवतां दम्पतीनां गणनाप्रसङ्गे सीतारामनाम्नी चिरायोदाहर्त्तव्यतया समुपादातुमुचिते इति भावः ।

परिच्चत्तामित्ति सव्वहा अलिअ मारिसीहिं इत्थिआहिं। पुरा अहं सामिवल्लहदाए सअलमिहिलाजणपत्थणिअं भमिअ अज्ज उण एदावत्थं सोअणीआ संवुत्तेत्ति परिच्चायदुक्खादो लज्जा एव्व मं अहिअदरं वाहेदि । संपदं उण जादा दारा संवड्ढिआ अ, सादरो दाणिं भअवं वंमीई; ण जुत्तं मम एदिणा तपोवणवासविरुद्धेण दीहणिस्सासेण कालं अदिवाहिदुं। एत्त एव्व मरणव्ववसाअस्सु पडिबंधो जं मए पिअसही वेदवदी ण संदिट्ठा णवि उपणि मंतिदाअ। [क]

---

[क] अहो अविश्वसनीयता प्रकृतिनिष्ठुरभावानां पुरुषहृदयाणाम्। यत्स्तम्भप्रलिखितव्यस्नेहानां दम्पतीनां प्रसङ्गे उमामहेश्वराविति स्वर्गे पृथिव्यां सीतारामाविति अतिप्रसिद्धिमारोप्य निरपराधा एतां गतिमत्यन्तमनुभावितास्मि। अथ कीदृगहमार्यपुत्रं निन्दामि। एवं पुरार्यपुत्रेण...............साम्प्रतमनेकयोजनान्तरिते.........अकारणं...............पूर्णदुःखकारिणी जाता। तेन सह दृष्टश्चन्द्रोदयः, तेन सह श्रुतः कोकिलकलप्रलापः, तेन सहानुभूतो मलयमारुतस्पर्शः, साम्प्रतं मयैकाकिन्या दृष्टश्च श्रुतश्चानुभूतश्च। प्राणान् परित्यजामीति सर्वथा अलीकं मादृशीभिः स्त्रीभिः। पुराहं स्वामिवल्लभतया सकलमिथिलाजनप्रार्थनीया भूत्वा (?) अद्य पुनरेतदवस्थं शोचनीया संवृत्तेति परित्यागदुःखतो लज्जैव मामधिकतरं बाधते। साम्प्रतं पुनर्जातौ दारौ संवर्धितौ च। सादर इदानीं भगवान् वाल्मीकिः। न युक्तं ममैतेन तपोवनवासविरुद्धेन दीर्घनिश्वासेन कालमतिवाहयितुम्। एतदेव मरणव्यवसायस्य प्रतिवन्धो यन्मया प्रियसखी वेदवती न सन्दिष्टा नाप्युपनिमन्त्रिता च।

---

दम्पतीनामिति—भार्यापतीनाम्। 'दम्पती जम्पती जायापती भार्यापती च तौ'—इत्यमरः।

प्रसङ्गे अवसरे अधिकारे इति यावत्। सीतारामौ तथा नाम स्निग्धौ परस्परं यथा भूमण्डले तत्तुल्यावपरौ जायापती न सुलभाविति भावः। आह च भारविः—

'करोति योऽशेषजनातिरिक्तां सम्भावनामर्थवतीं क्रियाभिः।
संसत्सु जाते पुरुषाधिकारे न पूरणी तं समुपैति सङ्ख्या'॥ इति।

उमामहेश्वराविति—उमा पार्वती महेश्वरः शिवः। शिवाराधनार्थं तपश्चर्यायै वनं प्रस्थातुकामां दुहितरं 'उ' 'मा' इति पदद्वयेन मेना निषेद्धुमैच्छत्, ततएव पार्वत्या 'उमे'ति नाम पप्रथे। तथा च कालिदासः—

उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम। इति।

आरोप्य प्रापय्य नीत्वेति यावत् । गतिं दशाम् । अत्यन्तं सर्वथा आजीव-मित्यर्थः ।

कीदृक् कीदृशं केन प्रकारेण । सतीनां स्वभर्तृनिन्दावचनं सर्वथैवायोग्यमित्यर्थः। भर्त्ता हि स्त्रियाः परमं दैवतं गुरुश्च । मनुश्चाह—

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोन्यतः ॥ इति ।

स्वयमेव निन्दावचने पुनः किमु वक्तव्यम् ।

चन्द्रस्योदयो विशेषतस्तु राकेन्दोः सर्वथा यूनां मिथः सङ्गतानां प्रियः, विरहिणां तु परमदुःखावहः । एतत्तु कामिनां विषये, मैथिली तु शान्तरसाभिनि-वेशिनी रामविरहेऽपि चन्द्रोदयं निरानन्दमेकाकिनी द्रष्टुं समर्थेति कारुण्यास्पदमेव सहृदयानाम् ।

कोकिलकलप्रलापः—कोकिलः पिकः तस्य कलः मधुरः प्रलापोऽनर्थकं वचः, पौनःपुन्येन भृशं वा पिकडिम्भेन क्रियमाणः कुहूरवः इति भावः ।

मलयमारुतस्पर्शः—मलयो दक्षिणस्यां दिशि पर्वतः यत्र चन्दनस्योद्भवः । मलयस्य मारुतो वायुः, चन्दनसौरभोपेतो वात इत्यर्थः । दक्षिणवायुरिति तात्पर्यम् । तस्य स्पर्शः त्वगिन्द्रियकृतं प्रत्यक्षम् ।

एकाकिन्या रामविरहे केवलमात्मनैवेत्यर्थः । अलीकं मिथ्या असम्भाव्यमिति यावत् । नहि सीतासदृश्यो धीराः स्त्रियो विपदि समुपस्थितायां तां सोढुमक्षमाः प्राणान् विमुञ्चन्ति । प्रत्युत ताभिरापद् भगिनीव सस्नेहं धैर्यं पुरस्कृत्यालिङ्ग्यते इति भावः। सीता हि न सामान्या नारी, अपि तु विशिष्टा रमणी । तथा चोक्तम्—

यस्य न सम्पदि हर्षो विपदि विषादो रणे न भीरुत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ इति ।

सकलमिथिलाजनप्रार्थनीयेति—रामभार्यात्वे सकलाः समग्रा मिथिलापुरीवा-सिनो जनाः स्वमनोरथानां सिद्ध्यर्थमभिलषितपदार्थांश्चाधिगन्तुं तास्ताः प्रार्थनाः अभ्यर्थनाः समुद्दिश्य याचकतामवलम्ब्य मत्समक्षमागच्छन्ति स्म, इदानीं तु नास्मि कमप्युपकर्त्तुं समर्थेत्यहो दशाविपर्ययः ।

परित्यागदुःखतो लज्जेवेति—रामेण परित्यक्तास्मीति पतिविरहेण तथा नाम नास्मि परिक्लेशिता यथाऽपत्रपया । दारौ दारकौ सुतौ कुशलवौ । संवर्द्धितौ सम्यक्त-या वृद्धिं नीतौ । स्तनन्धयत्वानन्तरं बाल्यं प्रापिताविति भावः । सादरः आदरेण सहितः, आदरसूचकेन व्यवहारेण प्रवर्तमान इत्यर्थः । अयञ्चादरः कुशलवनिमित्तः स्याद् भगवतो वाल्मीकेः । सवत्सा जननी विशिष्टादरावसरान् लभते ।

तपोवनवासविरुद्धेनेति—तपोवनं वाल्मीक्याश्रमपदं तत्र यो वासो निवसतिः तद्विरुद्धम् । तपस्विन्या मया रागादिकषायाः परिहातव्याः, मन्युश्च नैव कर्त्तव्यः ।

( ततः प्रविशति वेदवती )

वे—किदो एव्व तपोधणाणं वंदणुव्वआरो, अदिहिजणसमुइदो समुदाआरो अ । ता इदो एव्व सालपादपं गदुअ पिअसहिं संभावइस्सं ( परिक्रम्य विलोक्य च ) एसा विदेहराअतणआ णिदाहमासलआ विअ परिक्खामपांडराए अवत्थाए हिअअं अक्खिवंती सालमूलमलंकरेदि । ता उवसप्पिस्सं ( उपसृत्य ) एसा चिंतापरवसा विअ अहोमुही लंवालआच्छाइअणअणा दीणपेक्खिदा । सद्दावइस्सं सहि वैदेहि ( इति शब्दापयति )

---

कृत एव तपोधनानां वन्दनोपचारः अतिथिजनसमुचितः समुदाचारश्च । तदित एव सालपादपं गत्वा प्रियसखीं सम्भावयिष्यामि ॥ ( — ) एषा विदेहराजतनया निदाघ-मासलतेव परिक्षामपाण्डुरयावस्थया हृदयमाक्षिपन्ती साल-मूलमलङ्करोति । तदुपसर्पामि । ( — ) एषा चिन्तापरव-शेवाधोमुखी लम्बालकाच्छादितनयना दीनप्रेक्षिता । शब्दाप-यिष्यामि । सखि वैदेहि ।

---

मरणव्यवसायः—मरणार्थमुद्योगो निश्चयो वा ।

प्रतिबन्धः अन्तरायः ।

सन्दिष्टा कुशलवजन्मप्रवृत्तिविषये सूचिता ।

उपनिमन्त्रिता जातकर्मादिसंस्कारावसरे समाहूतेति भावः । निःश्वासेन निःश्वस्येति विसर्गमध्यपदोपादानं निस् निर् उपसर्गपूर्वकम्, निश्वासपदं विसर्गरहितं तु 'नि' उपसर्गपूर्वकमिति विवेकः ।

रामेण निर्वासितायाः लक्ष्मणेन वनमध्ये परित्यक्तायाः भगवता वाल्मीकिना चानुकम्पितायाः सीतायाः सुदीर्घकालानन्तरमयं प्रथमः परिचयः । कुशलवयोर्जन्म संवर्धनं रामायणपठनारम्भश्च कालमपेक्षते । परम अद्यापि शोकतमः सीतामनस्तो न सर्वथा प्रणष्टम् । कुशलवयोर्जन्मकृते पूर्वमात्मघातपातकतो निवृत्ता किल सीता, पुनश्च तत्संवर्धनपरा । वालक्रीडास्तयो दर्शं दर्शं जीवन्ती क्रमेण किञ्चित्स्वस्थमानसा कविना यदालिखिता सीता तत्स्वाभाविकं परममनोरमञ्चेति नात्र सन्देहलवः ।

एषा वेदवती मैथिल्याः प्रियसखी काचन मिथिलावास्तव्या रमणी स्यात् 'सकलमिथिलाजनप्रार्थनीये'त्यनुपदमेव मिथिलास्मरणात् । वेदवती यद्यपि मुनिकन्या तथापि तयाऽऽश्रमपदं चिराय परित्यज्य दूरेवस्थीयते इति गम्यते । अत एव कुशलवजन्मादिविषये तस्याः प्रथमया मुनिकन्यकया सूचनमुपक्रमेऽस्याङ्कस्य दर्शितम् ।

सी—( ससम्भ्रमं विलोक्य ) पिअं मे पिअं मे संपत्ता पिअसही वेदवदी साअदं पिअसहीए । ( परिष्वज्योपवेशयति ) (क)

वे—अवि कुसलं कुसलवाणं ? (ख)

---

(क) प्रियं मे प्रियं मे । सम्प्राप्ता प्रियसखी वेदवती । स्वागतं प्रियसख्याः ।

(ख) अपि कुशलं कुशलवयोः ?

---

सम्प्रति च तपोधनवन्दनोपचारोऽतिथिजनोचितश्च तैः क्रियमाणो वेदवत्याः सत्कार-भारः सङ्गच्छते । वेदवत्याः मुनिकन्यकात्वेऽपि कुशलवजन्मतः प्रागेव सीता सखीत्वं पुनश्च चिराय मिथिलावासानन्तरं पुनरुपागमनमिति गम्यते ।

वन्दनोपचारः वन्दनं नमस्करणं, उपचारः व्यवहारः । अतिथिजनसमुचितः अतिथिजनस्य योग्यः समुदाचारः व्यवहारः । सम्भावयिष्यामि सत्करिष्यामि, कुशलप्रश्नादिनाऽऽमन्त्रयिष्ये इति तात्पर्यम् । निदाघमासलतेव निदाघमासौ ज्येष्ठाषाढौ ग्रीष्ममासौ तयोः लता वल्ली यथा परिम्लाणावयवा शुष्काङ्गी भवति तद्वत् ।

परिक्षामपाण्डुरयावस्थया परिक्षामा कृशा पाण्डुरा । 'पाण्डुस्तु पीतभागार्धः केतकीधूलिसन्निभः'—इति शब्दार्णवः । पाण्डुत्वमस्यास्तीति 'नगपांसुपाण्डुभ्यो रः' । कृशा धूसरवर्णा चेति निष्कर्षः । अवस्था दशा तया हृदयमाक्षिपन्ती यद्यपि धैर्यधना सीता मनोगतं विक्षोभं न वाचावबोधयति परेषां परं तस्याः मनोदशा शरीरावस्थया सम्यगालक्ष्यते इति भावः । 'प्रवासे मालिना कृशे'ति सतीधर्मः । सालमूलमलङ्करोति सालमूले निषण्णेत्यर्थः ।

तदुपसर्पामि सीता समीपे गच्छामि । चिन्तापरवशा चिन्तावशङ्गता । लम्बा-लकाच्छादितनयना लम्बाः सुदीर्घाः ये अलकाः केशाः तैः आच्छादिते नयने चक्षुषी यस्याः सा । शृङ्गारसत्काराभावो विरहावस्थासुलभो दैन्यं सूचयति । दीनप्रेक्षिता दीनं दैन्ययुक्तं प्रेक्षितं दृष्टं यस्याः सा । सौभाग्यमदजनितो गर्वः स्वपदोचितः प्रसस्त्युत्कर्षश्च सर्वथा प्रणष्टः, विरहिणी निर्वासनग्लानिपूरपूर्णा त्विदानीं सीता स्वपदभ्रष्टा दीनदीना लक्ष्यते इत्याशयः । तथा चोक्तम्—

'स्थानहीना न शोभन्ते केशा दन्ता नखा नराः'—इति ! शब्दापयिष्यामि आह्वास्यामि ।

यद्यपि वेदवती नातिदूरस्था सीतानिध्यानपरा च सम्मुखस्था तथापि स्वविचार परम्परासु विषादबहुलासु निमग्ना सीता न तां पश्यन्त्यपि पश्यतीत्यहो नैपुण्यं चारित्र्यालेखनकर्मणि दिङ्नागस्य ।

अपि कुशलं कुशलवयोरिति—सुतयोः कुशलिनोर्जनन्याः कुशलमिति तावु-

सी—जह वणवासिणं । [क]

वे—कीदिसो तुम्हाणं वुत्तंतो ? [ख]

सी—( वेणीं निर्दिश्य ) कीदिसो सो ? [ग]

वे—( आत्मगतम् ) अदिमत्तं संतवइ एसा वराई, रामसदेरस्स संकित्तणेण विणिधारइस्सं ( प्रकाशम् ) अयि अपंडिदे । तह निरपेक्खस्स निरणुक्कोसस्स किदे कीस तुमं असिदपक्खचंदलेहा विअ दिणे दिणे परिहीअसि । [घ]

सी—कहं सो णिरणुक्कोसो ? [ङ]

वे—जेण परिच्चत्तासि । [च]

सी—किमहं परिच्चत्ता ? [छ]

वे—(विहस्य वेणीं परिमार्जयति)एवं लोओ भणादि,सच्चं परिच्चत्ता।[ज]

---

[क] यथा वनवासिनाम् ।

[ख] कीदृशो युष्माकं वृत्तान्तः ?

[ग] कीदृशोऽसौ ।

[घ] अतिमात्रं सन्तपति एषा वराकी । रामसदेरस्स (?)सङ्कीर्तनेन विनिधारयिष्यामि (—) अयि अपण्डिते ! तथा निरपेक्षस्य निरनुक्रोशस्य कृते कीदृक् त्वमसितपक्षचन्द्रलेखेव दिने दिने परिहीयसे ।

[ङ] कथं स निरनुक्रोशः ?

[च] येन परित्यक्तासि ।

[छ] किमहं परित्यक्ता ?

[ज] एवं लोको भणति सत्यं परित्यक्ता ।

---

द्दिश्य वेदवत्याः प्रश्नः । यथा वनवासिनामिति सीताया उत्तरम् । वने वसतोः कुशलवयोः पित्रा राज्ञाऽनिरीक्षितयोः राजपुत्रसुलभसौख्याभावे यादृशं संवर्धनं तयोर्जायते न तत्सन्तोषावहं सीतायाः ।

कीदृशो युष्माकमिति—कुशलवकुशलप्रश्नानन्तरं सीतासम्बन्धे युक्तः प्रश्नः । कुशलवयोरायतिः सौख्यपूर्णेति न सन्देहः । राज्ञः सून्वोः राज्यप्राप्तिः समयेन ध्रुवं सम्पत्स्यते । सीतासुखं पुनरतीतम् । वर्तमानदशायां कथं नाम निर्वहणं जायते इति वेदवत्याः प्रश्नस्य तत्त्वम् ।

वेणी, वेणिरित्यपि, प्रवेणीति पर्यायः, प्रोषितभर्तृकादिधार्यकेशरचनाविशेषः, तां निर्दिश्य ब्रवीति 'कीदृशोऽसाविति' असौ वृत्तान्त इत्यर्थः । अस्या वेण्याः कीदृशोवृत्तान्तः इति प्रश्नद्वारैव सीताया उत्तरम् । यादृशो वृत्तान्तो वेण्यास्तादृशो

सी—अह सरीरेण, ण उण हिअएण । (क)

वे—कहं परकेरअं हिअअं जाणासि ? (ख)

सी—कहं तस्स हिअअं सीदाए परएरअं भविस्सदि ? (ग)

वे—अहो अपरिच्चत्ताणुराअदा । (घ)

सी—कहं सो मम उवरि परिच्चत्ताणुराओ जेण अदिप्पसित्तो एव्व मं अधण्णं उंदिसिअ अंअउत्तेण अणुभूदो सेदुबंधादिपरिस्समो ? (ङ)

---

(क) अथ शरीरेण न पुनर्हृदयेन ।

(ख) कथं परकीयं हृदयं जानासि ?

(ग) कथं तस्य हृदयं सीतायाः परकीयं भविष्यति ?

(घ) अहो अपरित्यक्तानुरागता ।

(ङ) कथं स ममोपरि त्यक्तानुरागः येनातिप्रसिद्धः एव मामधन्यामुद्दिश्यार्यपुत्रेणानुभूतः सेतुवन्धादिपरिश्रमः ।

---

ममेत्यर्थः । येहि कचाः 'शिरसा विधृता नित्यं स्नेहेन परिपालिताः' अभूवन् ते इदानीं स्नेहहीना अपरिपालिताश्च रूक्षतामापन्नाः । सीतापि भर्तृस्नेहं तत्कृतं सम्यग्भरणञ्चाविन्दन्ती यथा कथमपि वनान्तरे निवसन्ती विरसान् दिवसान् यापयतीति सत्यमेव वेणीतः शक्यस्तस्या वृत्तान्तोऽवगन्तुम् ।

अतिमात्रमिति—मात्रा यावती केनापि शक्या सोढुं दुःखस्य तामतिक्रम्य वर्तमानम् । अत्यर्थमित्यर्थः । सन्तपति दुःखमनुभवति । वराकी मन्दभागिनी ।

रामसदेरस्सेति—अस्य संस्कृतपर्यायो निपुणं विचार्यमाणोऽपि नोपलभ्योऽस्माकं नापि प्रथमसम्पादकयुगलस्य । रामकृतं सीतावहेलनं तु स्यादेव तात्पर्यम् ।

विनिधारयिष्यामि सन्तापवेगं परिहरिष्यामीत्यर्थः ।

निरपेक्षस्य अपेक्षारहितस्य यो भवत्याः सायुज्यं न काङ्क्षते तस्येत्यर्थः ।

निरनुक्रोशस्य निर्दयस्य, येन नाम चिरपरिचयः, सहधर्मिणीत्वं गर्भखेदवत्वं किमपि न गणितं स खलु निर्दयानामग्रणीः ।

असितपक्षचन्द्रलेखा, कृष्णपक्षो यत्र चन्द्रमाः क्षीणतां व्रजति, कृष्णोऽर्धमासः तस्य यश्चन्द्रस्तस्य लेखा राजी, रेखेति यावत् । कृष्णपक्षे क्रमशः क्षीयमाणा चन्द्रलेखा सर्वप्रत्यक्षा । 'लेखो लेख्ये दैवते च लेखा राज्यां लिपावपि' । 'राजी रेखायां पङ्क्तौ च'—इति हैमः ।

परकीयं परस्य सम्बन्धि आत्मनो द्वितीयस्येत्यर्थः ।

कथं तस्य हृदयं सीतायाः परकीयमिति —विवाहकाले 'समापो हृदयानि नौ', 'स त्वा मन्मन्मनसां करोतु'इत्यादीन् मन्त्रान् पठित्वा यदा समचित्तताऽऽपादिता,

वे—अत्तसिलाहिणि, खत्तिआणं समुइदो एसो रावणस्स उवरि रोसो, ण सीदाए उवरि अणुराओ। (क)

सी—एदं अवरं ण पेक्खासि। (ख)

वे—किं एदं अवरं? (ग)

सी—एदं। (घ)

वे—किं एदं? (ङ)

सी—(सलज्जम्) जं सवत्तीजणणीसासाणुपविद्धे रामवच्छत्थले अदिचिरं संभाविदम्हि। (च)

---

(क) आत्मश्लाघिनि! क्षत्रियाणां समुचित एष रावणस्योपरि रोषो न सीताया उपर्यनुरागः।

(ख) एतदपरं न प्रेक्षसे?

(ग) किमेतदपरम्?

(घ) एतत्।

(ङ) किमेतत्?

(च) यत् सपत्नीजननिःश्वासानुपविद्धे रामवक्षःस्थले अतिचिरं सम्भावितास्मि।

---

तदा जायापत्योभिन्नहृदयता परास्तैवेति भावः।

अपरित्यक्तानुरागता—अपरित्यक्तो न परिहाणो योऽनुरागः प्रेमा तस्य भावस्तत्ता। अयं भावः—शरीरेणाहं दूरेस्थिता रामस्य, तस्य मनसि पुनर्मम वास एव, स मयि साकल्येन पूर्ववदेवानुरक्तः इति सीतावचनम्। पूर्ववदेवानुरक्तत्वे नैतन्निर्वासनं भवेदिति वेदवत्या आशयः। निर्वासयन्नपि भवतीं रामोऽनुरक्तस्त्वयीति व्याहतम्। अस्मिन् पक्षे रामस्य अपरित्यक्तानुरागतेति सोल्लुंठनवचनम्। रामो न त्वय्यनुरागवानित्येव प्रतिपादनं भङ्ग्यन्तरेण वेदवत्या अभीष्टम्।

सेतुबन्धो नलनीलकृतो वाराशेरुद्बन्धोरामायणे प्रसिद्धः, येन क्रममाणा हरिवाहिनी लङ्कां प्रपेदे।

आत्मश्लाघिनीति—आत्मानं श्लाघते तच्छीला, या स्वयमेव आत्मानं स्तौति। रामो मयि परमानुरागी मदर्थमेव च सेतुबन्धादिपरिक्लेशमङ्गीचकारेति सीतावचः आत्मश्लाघापरम्।

क्षत्रियाणां–रोष इति—एष सेतुबन्धादिपरिक्लेशानुभवहेतुः दाराणां हर्तू रावण-

वे—सहि मा उत्तम्म समासण्णो रामस्स जण्णदिक्खासमओ। (क)

सी—तदो किं ? ( ख )

वे—णं तहिं अस्सस्स सहधंमआरिणीए पाणिग्गहो णिव्वत्ति दव्वो। ( ग )

सी—अअउत्तस्स हिअए पहवामि, ण उण हत्ते। ( घ )

वे—( आत्मगतम् ) अहो से दिढाणुराअदा। [ प्रकाशम् ] सहि पुत्तमुहदंसणेण वि दे पवाससोओ णावणीदो ? ( ङ )

सी—सोअपडिआरेण वि सोओ वड्ढिअदि। ( च )

वे—कहं विअ। ( छ )

---

(क) सखि ! मा उत्ताम्य ! समासन्नो रामस्य यज्ञदीक्षासमयः।

(ख) ततः किम् ?

(ग) ननु तत्राश्वस्य सहधर्मचारिण्या पाणिग्रहो निर्वर्त्तयितव्यः।

(घ) आर्यपुत्रस्य हृदये प्रभवामि न पुनर्हस्ते।

(ङ) ( — ) अहो अस्या दृढानुरागता। ( — ) सखि ! पुत्रमुखदर्शनेनापि ते प्रवासशोको नापनीतः ?

(च) शोकपरिहारेणापि शोको वर्धते।

[छ] कथमिव।

---

स्योपरि रोषः क्रोधः, यः क्षत्रियाणां समुचितः योग्यः। प्रसह्य दाराहरणं परस्य को नाम क्षत्रियो मर्षयेत्। यथाह भारविः—

"कुलानुरूपामनुरूपशासनः कुलाभिमानी कुलजां नराधिपः।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम्॥

इति। अनुरागः प्रेम आसक्तिरिति यावत्। प्रेक्षसे पश्यसि।

सपत्नी.........अनुपविद्धे—समानः पतिर्यासां ययोर्वा तास्ते वा सपत्न्यः सपत्न्यौ वा। सपत्नी एव जनः सपत्नीजनः, तस्य यो निःश्वासः संतोषभरितः सौभाग्यहेतुको नितरां प्रवर्त्तमानः श्वासः। तेनानुपविद्धे अकलुषिते रामवक्षःस्थले अतिचिरं विवाहादारभ्य रावणकृताहरणं यावद् दीर्घः समय आस्तां तावत्, लङ्काविजयानन्तरमप्येतावतोमासान् यावत् न कापि दृष्टा सपत्नी लब्धप्रसरत्वाद् यथेष्टमुपसेवितश्च रमणः। रामानुरक्तत्वे सर्वमेतत्सम्पद्यते नान्यथेति बलवती वाचोयुक्तिः। सपत्न्यन्तराण्यतिरिच्य प्रकामं रमणमुपभुञ्जानायाः स्त्रियाः संतोषभरिता निश्वासाः सुलभाः। यथाच सन्तोषपूर्वका अपि निश्वासास्तथा दर्शिता मुरारिणा तथाहि—

सी—जह जहा दे दारआ ईससमुंभिरणदसणंकुरकोमलेण वदणेण ममसुहं आलोअंता पहसंति, अच्चंतकोमलेण आलावेण तादिसं सद्दावेअंति, तह जाणामि तस्स मुंदे णिमज्जामित्ति। संपदं उण कालवसेण परिणदा परिच्चत्तवालभावा अवाला संवुत्तेति मं अहिअतरं वाधेयदि। (क)

[क] यथा यथा द्वौ दारकावीषत्समुद्भिन्नदशनाङ्कुरकोमलेन वदनेन मम मुखमालोकयन्तौ प्रहसतः, अत्यन्तकोमलेनालापेन तादृशं शब्दापयतः, तथा जानामि तस्य मौग्ध्ये निमज्जामीति, साम्प्रतं पुनः कालवशेन परिणतौ परित्यक्तबालभावावबालौ संवृत्ता-विति मामधिकतरं बाधते[1]।

'दत्तेन्द्राभयविभ्रमाद्भुतभुजासम्भारगम्भीरया
त्वद्वृत्त्या शिथिलीकृतस्त्रिभुवनत्राणाय नारायणः।
अन्तस्तोषतुषारसौरभमयश्वासानिलापूरण-
प्राणोत्तुङ्गभुजङ्गतल्पमधुना भद्रेण निद्रायते'॥ इति।

'प्रियेषु सौभाग्यफला हि चारुता'—इति च सौभाग्यहेतुकत्वम्। सम्भाविता‍स्मि उपलालितास्मि रमणेनेति भावः। मा उत्ताम्य, एतावन्महत्त्वाकाङ्क्षिणी माभूरित्यर्थः। स समयोऽतीतो यस्मिन् दारान्तराहरणनिस्पृहमानसेन रमणेन भवती सादरमुपलालिता, सम्प्रति तु तद्विपरीत्यं पश्यसि द्रक्ष्यसि चेति भावः।

समासन्नः समीपवर्ती। यज्ञदीक्षासमयः—यज्ञार्थं अश्वमेधयागाय या दीक्षा तस्याः समयः कालः। दीक्षा दीक्षणं यागनिमित्तं व्रतनियमविशेषपरिपालनं पवित्रीभावार्थम्।

ततः किमिति—यज्ञदीक्षासमयोपस्थानात्का मम क्षतिरित्यर्थः। 'दारान्तराहरणनिस्पृहमानसस्य यागे तव प्रतिकृतिर्मम धर्मपत्नी'ति रामसन्दिष्टं मनसि कृत्वा सीतावचनम्।

तत्राश्वस्य सहधर्मचारिण्या पाणिग्रहो निर्वर्त्तयितव्य इति तत्र यागे आशु शीघ्रमचिरादेव अस्य रामस्य सहधर्मचारिण्या सहधर्मिण्या जायया सहेत्यर्थः पाणिग्रहः पाणिग्रहणं विवाहो निर्वर्त्तयितव्यः सम्पादयितव्यो भविष्यति। नहि जायां विना यजमानो यष्टुमीष्टे। आज्यादीनां जाययाऽवेक्षणप्रवचनात्। 'वीक्षितानि यजमानजायये'तिच यौधिष्ठिरयागवर्णनावसरे माघः। ततश्च यागात्पूर्वं यज्ञियोपकरणसंभरणावसरे रामस्य दारान्तराहरणमावश्यकं भविष्यतीति।

यद्वा अश्वस्य सहधर्मचारिण्येति व्याख्येयम्, यागावसरे यजमानजायाया अश्वसम्भोगं मध्यमकाले प्रवृत्तमुपाक्षपति। तद्वर्णनं च महीधरकृते यजुर्वेदभाष्ये

१ 'वाधेते'—इति तु वयम्।

वे—अहो किंति तस्स महग्घं णिसंसत्तणं जं सीदा णाम वालतणआ ईरिसं अवत्थं अणुभवदित्ति । [क]
सी—सँहि वेदवदि ! अवि णाम— [ख]
वे—कीस लज्जिदेण ? भणाहि अंअउत्तं पेक्खामित्ति । [ग]
सी—किं लज्जावेसेण, एव्वं भणामि । [ प्रकाशम् ] अवि कुसलवाणं तादस्स दंसणेण जम्मं अमोहं भवेदित्ति । [घ]

---

[क] अहो किमिति तस्य महार्घं नृशंसत्वं यत्सीता नाम वाल-तनयेदृशीमवस्थामनुभवतीति ।
[ख] सखि वेदवति ! अपि नाम—
[ग] किं लज्जितेन, भण आर्यपुत्रं प्रेक्ष इति ।
[घ] किं लज्जावेशेन, एवं भणामि (—) अपि कुशलवयोस्तातस्य दर्शनेन जन्मामोघं भवेदिति ।

---

द्रष्टव्यम् । आर्यपुत्रस्य······हस्ते—इति पाणिना भर्तुः पाणिर्भार्याया गृह्यते सा च परिणीता पाणिगृहीतीत्युच्यते । पाणिः परस्याः स्त्रियाः पाणिं स्पृशतु नाम, रामहृदयं तु सीतायत्तमित्यर्थः । यागकाले आवश्यकत्वेन प्रतिपाद्यमानो विवाहो न भावनिवन्धनो भविष्यतीति भावः ।

शोकपरिहारेणापीति—परिहारः परिहरणं निवारणं यथा यथा शोकपरिहाराय प्रयत्यतेऽनुस्मरणवशात् तथा तथा शोकोवर्धते । यद्वा शोकस्य परिहारः येनासौ शोकनिवारकः सुतादिः । यथाच सुतौ शोकपरिहर्तारावपि शोकं वर्धितवन्तौ तथोपरिष्टाद् दर्शयिष्यति ।

दारकौ बालकौ कुशलवौ ।

ईषत्समुद्भिन्नदशनाङ्कुरकोमलेन ईषत् स्वल्पं समुद्भिन्ना समुत्पन्ना दशनानां दन्तानां ये अङ्कुराः प्ररोहाः तैः कोमलेन मसृणेन प्रवृद्धश्रीकेणेत्यर्थः । वदनेन मुखेन । आलापो माधुर्योपेतो वाग्व्यापारः । तादृशं रामसदृशम् । आत्मा वै जायते पुत्रः । पुत्राणां पितरमनुहरणं स्वाभाविकम् । दारकयोः स्वरे रामस्वरसादृश्यमुपलभ्यते इति भावः । तस्य रामस्य । मौग्ध्ये माधुर्ये सौन्दर्ये । कालवशेन समयप्रभावेण । परिणतौ प्रवृद्धौ । परित्यक्तबालभावौ अतीतबाल्यौ । अबालौ कुमारौ संवृत्तौ जातौ ।

तस्य रामस्य । महार्घं महामूल्यं महदित्यर्थः । नृशंसत्वं निष्ठुरत्वम् ।

सीता नामेति—न काचिदितरा स्त्री अपि तु सा प्रथिता राज्ञी राजदुहिता च सीतेति 'नाम' पदेन सूच्यते ।

वे—णं समासएणं एव्व तुम्हाणं राअदंसणं। [क]

सी—कहं विअ ? [ख]

( नेपथ्ये ऋषिः )

भो भो आश्रमवासिनो जनाः ! शृण्वन्तु भवन्तः—

इतो नातिदूरे महाक्रतुरश्वमेधः प्रवर्तते, सम्भृतानि यज्ञोपकरणानि, सन्निपतिताश्च नानादेशाश्रमवासिनो वसिष्ठात्रेयप्रभृतयो महामुनयः। केवलं भगवतो वाल्मीकेरागमनमुदीक्षमाणो नाद्यापि यज्ञदीक्षां प्रविशति महाराजः। आगतश्च वाल्मीकितपोवनवासिनामुपनिमन्त्रणार्थं रामदूतः। तस्मान्नैव परिलम्बितव्यम्।

---

[क] ननु समासन्नमेव युष्माकं राजदर्शनम्।
[ख] कथमिव ?

---

बालतनया बालौ तनयौ यस्याः सा। ईदृशीमवस्थां परमशोचनीयामिति भावः। प्रेक्षे प्रेक्षिष्ये इत्यर्थः। 'आशंसायां भूतवच्च' (३। ३। १३२) इति भविष्यति काले वर्त्तमानवत्प्रत्यय आशंसायाम्।

किं लज्जावेशेनेति—कृतमलीकलज्जया, नहि परमसखीसम्मुखं लज्जावेशः शोभते इत्यर्थः। आवेशः आवेशनम् प्रवेश इति यावत्। 'आवेशनं शिल्पिशाले भूतावेश प्रवेशयोः'—इति विश्वमेदिन्यौ।

कुशलवयोस्तातस्य तातो जनकः, राम इत्यर्थः। 'आर्यपुत्र' इति पदं स्नेहसम्बन्धसूचकं मिति नादृतम्।

कुशलवयोस्तातस्येति भङ्ग्यन्तरेण वचनं भावशैथिल्यं वर्तमानदशोचितं सूचयति। यथा—

दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥

इत्यत्र 'अस्य शिशोः पिता' (न मम प्राणनाथः) इत्युक्त्या भावशैथिल्यमवगम्यते स्वैरिण्याः कस्याश्चित्। सीता तु तापसीति नयुक्ताः प्रेमोद्गारास्तस्या इति विवेकः।

अमोघं सफलं चरितार्थमिति यावत्।

समासन्नं समीपवर्ति, सद्योभावीत्यर्थः। राजदर्शनं राज्ञो रामस्य दर्शनम्।

महाक्रतुः महान् यागः। 'यज्ञः सवोऽध्वरो यागः सप्ततन्तुर्मखः क्रतुः'—इत्यमरः। यद्यपि ब्रह्मयज्ञादयः पञ्च नैत्यिका महायज्ञा अपरे तु यज्ञा इति मानवीयं दर्शनम्। 'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः' इत्युक्तेः। तथा—

तीर्थोदकानि समिधः (परिपूर्णरूपा)
दर्भाङ्कुरानविहतान् परिगृह्य सद्यः ।
अग्रे भवन्तु मुनयो मुनिकन्यकाश्च
कुर्वन्तु मङ्गलवलीनुटजाङ्गणेषु ॥ २ ॥

---

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्' ॥

एते पञ्च महायज्ञत्वेन तत्रोक्ता स्तथापि महता धनेन जनेन कालेन च साध्यत्वावदश्वमेधस्यापि महाक्रतुत्वं विज्ञेयम् । यद्वा क्रतुयज्ञयोः पर्याययोरपि केचिन्महायज्ञा एव स्युरपरे महाक्रतवः स्युः ।

अश्वमेधः, यज्ञियोऽश्वः सैन्येन साकं विजिगीषुणा प्रेषितः सर्वत्राव्याहतरूपेण विचरन् परान् भूपान् वश्यान् ज्ञापयति । येन पुनरसावश्वो निगृहीतः स भूपो न करदत्वमङ्गीकरोतीति तेन सह युद्धं जायते । यदि सर्वेऽपि राजानो जितास्तर्हि प्रवर्तते अश्वमेधो यागः, नातोऽन्यथा । एकवर्षानन्तरं पुनः प्रतिनिवर्ततेऽश्वः स्वकं स्थानं वश्याश्च भूपास्तमनुगच्छन्ति । इत्थं महता सम्भारेण क्रतुः प्रवर्तते । तादृशानां क्रतूनां शतस्याहर्त्ता शतक्रतुरिति व्यपदिश्यते । स यज्ञियोऽश्वः खण्डशः कृतस्तत्र हूयते इति मध्यमकालिका याज्ञिकाः । नव्यास्तु 'राष्ट्रं वै अश्वमेधः' इति प्रवचनात् राष्ट्रस्य सम्यक्परिपालनमेवाश्वमेधः, अश्वस्तु यज्ञियो बलसंकेतमात्रम्, नचासौ निहन्यते इत्याहुः । प्रवर्त्तते जायते प्रवृत्तोऽस्तीत्यर्थः । सन्निपतिताः समागताः । उदीक्षमाणः प्रतीक्षमाणः । परिलम्बितव्यं विलम्बो न कार्यो भवद्भिः ।

तीर्थोदकानीति--

तीर्थोदकानि परिपूर्णरूपाः समिधः अविहतान् दर्भाङ्कुरान् परिगृह्य मुनयः सद्यः अग्रे भवन्तु, मुनिकन्यकाश्च उटजाङ्गणेषु मङ्गलवलीन् कुर्वन्तु इत्यन्वयः ।

तीर्थोदकानि तीर्थेभ्यः पवित्रस्थानेभ्यः समाहृतानि उदकानि जलानि, परिपूर्णरूपाः परिपूर्णं रूपं यासां ताः, नतु खण्डिताः, यावद्दैर्घ्यं तासामपेक्ष्यते तावद्दैर्घ्यवत्यः इत्यर्थः । समिधः काष्ठानि अविहतान् अमृदितान् अखण्डितांश्च दर्भाङ्कुरान् दर्भस्य प्ररोहान् परिगृह्य गृहीत्वा मुनयस्तपोधना वैखानसाः सद्यः सपदि अग्रे भवन्तु प्रयाणोन्मुखाः भवन्तु इत्यर्थः । मुनिकन्यकाश्च प्रस्थानवेलोचितान् मङ्गलवलीन् माङ्गलिकान् वलीन् पूजोपहारान् । 'बलिर्दैत्यप्रभेदे च करचामरदण्डयोः । उपहारे पुमान् स्त्री तु जरया श्लथचर्मणि । गृहदारुप्रभेदे च जठरावयवेऽपि च'--इति मेदिनी । उटजाङ्गणेषु उटजानां पर्णशालानामङ्गणेषु चत्वरेषु । 'मुनीनां तु पर्णशालोटजोऽस्त्रियाम्, अङ्गनं चत्वराजिरे'--इति चामरः । कुर्वन्तु विदधतु । 'अङ्गणं'-इति पृषोदरादित्वात् साधुः ।

सी—तुवरेमि, तुवरेमि, एस अज्ज कस्सवो पत्थाणघोसणासमणन्तरं गहिदजण्णोवकरणो अग्गदो पत्थिदो। अहं वि कुसलवाणं पत्थाणमंगलं अणुचिट्ठिस्सं। (क)

( इति निष्क्रान्ताः सर्वे )

द्वितीयोऽङ्कः

(क) त्वरामि त्वरामि, एष आर्यकाश्यपः प्रस्थानघोषणासमनन्तरं गृहीतयज्ञोपकरणोऽग्रतः प्रस्थितः। अहमपि कुशलवयोः प्रस्थानमङ्गलमनुष्ठास्यामि।

समनन्तरं समकालम्। अनुष्ठास्यामि करिष्यामि। स्वयं तत्र यज्ञे गन्तुं शक्यते नवेति वराकी न जानाति सीता। हृदयवर्तिनं महान्तं विक्षोभं सर्वथा वशीकृत्य कुशलवयोः प्रस्थानवेलोचिते मङ्गलकृत्ये प्रवर्तमाना जानकी सर्वथा धीराणां मूर्धन्यत्वेनालिखिता कविपुङ्गवेन।

इति श्रीपण्डित-काशीरामतनूजस्य वज़ीराबादपत्तनवास्तव्यस्य जयचन्द्रस्य कृतौ सन्ध्याविवरणभगिन्यां सञ्जीवन्यां कुन्दमालाटीकायां द्वितीयोऽङ्कः पर्यवसितः। शुभं भवतु।

# अथ तृतीयोऽङ्कः ।

( ततः प्रविशति मार्गपरिश्रान्तो गृहीतभारस्तापसः )

तापसः—( श्रममभिनीय ) भो सुट्ठु परिस्संतोम्हि एदिणा संदापदीहेण गिम्मसमएण । ण प्पहवामि परिस्समगआणं जंघाणं विक्खेवणिक्खेवं कादुं । पाददलं अ मे संपक्कं पिअअसंपोडएहिं संवुत्तं । अण्णच्च, तह सुउमाला देवी सीदा तह कोमला अ कुसलवा तापससद्धेण सह अणत्थमिदे सूरे णेमिशं पत्ता । अहं अज्ज वि णासादेमि अडविदिसासुहे [ विचिन्त्य ] को दाणिं मे णेमिसमग्गं आचक्खिस्सदि [ विलोक्य ] णूणं एसो लक्खणसहाओ रामो णेमिसं संपत्तो । ता अहं वि दाणं गइं अणुसरेमि । (क)

( निष्क्रान्तः )

प्रवेशकः

---

(क) भोः सुष्ठु परिश्रान्तोऽस्मि एतेन सन्तापदीर्घेण ग्रीष्मसमयेन । न प्रभवामि परिश्रमगतयोर्जङ्घयोर्विक्षेपनिक्षेपौ कर्तुम् । पादतलञ्च मे सम्पक्कं पिटकसंस्फोटकैः संवृत्तम् । अन्यच्च, तथा सुकुमारा देवी सीता तथा कोमलौ च कुशलवौ तापससार्द्धेन सहानस्तमिते सूर्ये नैमिशं प्राप्ताः । अहमद्यापि नासादयामि अटवीदिशामुखे (—) क इदानीं मे नैमिशमार्गमाचक्षीत (—) नूनमेष लक्ष्मणसहायो रामो नैमिशं सम्प्राप्तः । तदहमपि तयोर्गतिमनुसरामि ।

---

मार्गपरिश्रान्तः मार्गेण परिश्रान्तः, दीर्घेण पथा क्लान्तः । तापसः तपोधनः । गृहीतभारोऽयं तपस्वी कश्चिदन्यतपात्रम् , नायमार्यकाश्यपः । अपि तु प्राकृतभाषित्वाद् गृहीतभारत्वाच्च निरक्षरभट्टाचार्यः सेवकत्वोचितः कश्चन छात्रम्मन्यः स्यात् । तपोधनानां मुनीनां किंकरास्तदीयाश्छात्रा एव भवन्ति विशेषेण सरस्वतीमन्दिरप्रवेशानर्हास्तथापि तदर्थं प्रयतमानाः गुरुमस्तिष्कभुजोऽपि तत्कृपादृष्टिभाजः । तेषामेवान्यतमो वटुः स्थाणुरयं भारहारो वेदितव्यः । श्रममभिनीयेति–श्रमस्याभिनयं कृत्वा, आत्मानं श्रान्तं दर्शयित्वेत्यर्थः ।

---

१ 'तापससार्थेन' इति पठनीयम् । तथैव व्याख्यातम् ।

( ततः प्रविशति शोकसन्तप्तो रामो लक्ष्मणश्चाग्रतः )

ल—आर्य इत इतः। ( परिक्रम्य )

प्रथममनपराधां तां समुत्कृष्य देवी—
मगममहमगाधे कानने त्यक्तुकामः।
पुनरपि कुलशेषं राममादाय देवं
स्वजनविपदि दक्षः क्वाप्यधन्यः प्रयामि ॥ १ ॥

---

सन्तापदीर्घेणेति—घर्मेण हेतुना शरीरक्लेशः सन्तापः तेन दीर्घः दैर्घ्यं प्राप्तः, लम्बायमान इत्यर्थः।

प्रभवामीति—प्रभुः समर्थो भवामि, पारयामीत्यर्थः।

परिश्रमगतयोरिति—परिश्रमं गतयोः प्राप्तयोः, श्रान्तयोः।

विक्षेपनिक्षेपाविति—उत्थापनसंस्थापने। चरणौ क्रमेण उत्थाप्य निधीयेते भूतले गच्छता जनेन। संपक्कं व्रणायमानम्। पिटकसंस्फोटकैरिति-भीमभानौ निदाघे प्रतप्तभूतले नग्नपादयोर्जायमानाः विस्फोटाः पिटकास्तएव संस्फुटिताः विकृतरक्तवहाः संस्फोटाः इति विवेकः। 'पिटकस्त्रिषु विस्फोटे मञ्जूषायां पुनः पुमान्'—इति मेदिनी। तैर्हेतुभिः संपक्कं पादतलं, पादयोस्तलमधःप्रदेशः। संवृत्तं जातम्।

सुकुमारा मृदुला। 'सुकुमारं तु कोमलं मृदुलं मृदु'—इत्यमरः। तापससार्थेनेति—सार्थः समूहः। 'सार्थो वणिक्समूहे स्यादपि सङ्घातमात्रके'—इति मेदिनी। तपोधनवृन्देन सह। 'साकं सत्रा समं सह। सार्धम्' इत्यमरः। अनस्तमिते सूर्ये 'लम्बमाने दिवाकरे' नतु 'चरमाचलचूडचुम्बि'नि जाते।

नासादयामि नाप्नोमि अटवीदिशामुखे इति—अटव्याः दिशा अटवीदिशा यस्यां दिशायां वनमास्ते साटवीदिशोच्यते, तस्याः मुखं प्रवेशस्थलं तत्र आचक्षीत प्रकथयेद् दर्शयेदिति यावत्। लक्ष्मणसहायः लक्ष्मणः सहायो यस्य, लक्ष्मणद्वितीय इत्यर्थः।

नैमिशं सम्प्राप्तः—इति, कथं पुनस्तापसोऽटवीदिशामुखे स्थितोऽप्यपि नैमिशं नासादयति तत्रैव च दृष्टो लक्ष्मणसहायो रामो नैमिशं सम्प्राप्तः स्यात्? तापसो वराको भाराक्रान्तः पिटकसंस्फोटकैः पीड्यमानः शोभने पथि गच्छन्नपि आत्मानमुत्पथगामिनं मन्यते, समीपवर्तिं च नैमिशं विप्रकृष्टमाकलयति स तु पूर्वत एव मन्दबुद्धिः भारवहने नियुक्तः, विशेषतः सार्थभ्रष्टो दिग्व्यामोहमापन्नः किङ्कर्तव्यताविमूढः सन् तत्रैव सीदन्नास्ते। समानदिशातः समायान्तं स्वकीयामेव दिशमुद्दिश्य गच्छन्तं सलक्ष्मणं रामं दृष्ट्वा तु समुच्छ्वसितजीवितः सन् न केवलं तमेवात्मानमपि नैमिशं प्राप्तं मन्यते। नैमिशमुद्दिश्य चिराय चलता तपस्विनापि नैमिशाभ्यर्णप्रदेशः सम्प्राप्त एवेति तु निश्चितमेवेति।

हा ! सुष्ठु खल्विदमुच्यते—

प्रमादः सम्पदं हन्ति प्रश्रयं हन्ति विस्मयः ।
व्यसनं हन्ति विनयं हन्ति शोकश्च धीरताम् ॥ २ ॥ इति ।

---

गतिं गतं गमनमिति यावत् । प्रवेशकलक्षणं तु दर्शितमधस्तात् ।

तां अनपराधां देवीं समुत्क्षिप्य अगाधे कानने त्यक्तुकामः अहं प्रथमं अगमम्, स्वजनविपदि दक्षः अधन्यः कुलशेषं देवं रामं आदाय पुनरपि क्वापि प्रयामि इति योजना ।

तां सीतां अनपराधां निरागसं देवीं समुत्क्षिप्य ( छलेन ) नीत्वा अगाधे गंभीरे कानने वने त्यक्तुकामः त्यक्तुं कामोऽभिलाषो यस्य स । 'तुं काममनसोरपि'— इति तुमुनोमकारस्य लोपः । त्यक्तुमनाः इत्यर्थः । अहं लक्ष्मणः प्रथमं पूर्वं प्रथम-यात्रावसरे इति भावः, अगमम् अगच्छम् । राजधानीतो बहिरगच्छमिति तात्पर्यम् । स्वजनविपदि स्वस्य जनस्य विपदि स्वीयानां बान्धवानां विपत्तौ दक्षः चतुरः सौक-र्येण स्वबन्धूनां विपदापादकः अधन्यः हतभाग्यः, कुलशेषं कुलस्य शेषं रामसम्ब-न्धिनः कुलस्य वंशस्य अवशिष्टः पुरुषो राम एव, सीतायाः सीतारामयोः संततेश्चा भावात् रामवंशे केवलं रामएवावशिष्टः । वने परित्यक्ता सीता वन्यैः सत्त्वैर्व्यापा-दिता, तेन च गर्भगतवंशकरीरस्यापि सुतरां विनाशः इति भावना लक्ष्मणस्य । रामे दारान्तराहरणपराङ्मुखे तस्य वंशे स एवैकलः पुरुषः इति तात्पर्यम् । तं देवं राजानं राममपि आदाय आनीय पुनरपि क्वापि कुत्रापि अनालक्षितस्थले, अत एवानालक्षितविपत्सुलभे इति रहस्यम्, प्रयामि गच्छामि । मम प्रथमयात्रायां रामवंशस्य प्रचुरभागस्य विपदुपस्थिता, अवशिष्टांशं रामं नयन्नतीतदुर्घटनास्मृति-बलात् विपन्मुखे पातयन्तमात्मानं मन्यते लक्ष्मणः ॥ १ ॥

प्रमादः सम्पदं हन्ति, विस्मयः प्रश्रयं हन्ति । व्यसनं विनयं हन्ति, शोकश्च धीरतां हन्ति ॥ इत्यन्वयः ।

प्रमादोऽनवधानताऽऽलस्यञ्च सम्पदं सम्पदां अर्थागमं सञ्चितञ्च धनराशि-मित्यर्थः, हन्ति नाशयति । तथा चोक्तम्—

अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम् ।
प्रमदा पतिमिव वृद्धं नेच्छति लक्ष्मीरुपस्थातुम् ॥
अनागतविधातारमप्रमत्तमकोपनम् ।
स्थिरारम्भमदीनञ्च नरं श्रीरुपतिष्ठते ॥
सुव्यवसायिनि शूरे क्लेशसहिष्णावनाकुलारम्भे ।
मयि पृष्ठतो विलग्ने यास्यसि कमले कियद्दूरम् ॥ इति ।

विस्मयो विशिष्टः स्मयः, दर्पातिशयः इत्यर्थः । 'विस्मयोऽद्भुतदर्पयोः'— इति हैमः । प्रश्रयं प्रणयं प्रीतिमिति यावत् । 'प्रश्रयप्रणयौ समौ'—इत्यमरः ।

तथाहि—एष मन्दरमहीधरसमानधैर्यो भगवतो वाल्मीकेरागमन-मुपलभ्य तद्दर्शनार्थं गोमतीतीराश्रमपदमुच्चलितः। सम्प्रति तामेव दिशं परित्यज्य शोकावेगसमाक्षिप्तहृदयो महावनाभि-मुखं प्रस्थितः। ततः किमेनं सम्यग्[1] ज्ञापयामि? अथवा तत् किमनेन प्रतिहारेण धावितं मार्गमादेशयामि, यथायमचेत-यन्नेव वाल्मीकेराश्रममनुप्राप्नोति। इत इत आर्यः।

---

हन्ति। व्यसनं पानस्त्रीमृगयादिषु सक्तिः। 'व्यसनं त्वशुभे सक्तौ पानस्त्रीमृगया-दिषु'—इति विश्वः। विनयं शीलं हन्ति। शोकश्च धीरतां धैर्यं मानसीं धृति-मित्यर्थः। हन्ति नाशयति॥ २॥

मन्दरमहीधरसमानधैर्यः—इति, मन्दरश्चासौ महीधरश्चेति कर्मधारयः, तेन समानं धैर्यं यस्य सः। समुद्रमन्थनावसरे मथितां प्रपन्नो मन्दराचलः, अतएव मथनपर्वतो मथनाचलश्च गीयते। वासुकि-रशनया भृशमाहन्यमानो मन्दरो धैर्यं न जहौ, तेनासौ धैर्यवतां धौरेयत्वेन कीर्तित इह। मन्दराचल इवाचलधैर्यो राम इत्यर्थः। गोमतीतीराश्रमपदमिति—गोमत्यास्तीरे यः आश्रमः तस्य पदं स्थानम्। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु'—इत्यमरः।

गङ्गातीरे भगवतो वाल्मीकेराश्रम इति प्रथमाङ्कतो ज्ञातम्, गङ्गासमीपे गोमती प्रवहति, वाल्मीकेरपरमाश्रमस्थानं गोमत्या उत्तरस्मिन् तीरे स्यात्। अत्र सेतुना भाव्यम्। वाल्मीकेराश्रमादयोध्यां प्रति गमनार्थं निर्मितसेतोः समीपे क्वचिदव-स्थितिः सम्प्रति भगवतआदिकवेः। तस्य दर्शनार्थमेवायोध्यातो राम उच्चलितः। नैमिशारण्यमपि गोमत्या उत्तरतीरवर्ति सेतुद्वारैव वाल्मीकिना प्राप्यम्। रामेण तु अयोध्यातो नैमिशे गन्तव्यम्, उभयमपि गोमत्या उत्तरतीरवर्ति, नातस्तेनायं सेतुरुपाश्रयणीयः। अयं वाल्मीकेराश्रमो गोमत्या उत्तरस्मिन् तीरेऽवस्थितः, नैमिशारण्यं पश्चिमोत्तरायां दिशि अयोध्या च प्राच्यां गोमत्या उत्तरे तीरेऽवस्थिते विवेकः। सर्वमेतन्मानचित्रादवगन्तव्यम्। शोकावेगसमाक्षिप्तहृदयः—इति, शोकस्यति सीताविषयिण्याः शुचायाः यः आवेगस्तीव्रता तेन समाक्षिप्तं पराभूतं हृदयं यस्य सः शोकभराक्रान्तः इत्यर्थः। महावनाभिमुखं प्रस्थितः—इति, महावनं यद्यपि गोकुलं वृन्दावनसमीपवर्ति व्रजभूमौ प्रसिद्धम्, तथापि तदुपादानमत्रासम्भवि, तस्मान्नैमिशारण्यमेवेह महावनत्वेन स्वीकार्यम्। अयोध्यातः प्रस्थानकाले गोमत्या उत्तरतीरवर्तिनि वाल्मीक्याश्रमे गन्तव्यमिति निर्धारितं रामेण। शोकावेगेन प्रणष्टविवेको रामः सम्प्रति दक्षिणदिशं विहाय उत्तरस्यां दिशि नैमिशारण्याभि-मुखः प्रचलित इति तत्त्वम्।

---

१ 'सम्यक्' इति पाठो मूलपुस्तकस्थः सन्धिमनादृत्य।

रा—(निश्वस्य)

नीतस्तावन्मकरवसतौ वन्ध्यतां शैलसेतुः
देवो वह्निर्नच विगणितः शुद्धिसाक्ष्ये नियुक्तः ।
इक्ष्वाकूणां भुवनमहिता सन्ततिर्नेक्षिता मे
किं किं मोहादहमकरवं मैथिलीं तां निरस्य ॥ ३ ॥

---

ज्ञापयामि प्रबोधयामि । नायं पन्था वाल्मीक्याश्रमगामीति निवेदयामि किम् ?

अथवा तत् किम्[1] ? न किमपीत्यर्थः । नैव प्रबोधयामि दिगन्तरं प्रति प्रस्थितोऽसि दिग्व्यामूढः इति । अप्रबोधनञ्च सम्मानमूलकं विज्ञेयम् । लक्ष्मणस्य भ्रातृवात्सल्यमग्रजस्य च गौरवं प्रतिपदमालिखितं कविना ।

प्रतिहारेण धावितमिति—अमरकोषादिषु 'प्रतीहार' इति रूपमादृतम्। प्रतीहारो द्वारपालः । 'प्रतीहारो द्वारपाल–द्वाःस्थ–द्वाःस्थित–दर्शकाः'—इत्यमरः । तेन धावितं शीघ्रतयागतं, धावनपुरस्सरमङ्गीकृतमित्यर्थः । अचेतयन् अजानन् स्वकीयं भ्रममविदन्नेवेत्यर्थः ।

मकरवसतौ शैलसेतुः तावत् वन्ध्यतां नीतः, शुद्धिसाक्ष्ये नियुक्तः देवः वन्हिः न च विगणितः । भुवनमहिता इक्ष्वाकूणां सन्ततिः मे न ईक्षिता तां मैथिलीं मोहात् निरस्य किं किं अहं अकरवम् ॥

मकरवसतौ मकराणामावासे समुद्रे शैलसेतु शैलैः शिलोच्चयै र्निर्मितः सेतुः । प्रचुराः शिलाः सन्त्यत्रेति शैलः । ज्योत्स्नादित्वादण् ( वा० ५।२।१०३ )। 'अद्रि-गोत्र-गिरि-ग्रावा चल-शैल-शिलोच्चयाः—इत्यमरः । अस्माभिस्तु शिलोच्चय-पदं—

शिलोच्चयं चारुशिलोच्चयं त—
मेष क्षणान्नेष्यति गुह्यकस्त्वाम्'—इति भारविप्रयोगानुसारेण प्रयुक्तम् ।

सेतुः आलिः । 'सेतुरालौ स्त्रियां पुमान्'—इत्यमरः । तावत् प्रथममित्यर्थः । वन्ध्यतां निष्फलतां व्यर्थतामिति यावत्, नीतः प्रापितः । यदि पश्चादपि सीता परिहातव्या तर्हि सेतुबन्धादिप्रयासो नितरां व्यर्थः ।

शुद्धिसाक्ष्ये नियुक्तः । सीता रावणगृहोषितापि सर्वथा निष्पापेति वेदितुं वन्हिपरीक्षाऽऽदृता । प्रज्वलन्तीं चितामारूढा सती सीता स्वस्थैवातिष्ठदिति तस्यां पातकाभावः सर्वैरङ्गीकृतः । वन्हिरेव तत्र निर्णेताऽऽस्थितः । स च देवो दिव्यगुणात्मकः वन्हिः अग्निः न च विगणितः । कमपि स्थेयत्वेन स्वयं नियुज्य तन्मतास्वीकरणमवहेलनस्य चरमसीमा, इदं च प्राकृते जनेपि, भगवति विभावसौ तु किमु

---

[1] 'अथवा तत् किमि'ति पृथगवस्थापितमस्माभिः, प्रश्नचिन्हं च विरामसूचक मुपात्तम्, अन्यथा 'तत्' इति पदं व्यर्थं स्यात् ।

( परिक्रम्य )

भो भोः । कष्टम् । अतिनिरालम्बस्तपस्विन्याः प्रवासः ।

पातयति सा क्व दृष्टिं कस्मिन्नासाद्य चित्तमाश्वसिति ।
जीवति कथं निराशा श्वापदभवने वने सीता ॥४॥

---

वक्तव्यमिति तात्पर्यम् । भुवनमहिता लोकसत्कृता इक्ष्वाकूणां राज्ञां सन्ततिः प्रजा (कुशलवरूपा) मे मम न ईक्षिता परिगणिता । सीतावृत्तान्तः कुशलवजन्मादिश्च रामस्य सर्वथाऽविदित इति वेदितव्यम् । निर्वासनावसरे सीताऽन्तर्वत्नीति तां दशामुद्दिश्य सन्ततिपदमुपात्तम् । तां मैथिलीं मैथिलस्य राज्ञो जनकस्य दुहितरं सीतां निरस्य दूरीकृत्य मोहात् अज्ञानात् । 'मोहः पुनरविद्ये'ति वात्स्यायनः ।

'इह हि कुर्वन् साध्वीं शिष्यः क्रियां न निवार्यते
त्यजति तु यदा मोहान्मार्गं तदा गुरुरङ्कुशः ।इति च मुद्राराक्षसे विशाखदत्तः । 'अथ मोहो त्रिलिङ्गे स्यादविद्यायाञ्च मूर्च्छने'—इति च मेदिनीकारः । किं किं अकार्यं कर्मेत्यर्थः । अहं अकरवं अकार्षम् ॥ ३ ॥

अतिनिरालम्बः सर्वथाऽऽलम्बनरहितः । निरालम्बतामेव दर्शयति पातयतीति— सा क्व दृष्टिं पातयति, चित्तं कस्मिन् आसाद्य आश्वसिति । श्वापदभवने वने निराशा सीता कथं जीवतीति योजना ॥

सा सीता क्व कुत्र दृष्टिं चक्षुः पातयति निक्षिपति रमणीयस्य वस्तुनोऽभावात्, चित्तं चेतः कस्मिन् मनोरमे वस्तुनि आसाद्य आधाय आश्वसिति आश्वासनं लभते । श्वापदभवने श्वापदानां सिंहप्रमुखानां हिंस्रजन्तूनां निलये वने निराशा सती सीता कथं जीवति प्राणिति । अयं भावः—आशया जीवितं ध्रियते, साशैश्च धार्यते जीवनम् । वनं तावच्छ्वापदाकीर्णं सीता च जीविते निराशा भूयोपि तेषां भोजनत्वेनात्मदेहमर्पयिष्यति नात्मानं परित्रातुं शक्ष्यति यतिष्यते वा ।

यद्यपि निर्वासनवेला चिरायातीता । एतस्मिन् दीर्घेऽवकाशे जातौ कुशलवौ, क्रमेण स्तनन्धयत्वबालत्वकुमारत्वदशा अधिगत्य रामायणाध्ययनं कुर्वाणावास्ते, तथापि नाटकस्य प्रणेत्रा कविना समयदैर्घ्यं न केवलं नापेक्षणीयं प्रत्युत संक्षिप्य दर्शनीयम् । वर्षाणां घटनाचक्रं कतिपयहोरास्वेव संकोच्य प्रदर्शनीयं भवति । सीतानिर्वासनोत्तरं रामस्य प्रथमं दर्शनं तृतीयेऽङ्के रङ्गस्थानामत्रैव जायते । तस्मात् सीतां निर्वास्य पश्चात्तापाक्रान्तो राम एव सहृदयेन कविनाऽऽलेखितव्यः । सचानुतापो न तीव्रः स्याद्यदि रामेण सीतायाः प्रवृत्तिर्विदिता स्यात्कुशलवयोश्च जनिर्विज्ञाता भवेत् । जायां विनष्टां तथैव साकं सन्ततिञ्च प्रशान्तामनुशोचन् सापराधोऽपि रामः कस्य सचेतसो न भवेदनुकम्पाभाजनमिति सुविमृश्यैवोपनिबद्धवान् कविर्वस्तुजातमिति सपरितोषं विरमामः ॥ ४ ॥

ल—(आत्मगतम्) आर्याया विप्रवासं तनयवैशसञ्च समनुचिन्त्य सुतरामयं सन्तप्यते, ततः प्रस्तावान्तरेण देवीवृत्तान्तमपसारयामि। (प्रकाशम्) इतस्तावदवलोकयत्वार्यः—

मरकतहरितानामम्भसामेकयोनि—
मंदकल कलहंसीगीतरम्योपकण्ठा।
नलिनवनविकासैर्वासयन्ती दिगन्तान्
नरवर पुरतस्ते दृश्यते गोमतीयम् ॥ ५ ॥

---

आर्यायाः सीतायाः विप्रवासं सुदूरेऽवस्थानं यद्वा विनाशम्। 'प्रवासनं परासनं निषूदनं निहिंसन'—मिति मारणपर्यायेष्वमरः। प्रवासनं विप्रवासनं विप्रवासः इति पर्यायाः। हिंस्रजन्तुकृतं मारणम्, अपि वा रामकृतमेव तत्, कोमलाङ्गीं नीरक्षां सीतां वने तथा नाम परित्यजन् रामः श्वापदेभ्य आमिषमिवोपाहरन् तस्याः मारणे हेतुः।

तनयवैशसम्—इति, तनयस्य तनययोर्वा वैशसं निधनम्। विशसनं मारणम्। 'निर्वापणं विशसनं मारणं प्रविघातनम्,—इत्यमरः।

व्यापादितायां सीतायां तद्गर्भोऽपि व्यापन्नः। य एव सीताया निहन्ता स एव भ्रूणस्यापि। जायाघाती भ्रूणस्य च व्यापादयिता कथं नाम मन्युभराक्रान्तो न भवेत् ?

प्रस्तावान्तरेण—इति, प्रस्तूयते इति प्रस्तावः, अन्यः प्रस्तावः प्रस्तावान्तरं, तेन, विषयान्तरेणेत्यर्थः। अपसारयामि दूरीकरोमि, राममनस्तोऽपनयामि। सन्तापहेतुः सीता शीतशीतया गोमत्या शक्या व्यपोहितुमिति तां प्रस्तौति मरकतेति—मरकतहरितानां अम्भसां एकयोनिः, मदकलकलहंसीगीतरम्योपकण्ठा दिगन्तान् नलिनवनविकासैः वासयन्ती इयं गोमती नरवर! ते पुरतः दृश्यते।

मरकतहरितानां मरकतमिव हरितानाम्। मरकतं गारुत्मतं हरिन्मणिरिति यावत्। 'गारुत्मतं मरकतमश्मगर्भो हरिन्मणिः'—इत्यमरः। हरितवर्णाना मित्यर्थः, अम्भसां जलानां एकयोनिः प्रधानं कारणम्, मदेति—मदो हर्षः। 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः'—इति विश्वमेदिन्यौ। तेन कलाः सुन्दर्यः, कलहंसीविशेषणम्, कलं मधुरमिति वा, गीतविशेषणम्। कलहंसी कादम्बाङ्गना। 'कलो मधुरवाक् हंसः। कलहंसस्तु कादम्बे राजहंसे नृपोत्तमे'—इति मेदिनी। तासां गीतेन मनोहरगानेन रम्यं मधुरं सुन्दरञ्च उपकण्ठं समीपवर्ती प्रदेशो यस्याः सा, गोमतीविशेषणम्। 'उपकण्ठान्तिकाभ्यर्णे'ति समीपपर्यायेष्वमरः। दिगन्तान् दिक्प्रान्तान्। 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि च'—इति हेमचन्द्रः। नलिनवनविकासैः नलिनानां यानि वनानि तेषां विकासैः। नलिनानि पद्मानि। 'वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम्'—इति पद्म-

रा—( स्पर्शमभिनीय )

मुक्ताहारा मलयमरुतश्चन्दनं चन्द्रपादाः
सीतात्यागात्प्रभृति नितरां तापमेवावहन्ति।
अद्याकस्माद्रमयति मनो गोमतीतीरवायु-
र्नूनं तस्यां दिशि निवसति प्रोषिता सा वराकी ॥ ६ ॥

ल—अतिविषमोऽयं निम्नगावतारः, तदप्रमत्तमवतीर्यताम्।

( उभाववतरणमभिनीय ) [ निर्वर्ण्य ]

यथैतान्यविरलपदन्यासलाञ्छितानि सैकतानि वृन्तमात्रावशेषतया संसूच्यमानकुसुमापचया रोधोलताः तदालूनकिसलयतया विरलच्छाया वनस्पतयः, तथा जानामि प्रत्यासन्नवर्तिना मनुष्याधिवासेन भवितव्यम्। तथाहि—

---

सामान्यपर्यायेष्वमरः। तेषां वनं समूहः इति यावत्, तस्य विकासैः स्फुटनैः। 'विकासः स्फुटने व्यक्तौ'—इति धरणिः। वासयन्ती सौरभयन्ती। गोमतीतीरे प्ररूढानि विकसितानि चारविन्दानि तन्नीरेण परिपोष्यन्ते पृषतभरसम्पृक्तेन च मारुतेनाल्हाद्यन्ते इति सैव दिगन्तान् कुसुमभरसौरभ्यभरितान् विदधानोक्ता। नरवर नरश्रेष्ठ! सेयं गोमती नदी ते तव पुरतः पुरस्तात् दृश्यते ऽवलोक्यते ॥ ५ ॥

सीतात्यागात्प्रभृति मुक्ताहाराः मलयमरुतः चन्दनं चन्द्रपादाः नितरां तापं एव आवहन्ति। अद्य गोमतीतीरवायुः अकस्मात् मनः रमयति नूनं सा वराकी प्रोषिता तस्यां दिशि निवसति ॥

सीतात्यागात्प्रभृति सीतायाः परित्यागादारभ्य मुक्ताहाराः मुक्तानां हाराः मौक्तिकैः विरचिताः स्रजः, मलयमरुतः मलयमारुताः दक्षिणवायव इति यावत्, चन्दनं मलयजम्। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रियाम्'—इत्यमरः, चन्द्रपादाः चन्द्रस्य किरणाः मयूखाः इति यावत्। 'पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते। चरणे च मयूखे च'—इति मेदिनी। नितरां तापं संतापं एव आवहन्ति कुर्वन्तीत्यर्थः। विरहिणां चन्दनादयो भूयोऽप्युद्वेगकराः इति भावः। अद्य पुनः गोमतीतीरवायुरयं गात्रस्पर्शी पवनः अकस्मादेव मनश्चित्तं रमयति प्रसादयति, मनोहरः प्रतिभातीत्यर्थः। नूनं निश्चयेन तस्यां दिशि दक्षिणस्यामित्यर्थः सा वराकी प्रोषिता मया पत्या विहीना मन्दभागा निवसति।

अयोध्यातः समागत्याद्यापि रामो गोमत्या उत्तरस्मिन् तीरे स्थितः। गोमती ततो दक्षिणेन प्रवहति। तत एव दिशः प्रवहन् पवनोऽद्यावधि दुःखाकरः सुखकरः संवृत्त इति सीतासान्निध्यमेव तन्निमित्तमित्यवधारयति रामः ॥ ६ ॥

अभिनवरचितानि देवतानां जलकुसुमैर्बलिमन्ति सैकतानि ।
इयमपि कुरुते तरङ्गमध्ये भुजगवधूललितानि कुन्दमाला ॥७॥

---

अतिविषमः दुःप्रवेशः, अयं पुरोवर्ती, निम्नगावतारः निम्नगायाः नद्याः अवतारः तीर्थम्, अवसर्पी प्रदेश इति यावत् । 'स्रवन्ती निम्नगापगा'-इति नदीपर्यायेष्वमरः । 'तीर्थं योनौ जलावतारे च'-इति हलायुधः । अप्रमत्तमिति क्रियाविशेषणम्-प्रमादोऽनवधानता तद्रहितं यथा तथा ।

निर्वर्ण्य, निध्याय, अवधानपूर्वकं सम्यग् विलोक्येत्यर्थः । 'निर्वर्णनं तु निध्यानं दर्शनालोकनेक्षणम्'— इत्यमरः ।

अविरलपदन्यासलाञ्छितानि अविरलाः सान्द्राः समीपवर्तिनः ये पदन्यासाः पदयोश्चरणयोः न्यासाः निक्षेपाः तैर्लाञ्छितानि चिन्हितानि सैकतानि बालुकामयतटानि पुलिनादूर्ध्ववर्तिनः सिकतामयाः प्रदेशा इति यावत् ।

वृन्तमात्रावशेषतया वृन्तमात्रस्य अवशेषतया, वृन्तं परिमाणमस्येति वृन्तमात्रम् । 'वृन्तं प्रसवबन्धे च घटीधाराकुचाग्रयोः'—इति कोषः । प्रसवस्य पुष्पफलपत्रस्य बन्धनमिति यावत् । तन्मात्रावशिष्टतया संसूच्यमानकुसुमापचयाः संसूच्यमानः प्रदृश्यमानः कुसुमानां पुष्पाणां अपचयः अवचयनं यासु ताः, रोधोलताः रोधसः तटस्य लताः वल्ल्यः । 'रोधः कूलं च तीरञ्च प्रतीरञ्च तटं त्रिषु'—इत्यमरः ।

तदालूनकिसलयतया तदा आलूनानि किसलयानि तेषां भावस्तया, तदा तदानीमेव सद्य एवेत्यर्थः आलूनानि आच्छिन्नानि किसलयानि पल्लवानि नवानि पत्राणि तस्माद्धेतोरित्यर्थः ।

विरलच्छायाः विरला छाया येषां ते । वनस्पतयः पुष्पं विना फलवन्तो द्रुमाः । 'वनस्पतिर्ना द्रुमात्रे विना पुष्पं फलिद्रुमे'—इति कोषः ।

प्रत्यासन्नवर्तिना समीपवर्तिना । मनुष्याधिवासः मनुष्याणां जनानां अधिवासः वसतिः । सैकते पदपङ्क्तिः, लतासु पुष्पोच्चयः वृक्षेषु च पल्लवविरहोऽदृश्यमानानामपि जनानां सूचकः इत्यर्थः ।

अभिनवेति—देवतानां जलकुसुमैः सैकतानि अभिनवरचितानि बलिमन्ति । इयमपि कुन्दमाला तरङ्गमध्ये भुजगवधूललितानि कुरुते ।

देवतानां निमित्तं उपाहृतैः जलकुसुमैः जलैः कुसुमैश्चेति भावः, सैकतानि बालुकामयतटानि अभिनवरचितानि सद्यः सम्पादितानि, बलिमन्ति पूजोपहारोपेतानि । सद्य एव देवतानिमित्तं सैकतेषु पूजोपहाराः धृताः सन्तीति तात्पर्यम् । इयमपि कुन्दमाला पूजोपहारमयी माध्यप्रसूनविरचिता स्रक्, तरङ्गमध्ये वर्तमाना, भुजग-

रा—न केवलं प्रत्यासन्नवर्तिना प्रतिस्रोतोपगतेनापि मनुष्याधिवासेन भवितव्यम्।

ल—आश्चर्यमाश्चर्यम्! एषा हि कुन्दमाला चरणसपर्यामिव कर्तुकामया समुद्रगामिन्या तरङ्गपरम्परया क्रमेण देवस्य पादान्तिकमुपहृता। अवहितं प्रेक्षणीया विरचना, तदवलोकयत्वार्यः। (गृहीत्वोपनयति)

रा—(निर्वर्ण्य रोमाञ्चमभिनीय) वत्स, दृष्टपूर्वमिदं कुसुमरचनाविन्यासकौशलम्।

ल—क्व दृष्टम्?

रा—क्व वान्यत्रेदृशस्यावस्थानम्?

ल—किं देव्याम्?

रा—अथ किम्?

ल—को जानाति दुर्विदग्धः प्रजापतिः कथं कथं क्रीडतीति। गच्छत्वार्यः इदमेव गोमतीतीरं प्रतिस्रोतोऽनुसरावो यावदस्याः कुन्दमालायाः प्रभवमासादयावः।

---

वधूललितानि भुजगवधू सर्पिणी तस्याः ललितानि रतिचेष्टितानि, प्रियं प्रति भावाविष्करणं ललितम्, शृङ्गारचेष्टितमिति यावत्। कुरुते करोति। यथा स्रवन्तीतरङ्गेषु प्रसरन्ती संतरन्ती भुजङ्गी विचेष्टते तद्वदित्यर्थः॥ ७॥

प्रतिस्रोतोपगतेनेति—स्रोतो निम्नगारयः। 'स्रु गतौ' (भ्वा० प० अ०) 'स्रुरीभ्यां तुट् च' (उ० ४। २०२) इत्यसुन्। तद्विरुद्धं प्रतिस्रोतः, निम्नगारयप्रतिकूलमित्यर्थः। प्रतिस्रोतः इत्यव्ययम्। प्रतिस्रोतः अपगतेनेति सन्धिच्छेदः कवेर्नाभीष्टः, प्रतिस्रोतः उपगतेनेति सन्धिच्छेदोऽभीप्सितः, न च सम्भवति, असुनः सकारस्य व्यवधानात्। तस्मादयं प्रयोगश्चिन्तनीयः, अकारान्तः स्रोतशब्दो वा मृग्यः। महाकविदिङ्नागप्रयुक्तत्वात्तथा कल्पनीय इति वयम्। 'प्रतिस्रोतोऽनुसरावः'—इति चानुपदं वक्ष्यति।

चरणसपर्यां चरणयोः रामपादयोः पूजां सत्कृतिम्। 'पूजा नमस्यापचितिः सपर्यार्चार्हणाः समाः'—इत्यमरः। समुद्रगामिन्या नद्या गोमत्या। पादान्तिकं चरणसमीपम्। उपहृता उपहाररूपेणानीता।

रा—सुलभसादृश्यो लोकसन्निवेशः। नचैतावदस्माकं भागधेयम्। इतश्चात्यन्तविप्रकृष्टे देशे परित्यक्तायाः सीतायाः आगमनं न सम्भाव्यते। तथाप्यादेशय मार्गं येनेदं सलिलान्तरममुञ्चन्तौ वसतिमासादयावः।

ल—एषा नदीभूमिः कण्टकितशर्कराशुक्तिपुटदुःखसञ्चारा, तद्यथा यथा मार्गमादेशयामि तथा तथा शनैरागन्तव्यमार्येण।

रा—एवं क्रियताम्। यद्यपीयमभिमता कुन्दमाला तथापि देवतोपहारशङ्कया नोपभोगमुपनीयते। ( इति विमुञ्चति )।

---

अवहितं अवधानेन, सूक्ष्मेक्षिकया।

दुर्विदग्धः अविवेकी।

प्रभवं प्रभवत्यस्मादिति प्रभवं जनिस्थानम्, उद्गमम्। लोकसन्निवेशः लोकस्य सन्निवेशः रचनाविन्यासः, लोकस्य जनस्य। यथा नाम सीता कुसुमैर्दाम्नां रचनामकरोत्, तादृशरचनाविशेषयुक्ताः स्रजोऽन्येनापि केनचिच्छक्यन्ते उद्ग्रथितुमिति भावः। न......भागधेयम्—इमं प्रदेशं सीता समुपागता स्यादिति नेदमस्माकं भाग्यमिति तात्पर्यम्। सलिलान्तरं सलिलस्य अन्तरं अवकाशम्। प्रवाहान्नातिदूरे गच्छन्तावित्यर्थः। अमुञ्चन्तौ अपरित्यजन्तौ। आसादयावः प्राप्नुवः।

कण्टकित......सञ्चारा—कण्टकिता कण्टकतामिता प्राप्ता या शर्करा वालुका, प्रस्तरखण्डायमाना सिकता दार्ढ्यवशात्, शुक्तिपुटाश्च तैः दुःखेन सञ्चारो यत्र सा, नदीभूमिविशेषणम्। शुक्तिः शुक्तिका मुक्तास्फोटः इति यावत्। तस्य पुटानि संश्लिष्टानि।

अभिमता अभीष्टा, आदातुमिष्टेत्यर्थः। विमुञ्चति परित्यजति। एतामिति—

एतां वेत्रलतां विलङ्घय, शुक्तयः ( इति ) अस्मिन् पदं मा कृथाः, पुरो दूरावनम्रः तरुः ( इति ) व्यवधाय मूर्धानं नामय। इमां तिरश्चीं शाखां चापाग्रेण विकृष्य पुरतः विमुञ्च। पुरा शरारुदयिता उत्त्रस्यन्ति धीरं परिक्रम्यताम्।

एतां पुरतोदृश्यमानां वेत्रलतां 'बेत' इति सञ्ज्ञकस्य लतां विलङ्घय समुल्लङ्घ्य गच्छ। शुक्तयः शुक्तिकाः 'सन्ती'ति शेषः, अस्मिन् स्थले पदं मा कृथाः चरणं न निधेहि। राजानोपि नग्नपादा दिङ्नागस्याभीप्सिताः स्युः सोपानत्के पादे न भयं शुक्तिभ्यः। पुरः समक्षं दूरावनम्रः दूरं अवनम्रः अत्यर्थं नत इत्यर्थः तरुः वृक्षः इति हेतोः व्यवधाय विशेषेण अवधाय अवधानं कृत्वा ध्यानं दत्त्वेति यावत्।

ल—एतां वेत्रलतां विलङ्घ्य पदं मास्मिन् कृथाः शुष्कयो
मूर्धानं व्यवधाय नामय पुरो दूरावनम्रस्तरुः ।
चापाग्रेण विकृष्य मुञ्च पुरतः शाखां तिरश्चीमिमा-
मुत्त्रस्यन्ति पुरा शरारुदयिता धीरं परिक्रम्यताम् ॥ ८ ॥

रा—(यथोक्तं परिक्रम्य) वत्स किमेतस्मिन् देशे भगवतो वाल्मीके-
राश्रमसन्निवेशः ?

ल—किं दृष्टमार्येण ?

रा—असौ तनुत्वादवधानदृश्या दिशः समाक्रामति धूमलेखा ।
आकृष्यमाणो मृदुनानिलेन श्रोत्रेषु सम्मूर्च्छति सामनादः ॥९॥

ल—सम्यगुपलक्षितमार्येण । अहमप्यग्रतो गत्वा निरूपयामि ।
(परिक्रामंस्तरुस्तम्भमभिनीय) कथमेतस्मिन् पदोद्धारे ससा-
ध्वसमिव मे हृदयम्; स्तम्भितावूरू, उत्क्षिप्यमाणौ चरणौ

---

मूर्धानं शीर्षं नामय नम्रं कुरु । इमां तिरश्चीं तिरश्चीनां शाखां चापाग्रेण धनुष्कोट्या विकृष्य विशेषेण कृष्ट्वा पुरतः अग्रतः विमुञ्च परित्यज । शरारुदयिताः शरारूणां दयिताः, शरारूणां हिंस्राणां सिंहव्याघ्रादीनां दयिताः प्रियाः सिंहीप्रभृतयः, पुरा उत्त्रस्यन्ति निकटे भेष्यन्ति । पुरेति निपातो निकटार्थकः । 'यावत्पुरा निपातयोर्लट्' (३ । ३ । ४) इति भविष्यति लट् । तस्मात् धीरं निभृतं यथा तथा परिक्रम्यतां चल्यताम् । स्त्रीत्वात् सिंह्योपि दयाभाजनानि ॥ ८ ॥

आश्रमसन्निवेशः आश्रमस्यावस्थितिः । असाविति—असौ तनुत्वात् अवधानदृश्या धूमलेखा दिशः समाक्रामति । मृदुना अनिलेन आकृष्यमाणः सामनादः श्रोत्रेषु सम्मूर्च्छति ।

असौ दूरवर्तिनी, तनुत्वात् सूक्ष्मत्वात् । 'स्तोकाल्पक्षुल्लकाः श्लक्ष्णं सूक्ष्मं दभ्रं कृशं तनु'—इत्यमरः । अवधानदृश्या अवधानेन दृश्या, ध्यानेन द्रष्टुं शक्या धूमलेखा धूमराजिः । 'लेखा राज्यां लिपावपि'—इति हैमः । दिशः समाक्रामति पुरोवर्तिन्याः दिशः उद्गच्छति । 'दिशः' इति पञ्चम्यन्तं पदम् 'आङ उद्गमने' (१ । ३ । ४०) इति प्राप्तमात्मनेपदं 'ज्योतिरुद्गमने इति वाच्यमिति वार्तिकेन नियम्यते । तेन सूर्यः आक्रमते, धूमस्तु आक्रामति हर्म्यतलात् । मृदुना अनिलेन पवनेन आकृष्यमाणः सामनादः सामवेदमन्त्राणामुच्चारणेन प्रादुर्भूतः शब्दः श्रोत्रेषु कर्णेषु सम्मूर्च्छति प्रवृद्धिं गच्छति । 'मूर्च्छनं मेलने प्रोक्तं वृद्धौ मूर्छितमेव वा'—इति सज्जनः । यथा भारविः—

'जलौघसंमूर्छनमूर्छितस्वनः'—इति ॥ ९ ॥

उपलक्षितं अनुमितमित्यर्थः । स्वबोधकत्वे सति स्वेतरबोधकत्वमुपलक्षण-

नाग्रतो भूमिं गन्तुमुत्सहेते । तत् किमिदम् । (विचिन्त्य) सुव्यक्तं गुरुजनसमाक्रान्तेन प्रदेशेन भवितव्यम् । अथ पदानीव लक्ष्यन्ते । (भूमिं निर्वर्णयति)

श—किङ्कृतोऽयं वत्सस्य भूमिनिरूपणायामादरः ?

ल—एतानि नितान्तमनोहरतया सङ्क्रान्तचरणतलसौकुमार्याणि ललितनिभृतविन्यासतया विज्ञायमानस्त्रीपदभावानि पुलिनतलसन्निवेशपदानि दृश्यन्ते । पश्यत्वार्यः—

विलासयोगेन परिश्रमेण वा
स्वभावतो वा निभृतानि मन्थरम् ।

---

त्वम्, धूमलेखात्मानं बोधयन्ती वाल्मीक्याश्रमञ्चापि ज्ञापयति । सामनादश्च तथा।

निरूपयामि अवधारयामि, सत्यमेव वाल्मीकेराश्रमपदमिदं नवेति निश्चिनोमि। तरुस्तम्भमभिनीय, तरोः स्तम्भः, तरुनिर्मितः स्तम्भः, लघूच्छ्रायो लघुपरिणाहश्च कश्चन पादप एव स्तम्भत्वेन कल्पितः स्यादुत तरोः स्कन्ध एव स्तम्भसादृश्यात् स्तम्भः इति। एतस्मिन्नर्थे स्वीक्रियमाणे 'अभिनीये'ति पदं न सङ्गच्छते, अतो भिन्नोऽर्थ उपादीयते । तरुस्तम्भं तरुणा स्तम्भं, तरुणा हेतुना स्तम्भं विष्टम्भं गमननिवृत्तिमभिनीय रङ्गस्थान् प्रति दर्शयित्वेत्यर्थः । परिचलन् पुरोगतेन तरुणा निरुद्धगतिमात्मानं प्रदर्श्येति भावः । पदोद्धारे पदस्य उद्धारे उद्धरणे चरणस्योत्क्षेपणे इति यावत्, ससाध्वसं सभयम् । 'त्रासोत्त्रासौ दरो भीतमातङ्को भीश्च साध्वसम्' इति शब्दार्णवः, भीतमित्यर्थः । अग्रे गन्तुं मनो न प्रवर्त्तते इति तात्पर्यम् । स्तम्भितौ कीलितौ, ऊरू जङ्घे । उत्क्षिप्यमाणौ उत्थाप्यमानौ । उत्सहेते प्रभवतः ।

तत् किमिदमिति—'माया खिदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः'—इति भारविवचनानुसारं किमिति नप्रभवामि गन्तुमग्रतः । वस्तुतस्तु गतिनिरोधोऽयं सीताप्रवृत्त्युपलम्भहेतुरिति शुभशकुननिमित्तकः । सुव्यक्तं सुस्पष्टं नूनमिति यावत् । गुरुजनसमाक्रान्तेन गुरुजनः सीतारूपः तेन समाक्रान्तेन अध्यासितेन । प्रदेशेन स्थानेनानेन । भवितव्यं भाव्यम् । नियतमत्र सीतावस्थितिरिति भावः । पदानि पदपङ्क्तिः चरणचिन्हानीत्यर्थः । लक्ष्यन्ते दृश्यन्ते । भूमिनिरूपणायां धरातलस्यावलोकने ।

सङ्क्रान्त......पदानीति—सङ्क्रान्तं चरणतलयोः सौकुमार्यं येषु तानि, सङ्क्रान्तं सङ्क्रम्य गतं चरणतलयोः पादयोरधः प्रदेशयोः सौकुमार्यं मृदुलत्वं येषु तानि । ललितनिभृतविन्यासतया ललितं सुन्दरं, निभृतं मन्थरं यथा तथा यो विन्यासः पादक्षेपः तस्य भावस्तया । विज्ञायमानस्त्रीपदभावानि स्त्रियाः पदानि स्त्रीपदानि विज्ञायमानानां स्त्रीपदानां भावो येषु तानि । कस्याश्चिद् रमण्याः पदप-

पदानि कस्याश्चिदिमानि सैकते
प्रयान्ति तुल्यं कलहंसविभ्रमैः ॥ १० ॥

रा—( निर्वर्ण्य सहर्षम् ) वत्स, किमुच्यते कस्याश्चिदिति । ननु वक्तव्यम्—सीतायाः पदानि—इति । पश्य—

समानं संस्थानं निभृतललिता सैव रचना
तदेवैतद्रेखाकमलरचितं चारु तिलकम् ।
यथा चेयं दृष्टा हरति हृदयं शोकविधुरं
तथा ह्यस्मिन् देव्या सपदि पदपङ्क्तिर्विनिहिता ॥ ११ ॥

---

ङ्क्तिरिति सुस्पष्टं लक्ष्यते यत्र तानीत्यर्थः । पुलिनतलसन्निवेशपदानि पुलिनतले वालुकामयतीरे सन्निवेशः अवस्थितिर्येषां तानि पदानि पादचिह्नानीत्यर्थः ।

विलासयोगेनेति—विलासयोगेन परिश्रमेण वा स्वभावतो वा निभृतानि कस्याश्चिद् इमानि पदानि सैकते कलहंसविभ्रमैः तुल्यं मन्थरं प्रयान्ति ।

विलासयोगेन विलासस्य योगेन, विलासः 'प्रियसमीपगमने यः स्थानासनगमनविलोकितेषु विकारोऽकस्माच्च क्रोधस्मितचमत्कारमुखविक्लवनमि'ति शिवदत्तमहोदयाः । 'विलासोऽङ्ग विशेषो यः प्रियाप्तावासनादिषु' । 'विलासो हावभेदे स्याल्लीलायामपि पुंस्ययम्'—इति कश्चित् । तस्य योगेन सम्बन्धेन । विलासेन कापि रमणी मन्थरं पदानि निदधाविति । वा परिश्रमेण, यद्वा श्रमेण हेतुना, श्रान्ता सती कापि शनैः शनैः पदन्यासमकरोत् । स्वभावतो वा निभृतानि प्रकृत्यैव शनैः प्रवर्तितुं समर्थानीत्यर्थः । कस्याश्चिद् महिलायाः पदानि पादचिह्नानीत्यर्थः सैकते अस्मिन् सिकतामयेप्रदेशे मन्थरं शनैः शनैः प्रयान्ति गच्छन्ति, किमिव ? कलहंसविभ्रमैः तुल्यं कादम्बानां हावैः समम् । विभ्रमो भ्रान्तिहावयोः—इति ॥१०॥

संस्थानं समानम्, सैव निभृतललिता रचना, एतद् रेखाकमलरचितं चारु तिलकं तदेव, यथा च इयं पदपङ्क्तिः दृष्टा शोकविधुरं हृदयं हरति तथा देव्या अस्मिन् सपदि विनिहिता हीति योजना ।

संस्थानं समवस्थितिः, समानं समा । यावानवकाशः सीताचरणेन गृह्यते तावानेवानेन पादचिह्नेन समन्ततो गृहीत इति तस्या एवेदं चरणचिह्नजातमिति प्रथमो हेतुः । निभृतललिता रचना सैवेति द्वितीयः । निभृता नितरां भृता परिपूर्णा अथच ललिता लालित्ययुक्ता रचना निर्मितिः सैव या सीताचरणयोर्दृष्टपूर्वा । एतत् पुरो दृश्यमानं रेखाकमलरचितं रेखाभिर्निर्मितं यत् कमलं तेन रचितं सम्पादितं चारु सुन्दरं तिलकं चरणतलवर्ति त्रिशेषकं तदेव, तस्य विद्यमानता सीताचरणतले सम्यग् विज्ञायते इति तृतीयो हेतुः । यथा च इयं पदपङ्क्तिः चरणचिह्नपरम्परा दृष्टा सती आलोकिता सती, मयेति गम्यते, शोकविधुरं शोकेन शुचा विधुरं विकलं विक्लवमिति यावत् । 'वैकल्येपि च विश्लेषे विधुरं विकले त्रिषु'—

ल—( सहर्षम् ) यावदेतामेव पदपङ्क्तिमनुसरन्तौ वाल्मीकेराश्रम-पदमनुसरावः । यथा चेयं प्रत्यग्रनिहिता पदपङ्क्तिस्तथा जानामि प्रत्यासन्नवर्तिन्या देव्या भवितव्यमिति ।

( ततः प्रविशति सीता )

सी—णिव्वत्तिदं सवणं, उवासिदा संझा, हुदो हुदवहो, ओगाहिदा भगवई भाईरही, भगवईं भाईरहीं उद्दिसिअ महपदिण्णा सहत्थगद्धा कुन्दमाला समप्पिदा । दाणिं अहं उण्णदगंभीर-सीदलं लदाजालं पविसिअ अदिहिजणोपत्थाणजोग्गाइं कुसुमाइं ओचिणोमि । (क)

( प्रविष्टकेनापचयं नाटयति )

ल—एषा पदपङ्क्तिः क्रमेण मार्गवशात् पुलिनतलं परित्यज्य स्थल-मारूढा, प्रणष्टा च । तदिदमेव पुरस्तात्संदृश्यमानलतागुल्म-प्रच्छायमतिरमणीयमध्यास्य गतश्रमौ भगवन्तं प्राचेतसमु-पसर्पावः ।

रा—यदभिरुचितं भवते ।

( परिक्रम्योपविशतः )

रा—( निःश्वस्य सबाष्पम् ) वत्स वत्स—

सी—( कर्णं दत्त्वा ) को णु खु एसो सअलजलहरद्धणिदगंभीरेण-सरविसेसेण अच्चंतदुःखवाअणं वि मे सरीरं रोमांचेदि । णिरूवेमि दाव को एसोत्ति; अहवा ण जुत्तं मम अजाणिअ

(क) निर्वर्तितं सवनम्, उपासिता[2] सन्ध्या, हुतो हुतवहः, अवगाहिता भगवती भागीरथी, भगवतीं भागीरथीमुद्दिश्य········ स्वहस्तग्रथिता कुन्दमाला समर्पिता । इदानीमहमुन्नतगम्भीरशीतलं लताजालं प्रविश्यातिथिजनोपस्थानयोग्यानि कुसुमान्यवचिनोमि ।

इति त्रिकाण्डशेषः । तादृशमपि हृदयं मम चित्तं हरति प्रसभं रञ्जयति, तथा मन्ये देव्या सीतया अस्मिन् सैकते सा विनिहिता स्थापितेति चतुर्थो हेतुः । 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः'—इत्याशयः, नहि शोक-ध्वान्तक्रान्तं स्वान्तं निर्निमित्त मनुरञ्जितं भवति ॥ ११ ॥

१ 'अवचयामि'ति पाठः साधीयस्तरः, अपचयस्य व्यृद्धौ ( क्षये ) बहुल-प्रयोगदर्शनात् ।

२ 'उपसिता'—इति प्रामादिकः पाठः ।

परमत्थं अत्थाणे दिट्ठिं विसज्जइदुं । किं एत्थ जाणिदव्वं ? णावणाहयदि मे सरीरं परपुरुससद्दो रोमंचग्गहणेण, सुव्वत्तं सो एत्थ णिरणुकोसो संपत्तो। त णिव्वण्णइस्सं । अहवा तह परंमुहे जणे एव्वं अहिमुही होमित्ति जं सच्चं अत्तणोवि अहं लज्जिदम्हि । ता ण पेक्खिस्सं । ( पराङ्मुखी भूत्वा ) कहं ण प्पहवामि अत्ताणअस्स, आवंजिअदि मे वलक्कारेण तहिं एव्व दिठी[1] । किं अवरं करेमि अत्ताणअस्स राअपराहीणदाए णिओओ ( निर्वर्णयति ) अहो दिट्ठोत्ति परिदोसो, चिरप्पवासोत्ति मण्णू, परिक्खामोत्ति उव्वेओ, णिरणुकोसोत्ति अहिमाणो, चिरपरिचिदोत्ति अणुराओ, दस्सणीओत्ति उक्कण्ठा, सामित्ति वहुमाणो, कुसलवाणं तादोत्ति कुडुंविणीसब्भावो, अवराहं पविसिदंहित्ति लज्जा; ण जाणामि अंअउत्तदंसणेण कीदिसं अवत्थं अणुभवामित्ति । (क)

ल—किमर्थमार्यो मामकस्मादेवामन्त्र्य वाष्पायमाननयनस्तूष्णीमधोमुखः संवृत्तः ?

रा—निः सम्पातविविक्तमिदमरण्यं तटरुहतरुच्छायासमाकीर्णरम-

(क) को नु खल्वेष सजलजलदस्तनितगम्भीरेण स्वरविशेषेणात्यन्तदुःखभाजनमपि मे शरीरं रोमाञ्चयति। निरूपयामि तावत् क एष इति । अथवा न युक्तं ममाज्ञात्वा परमार्थमस्थाने दृष्टिं विसर्जयितुम् । किमत्र ज्ञातव्यम् ? नावनाहयति मे शरीरं परपुरुषशब्दो रोमाञ्चग्रहणेन । सुव्यक्तं सोऽत्र निरनुक्रोशः सम्प्राप्तः । तन्निर्वर्णयामि । अथवा तथा पराङ्मुखे जने एवमभिमुखीभवामीति यत्सत्यमात्मनोपि अहं लज्जितास्मि। तन्न प्रेक्षिष्ये । ( पराङ्मुखी भूत्वा ) कथं न प्रभवाम्यात्मनः, आवर्ज्यते मे वलात्कारेण तत्रैव दृष्टिः । किमपरं करोमि आत्मनो राजपराधीनताया नियोगः । (निर्वर्णयति) अहो दृष्ट इति परितोषः, चिरप्रवास इति मन्युः, परिक्षाम इत्युद्वेगः, निरनुक्रोश इत्यभिमानः, चिरपरिचित इत्यनुरागः, दर्शनीय इत्युत्कण्ठा, स्वामीति बहुमानः, कुशलवयोस्तात इति कुटुम्बिनीसद्भावः, अपराधं प्रवेशितास्मीति लज्जा, न जानामि आर्यपुत्रदर्शनेन कीदृशीमवस्थामनुभवामीति ।

अनुसरन्तौ अनुगच्छन्तौ । आश्रमपदं आश्रमस्थानम् । प्रत्यग्रनिहिता प्रत्यग्रं

१ 'दिठ्ठी' इति समीचीनतरः पाठः ।

णीयसैकतां प्रसन्नसलिलवाहिनीं समुद्रगामिनीश्चावलोक-
यन् संस्मृत्य दण्डकावनवासमेवं वैक्लव्यमनुप्राप्तोऽस्मि।

सी—अंअउत्त सुमरसि वणवासं ण उण वणवासिणं जणं। (क)

ल—किं तत्र दुःखैकवासे वनवासे स्मर्त्तव्यमिति।

रा—वत्स, लक्ष्मण, किमेवं ब्रवीषि—दुःखैकवासे वनवासे स्मर्त्त-
व्यमिति। पश्य पश्य—

(क) आर्यपुत्र स्मरसि वनवासं न पुनर्वनवासिनं जनम्।

निहिता नवनवा स्थापिता। 'प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः। नूत्नश्च'—इत्यमरः। प्रत्यासन्नवर्तिन्या समीपमवस्थितया।

निर्वर्तितं निष्पादितम्। सवनं अभिषवः सोमलताकण्डनमिति यावत्। 'सुत्याभिषवः सवनं च सा'—इत्यमरः, 'सवनं त्वध्वरे स्नाने सोमनिर्दलनेपि च'—इति च मेदिनी। उपासिता अनुष्ठिता। सन्ध्या सन्धिवेलायामनुष्ठीयमाना सावित्रीजप-प्राणायाम-परमेश्वराराधनरूपा क्रिया। स्त्रीणामपि सन्ध्यायामधिकारं प्रदर्शयन् कविरयं नितान्तमुदाराशयः प्रतिभाति। इष्टावाप्त्यनिष्टपरिहाराभ्यां दिव्य-गुणसम्पदुपलम्भाय च पुरुषवद् नारीभिरपि कर्त्तव्यमेव जगदीश्वराराधनं प्रत्यहम्। हुतवहः अग्निः हुतं वहति। अग्निहोत्रमपि कृतमिति भावः। अवगाहिता विलोडिता, गङ्गायाः प्रवाहे स्थित्वा निमज्जनोन्मज्जनपुरस्सरं स्नानं कृतमिति भावः।

नैमिशारण्ये प्रवृत्तं सत्रमालक्ष्य वाल्मीकिना सह गोमतीतीरे पर्यवस्थिता जनकजा कथं नाम भगवतीं भागीरथीं प्रभवत्यवगाहितुमिति कविरेव वेत्ति। सर्वथा प्रामादिकमिदमिति वयम्। यत्र भगवान् वाल्मीकिरपरे च तदनुगामिन-स्तपोधनाः स एव वाल्मीकेराश्रमः। स च गोमतीतीरे साम्प्रतमवस्थित इति—एष मन्दरमहीधरसमानधैर्यो भगवतो वाल्मीकेरागमनमुपलभ्य तद्दर्शनार्थं गोमतीतीरा-श्रमपदमुच्चलितः—इति वचनैः सूचितः। सीतापि कुशलवसहिता—तथा सुकुमारा देवी सीता तथा कोमलौ च कुशलवौ तापससार्थेन सहानस्तमिते सूर्ये नैमिशं प्राप्ताः—इत्यस्यैवाङ्कस्य प्रारम्भे भारवाहकतपोधनमुखेन प्रदर्शितम्। गोमत्यास्तीरे नैमिशारण्ये वर्तमानया सीतया न भगवती भागीरथी शक्यावगाहितुम्। 'तर्ककर्क-शविचारचातुरी'—चञ्चुरस्तत्रभवान् दिङ्नागः खरतरफक्किकाजालसमाकुलितो नूनं दिग्व्यामूढः समजनि। अत्यर्थविजयापानफलं वा स्यात्। मृच्छकटिकायामपि वसन्तसेनायां चारुदत्तमभिसृतायां विटेन जलदकृतानां धारासाराणां वर्णनासम-कालमिन्द्रधनुषो वर्णनं निशागमेपि प्रारब्धमिति भवत्येव स्खलनं गच्छतः कव-यितुश्च प्रमादवशादिति क्षन्तव्यो दार्शनिकशिरोरत्नं कविर्दिङ्नागः काव्यालापे प्रवृत्तः।

१२

किसलयसुकुमारं पाणिमालम्ब्य देव्या
विविधरतिसखीभिः सङ्कथाभिर्दिनान्ते ।

---

उन्नतगम्भीरशीतलमिति—उन्नतं प्रोच्चं सोच्छ्रायम्, गम्भीरं गहनं निविड-मिति यावत्, शीतलं जडम् । लताजालं वल्लीकदम्बम् । अतिथिजनोपस्थानयोग्यानि —अतिथिजनेभ्य उपाहर्तुमुचितानि । कुसुमानि पुष्पाणि ।

एषा……प्रणष्टा चेति, सैकते यावान् मार्गांशस्तत्र तु चरणचिह्नानि संल-क्ष्यन्ते । ततः परस्मिन् भूभागे न दृश्यन्ते इति भावः । पुरस्तात् पुरतः सम्मुख-मिति यावत् । लतागुल्मप्रच्छायमिति—लता प्रसिद्धा गुल्मः स्तम्बः, अप्रकाण्ड इति यावत् । 'अप्रकाण्डे स्तम्बगुल्मौ'—इत्यमरः । तत्कृता प्रकृष्टा छाया यत्र तत्; स्तम्भाद्याधारहीनं हरितालीपरिच्छन्नं मण्डपायमानं स्थलमुच्यते, यत्र सूर्यातपो न प्रवेष्टुमलमिति । अतिरमणीयं अतिसुन्दरम् । अध्यास्य अधिष्ठाय निषेव्येति यावत् । प्राचेतसं वाल्मीकिम्, प्रचेतसोऽपत्यम् । प्रचेताः वरुणः । 'प्रचेता वरुणः पाशी'त्यमरः ।

'प्राचेतसः प्रवचसां प्रथमः कवीनाम्'—इति भोजराजः ।

सजलजलधरस्तनितगम्भीरेणेति—जलेन सहितो यो जलधरः मेघः तस्य यत् स्तनितं गर्जितं तद्वत् गम्भीरेण । 'स्तनितं गर्जितं मेघनिर्घोषो रसितादि च' —इत्यमरः । रोमाञ्चयति रोमाञ्चमञ्चति रोमकण्टकं जनयतीत्यर्थः । निरूपयामि सूक्ष्मेक्षिकया विविच्य निर्धारयामि । युक्तं उचितम् । परमार्थं तत्त्वम्, वास्तविक-वस्तुस्थितिम् । अवगाहयति विकारयतीत्यर्थः । सुव्यक्तं सुस्पष्टम् । सम्प्राप्तः समागतः । प्रभवामि समर्था भवामि नियन्तुमात्मानम् । आवर्ज्यते क्लिद्यति । बलात्कारेण प्रसभम् ।

आत्मनः……नियोगः इति—नियोगोऽनुज्ञा आदेशः इति यावत्, यद्यपि रामः पराङ्मुखः तथापि तस्मिन्नभिमुखीभावाय आत्मनः आदेशः । राज्ञो वशवर्तित्वमेव प्रजाधर्मः इति सर्वथापि पराङ्मुखतां विहाय तत्प्रवणतायै ममान्तः-करणं समादिशतीति भावः । यद्वा रामे पुरः स्थिते न समर्थास्मि चक्षुरादीन्द्रिय-जातं ततो वारयितुम्, अत्यन्तं स्निग्धे जने पुरोवर्तिनि चक्षुरादेर्निवर्तनमस्वाभा-विकम् । तथा च त्यागरूपा रामाज्ञा बलवतीति सर्वथा मया दृष्टिर्वारणीयैव ततः । अहो अहो इत्यामन्त्रणे । परितोषः सन्तोषः । अनेकहायनानन्तरं प्रिये दृष्टिगोच-रतां गते सीतामनसि परितोषस्योदयः स्वाभाविकः । चिरप्रवासः चिरं प्रवासो यस्य सः चिराय भार्याविहीनः, मन्युः शोकः । 'मन्युशोकौ तु शुक् स्त्रियाम्'—इत्यमरः । परिक्षामः कृशः दुर्बल इति यावत् । उद्वेगः वैक्लव्यम्, ममैव कार-णात्प्रियतमोऽयं कृशतां प्रपन्न इति सीताचेतसि विक्षोभः । अभिमानः गर्वः, अहं निरपराधा स्वयमेवानेन निर्वासिता, नच मम क्लेशानां कृतानेन विचारणा,

चरणगमनवेगान्मन्थरस्य स्मरामि
स्नुतपयसि तटिन्याः सैकते चङ्क्रमस्य ॥ १२ ॥

स्वकृतकर्मणः स्वयं फलमनुतिष्ठतु इति । अनुरागः प्रीतिः । दर्शनीयः प्रियदर्शनः । उत्कण्ठा उत्कलिका स्पृहेति यावत् । 'सस्पृहे पुनः । उत्कण्ठोत्कलिके तस्मिन्'--इति शब्दार्णवः । स्वामी भर्त्ता । बहुमानः चित्तसमुन्नतिः । 'मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे'--इति हैमः । कुटुम्बिनी गृहिणी । अपराधं प्रवेशितेति--नाहमपराधिनी, नापि राम एव मां सागसं मन्यते, तथा च कालिदासः--

'जानामि चैनामनघेति किन्तु'--इति । तथापि लोको मां सापराधां मनुते, लोकापवादभीतेन रामेण मां परित्यजता लोकस्य मतमनुरुध्य समर्थित एव मयि मन्तुरिति । लज्जा त्रपा । 'लज्जा सापत्रपान्यतः'--इत्यमरः ।

'अन्योन्यस्यापि जिह्रेमि किं पुनः सहवासिनः' इति भावः । कीदृशीमिति--अनेकदृष्टिकोणैः प्रसमीक्ष्य रामं विविधभावानामुदय इति भावसङ्करे समुपस्थिते सीतया न विविच्य विज्ञायते कीदृशी तस्या मानसी दशेति ।

अकस्मात् सहसा । आमन्त्र्य सम्बोध्य । वाष्पायमाणनयनः साश्रुनेत्रः । तूष्णीं मौनम् । 'मौने तु तूष्णीं तूष्णीकाम्'--इत्यमरः । अधोमुखः अवाङ्मुखः, नीचैर्मुखः इति यावत् ।

निःसम्पातविविक्तामिति--निस्सम्पातः सञ्चाररहित्यं तेन विविक्तं विजनम् । 'विविक्तविजनच्छन्ननिःशलाकास्तथा रहः'--इत्यमरः । तटरुह......सैकतामिति--तटे रोहन्ति ये ते तरवः वृक्षाः तेषां छायया समाकीर्णं व्याप्तं अत एव रमणीयं मनोरमं सैकतं बालुकामयतटं यस्याः ताम् ।

प्रसन्नसलिलवाहिनीमिति--प्रसन्नं स्वच्छं निर्मलमिति यावत्, यत् सलिलं जलं तस्य वाहिनीं वहनशीलाम् । समुद्रगामिनीं नदीम्, अवलोकयन् पश्यन् । दण्डकावनवासं दण्डकेषु यो निवासः पुरा कृतो गोदावरीतीरे चिरायोषितं तम् । वैक्लव्यं विकलताम् ।

वनवासिनं जनमिति--वने निवसनशीलं जनमात्मसहचरं सीतारूपम् ।

दुःखैकवासे दुःखस्यैव एकस्य वासो यत्र तस्मिन् दुःखप्रधाने इत्यर्थः ।

किसलयेति--

दिनान्ते किसलयसुकुमारं देव्याः पाणिं आलम्ब्य विविधरतिसखीभिः सङ्कथाभिः चरणगमनवेगात् स्नुतपयसि तटिन्याः सैकते मन्थरस्य चङ्क्रमस्य स्मरामि ।

दिनान्ते दिनावसाने किसलयसुकुमारं किसलयवत् सुकुमारं नवपल्लववत् मृदुलम् । 'पल्लवोऽस्त्री किसलयम्'--इत्यमरः । देव्याः प्रियतमायाः सीतायाः पाणिं हस्तम् । 'पाणिः शमः शयो हस्तः'--इत्यमरमाला । आलम्ब्य स्वकरे गृहीत्वा,

सी—अइ निरनुक्कोस, किं एदिणा संलावट्ठाणेण असरणं दुःखिदं जणं अहिअदरं वाधेसि । (क)

ल—आर्य, अलं शोकेन ।

रा—कथं न शोचामि मन्दभाग्यः ? पश्य पश्य—

पूर्वं वनप्रवासः पश्चाल्लङ्का ततः प्रवासोऽयम् ।
आसाद्य मामधन्यं दुःखाद् दुःखं गता सीता ॥ १३ ॥

---

(क) अयि निरनुक्रोश, किमेतेन संलापस्थानेन अशरणं दुःखितं जनमधिकतरं बाधसे ।

---

विविधरतिसखीभिः विविधाश्च ताः रतिसख्यश्च ताभिः, विविधाः विभिन्नप्रकाराः, रतिः प्रीतिः सम्भोगश्शृङ्गारो वा तत्साहचर्यवतीभिः, संकथाभिः संलापपरम्पराभिः संवादैर्वा । प्रियाकरालम्बः हृद्यवाग्विलासश्च विमनस्कताहेतुत्वेन प्रदर्शितौ । अतः चरणगमनवेगात् चरणस्य चरणयोर्वा गमने यो वेगः जवः तस्मात् स्रुतपयसि स्रुतं पयो जलं यत्र तस्मिन् सनीरे इत्यर्थः, नटिन्याः नद्याः सैकते वालुकामयतटप्रदेशे मन्थरस्य चङ्क्रमस्य शनैश्चङ्क्रमणस्य गतागतस्य स्मरामि । 'अधीगर्थदयेषां कर्मणि' ( २ । ३ । ५२ ) इति कर्मणि षष्ठी । कथासु लीनमनस्कतया जङ्घयोर्वेगवशाच्चरणस्य नीरे पतनं दुर्वारम्, नीरसम्पर्कश्च तीरे परिभ्रमतोः 'किमपि किमपि मन्दं मन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण'—सुस्निग्धयो र्जायापत्योर्गतागतस्य मान्द्यहेतुः । यद्वा चरणगमनवेगात्सैकतं स्रुतपयो जातम्, नद्याः पयःपूराभ्यर्णे सैकते वेगेन चरणनिक्षेपे जाते जलं प्रादुर्भूतम्, सजले च सैकते शनैर्गतिः सीतारामयो रिति व्याख्येयम् । चरणगमनवेगेन प्रादुर्भूतं सलिलं चरणगमनवेगमेव निरुद्धे इति 'कष्टाय क्रमणे' ( ३ ।१ । १४ ) इति ज्ञापकात् सन्निपातलक्षणोविधिरनिमित्तं तद्विघातस्येति प्रायिकमिति यदुक्तं वैयाकरणै-स्तदिहापि सङ्गच्छते इति सर्वमवदातम् ॥ १२ ॥

संलापः मिथोभाषणं तस्य आस्थानं स्वीकरणं तेन । अशरणं शरणरहितम् । 'शरणं गृहरक्षित्रोः'—इत्यमरः ।

पूर्वमिति—पूर्वं वनप्रवासः पश्चात् लङ्का ततः अयं प्रवासः ।
माम् अधन्यं आसाद्य सीता दुःखाद् दुःखं गता ॥

पूर्वं यौवराज्याभिषेकसमये जीवति दशरथे वनप्रवासः दण्डकारण्ये चतुर्दश-वर्षावधिः, पश्चात् वनवासस्य चतुर्दशवार्षिकस्य समाप्तिकाले लङ्का 'दुःखहेतुर-भूत्'—इति शेषः । ततः तदनन्तरं अयं प्रवासः निरवधिर्निरालम्बः, मां अधन्यं

---

१ 'णिरणुक्कोस'—इति णकारयुक्तः पाठो युक्ततरः ।

२ 'संलापास्थानेन'—इति पाठः समीचीनतरः ।

सी—अअउत्त, णिव्वासिदाए असदिसं । (क)

रा—हा ! जनकराजपुत्रि ।

सी—अप्पपुण्णभाइणीए वज्जणीअ ! (ख)

रा—हा ! वनवाससहायिनि ।

सी—अवि एदं ण संपदं । (ग)

रा—हा ! क्व गतासि ?

सी—जहिं मंदभाआ गच्छदि । (घ)

रा—देहि मे प्रतिवचनम् ।

सी—असंभावणीए जणे कीदिसं पडिवअणं । (ङ)

[1]( रामः शोकं नाटयति )

ल—आर्य, ननु विज्ञापयामि—अलं शोकेनेति ।

रा—कथं न शोचामि शोचनीयां वैदेहीम् ?

सी—अअउत्त, मा एवं भण—सोअणीआ वैदेहित्ति । ण खु सो जणो सोअणिज्जो जो एव्वं वल्लहेण सोईअदि । (च)

---

(क) आर्यपुत्र, निर्वासितायाः असदृशम् ।
(ख) अल्पपुण्यभागिन्या वर्जनीय !
(ग) अप्येतन्न साम्प्रतम् ।
(घ) यत्र मन्दभाग्या गच्छति ।
(ङ) असम्भावनीये जने कीदृशं प्रतिवचनम् ?
(च) आर्यपुत्र, मैवं भण—शोचनीया वैदेहीति । न खलु स जनः शोचनीयः, य एवं वल्लभेन शोच्यते ।

---

हतभाग्यं रामं आसाद्य प्राप्य सीता दुःखात् दुःखं गता कष्टात् कष्टतरं प्राप्ता ।

कथम्पुनारामेण स्वयमेव सीतां निर्वास्य इदानीमनुशोच्यते ? लोकापवादभीतेन तेन गृहान्निरस्ता न पुनर्मनस्त इति समाधानम् । रामोऽधन्य इति नात्र सन्देहः सीता ततोऽप्यधन्यतरेति सुव्यक्तम् ॥ १३ ॥

निर्वासिताया असदृशमिति—या स्वयं निर्वासिता दुःखभागिनी च कृता तदर्थमेव शोकानुभवो नोचित इति तात्पर्यम् ।

अल्पपुण्यभागिन्या वर्जनीय ! मयाऽत्रभवान् सेवनीयोऽपि न सेवनीय इति सुव्यक्तं मम सीताया अपल्पपुण्यभाक्त्वम् । वर्जनीयेति सम्बोधने ।

---

१ मूलपुस्तके ‘रा—( शोकं नाटयति )’—इत्येवं पाठः स्वीकृतः ।

रा—वत्स लक्ष्मण, किं शक्यते ज्ञातुं क्व वर्तेत इति ?

सी—दिअसावसाणविणिवारिदपिअसमाअमा विअ चक्कवाई इदो एव्व पवासे[1] वट्टामित्ति। (क)

ल—न शक्यते क्व वर्तेत इति ज्ञातुम्।

रा—उत्सादितं मया चिरकालाविच्छिन्नं रघुकुलम्।

( इति रोदिति )

सी—( सशोकम् ) अदिमत्तं संतवदि अअउत्तो, किं करेमि। साहसादो तिमिददंसणं पमज्जामि[2] अस्सुचअं। ( पदमुत्क्षिप्य ) अहवा जणप्पवादो रक्खिदव्वो। अअउत्तेण जाव न[3] पेक्खामि दाव सोआवेअबलक्कारिदा ण प्पहवामि अप्पाणअस्स। मुणिजणसंपादसमुइदो एसो उद्देसो। अदो जइच्छागदो को वि मं पेक्खिस्सदि। ता एदिणा लदाजालपच्छण्णसुहसंचारेण मग्गेण अस्समं गदुअ कुसलवा संभावइस्सं। (ख)

( नाट्येनावलोकयन्ती निष्क्रान्ता )

---

(क) दिवसावसानविनिवारितसमागमेव चक्रवाकी इहैव प्रवासे[4] वर्तते इति।

(ख) अतिमात्रं सन्तपत्यार्यपुत्रः, किं करोमि। साहसतः स्तिमितदर्शनं प्रमार्जयाम्यश्रुसञ्चयम् ( पदमुत्क्षिप्य ) अथवा जनप्रवादो रक्षितव्यः। आर्यपुत्रेण यावन्न प्रेक्ष्ये तावच्छोकावेगबलात्कारिता न प्रभवाम्यात्मनः। मुनिजनसम्पातसमुचितोऽयमुद्देशः, अतो यदृच्छागतः कोऽपि मां प्रेक्षिष्यते, तदेतेन लताजालप्रच्छन्नसुखसञ्चारेण मार्गेणाश्रमं गत्वा कुशलवौ सम्भावयामि।

---

अप्येतन्न साम्प्रतमिति—दण्डकारण्ये पारस्परिकं साहाय्यमभूत्सीतारामयोः, इदानीं तु तदपि दूरापास्तमित्याशयः।

असम्भावनीये वन्दनमिथोभाषणाद्यवसराभावात्सत्कारानर्हे इत्यर्थः। प्रतिवचनं प्रत्युत्तरम्। नाटयति अभिनयति, रङ्गे स्थितान् सामाजिकान् प्रति शोकातुरमात्मानं दर्शयतीत्यर्थः। वल्लभेन प्रियेण भर्त्रेतियावत्।

---

१ 'प्पवासे'—इति। २ 'प्पमज्जामि'—इति। ३ 'ण'—इति च पाठाः सङ्गततराः। ४ 'इहैव प्रवास एवे'ति मूलपुस्तकस्थः पाठः। नच प्रवासोत्तरस्यैवकारस्य मूलं प्राकृते दृश्यते इति स नादृतः।

( ततः प्रविशति ऋषिः )

**ऋ—आदिष्टोऽस्मि भगवता वाल्मीकिना—वत्स, बादरायण, श्रुतं मया लक्ष्मणसहायो रामभद्रस्तपोवनमिदमनुप्राप्त इति। स कदाचिन्माध्याह्निककार्यसम्पादनव्यग्रानस्मान्मन्यमानो बहिरवस्थितो भवेत्। तस्मात्त्वमेनमुपक्रम्य परिसमाप्तमाध्याह्निककार्यं दर्शनमाकाङ्क्षमाणं मामावेदय--इति। तद्यावदहमपि भगवतो वाल्मीकेरादेशाद्राममेवान्वेषयामि।**

---

दिवसा......चक्रवाकीति—दिवसस्य अवसानेन विनिवारितः समागमः सहावस्थानं यस्याः सा चक्रवाकी चक्रवाकस्य रथाङ्गस्य स्त्री। प्रदोषे समुपस्थिते चक्रवाकश्चक्रवाकी च न सङ्गमं सहावस्थितिञ्च लभेते इति कविसमयः। 'कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः'—इत्यमरः। अतएव—

'परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती'—इति कालिदासः कुमारसम्भवे;

'चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेद्ध्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात् कृशानुः'—इति

मुरारिरनर्घराघवे। अतएव च दिनमणिः 'चक्रवाकयो र्गार्हस्थ्यगर्हाभित्त्वे'न प्रतिपादितो वेङ्कटाध्वरिणा विश्वगुणादर्शे; 'शोकविमोकः कोकलोकस्ये'ति च गीतोऽम्बिकादत्तेन शिवराजविजये।

उत्सादितं विनाशितम्। चिरकालाविच्छिन्नं चिरकालात् अविच्छिन्नं संततम्। सूर्यवंशोऽयं दिलीपे राजनि शान्तप्रायमासीत्, वसिष्ठस्य भगवतः आदेशेन नन्दिनीमुपसेव्य तन्मातुः सुरभेः शापं मोघं कृत्वा सुदक्षिणादिलीपाभ्यां महता यत्नेन स्वसूनो रघोर्मुखमीक्षितमिति कालिदासीयरघुवंशतो ज्ञायते। ततश्च रघोरजः, अजस्यापि दशरथः, तस्यापि रामादयश्चत्वारः सुताः समुत्पन्नाः, रामेण तु सीतां निर्वास्य स्वकुलस्योच्छेदनमेव कृतमिति सत्य एव तस्यानुतापः।

अतिमात्रं अत्यर्थम्। सन्तपति दुःखमनुभवति। साहसतः साहसेनेत्यर्थः, सार्वविभक्तिकस्तसिः। स्तिमितदर्शनं स्तिमितं अस्पष्टं दर्शनं प्रेक्षणं येन तम्, अश्रुसञ्चयं अश्रुनिकरम्, प्रमार्जयामि प्रोञ्छामि प्रोञ्छ्य दूरीकरोमि। पदमुत्क्षिप्य पादमुद्धृत्य, रागोद्रेकस्योदयात्सीता राघवं प्रति गन्तुं प्रवृत्ता प्रथमश्च चरणस्तयोत्थापितः। जनप्रवादः लोकापवादः, परित्यक्ता तपोधना चैवं रागिणी सीता तपोवनेऽप्येवं विचेष्टते इति निन्दा प्रवर्त्तेत साचावश्यं वारयितव्येति।

शोकावेगबलात्कारितेति—शोकस्य शुचायाः आवेगेन उद्रेकेण तीव्रत्वेनेति यावत् बलात्कारिता प्रसभं विवशतां नीता अत्यन्तं शोकातुरा सतीत्यर्थः। न प्रभवामि न समर्थास्मि आत्मनः स्वस्य, आत्मानं नियन्तुं नोत्सहे, अनुरागवशाद्

( परिक्रामति )

ल—( विलोक्य ससम्भ्रमम् ) आर्य, तपोधनोऽयमित एवाभिवर्त्तते।

( रामो[1]ऽश्रूणि प्रमृज्य कृतधैर्यः स्थितः )

ऋ—( निर्वर्ण्य ) अये, लतागुल्मप्रच्छायेऽस्मिन् पुरुषयुगलमिव। अपि नाम लक्ष्मणसहायो रामो भवेत्। ( परिचिन्त्य ) कस्तत्र सन्देहः—

मन्दं वाति समीरणो न परुषा भासो निदाघार्चिषो
न त्रस्यन्ति चरन्त्यशङ्कमधुना मृग्योऽपि सिंहैः सह।

---

रामस्य सन्निधौ गन्तुं तथा बलवन्मनः प्रवर्त्तते यथा तद्वारयितुं नाहमलम्। सम्पातः सम्पतनमागमनमित्यर्थः। मुनिजनसम्पातसमुचितः मुनिवर्गस्य यत्र गमनागमने प्रायेण भवतः, उद्देशः प्रदेशः स्थानमिति यावत्। यदृच्छागतः यदृच्छया आगतः, अकस्मात्समुपेतः। यथाह कालिदासः—

'वसिष्ठधेनुश्च यदृच्छयागता श्रुतप्रभावा ददृशेऽथ नन्दिनी'। इति।

लता……सञ्चारेणेति—लतानां जालं वृन्दं समूहः इति यावत्, तेन प्रच्छन्नः तिरोहितः बहिर्गतानां दृशामगोचरः, अतएव सुखसञ्चारः सुखेन सञ्चारो यस्मिन् सः। सम्भावयामि कुशलवयोः परिपालनार्थमावश्यकं कर्मकलापं सम्पादयामीत्यर्थः।

वल्मीकस्यापत्यं पुमान् वाल्मीकिः तेन। बादरायण, बदरस्यापत्यं बादरिः, बादरेरपत्यं बादरायणः, तत्सम्बोधनम्। एतच्च वाल्मीकेरादेशस्य पुनर्वचनम्। लक्ष्मणसहायः लक्ष्मणद्वितीयः सलक्ष्मण इत्यर्थः। रामभद्रः रामचन्द्रः, मुरारिणा स्वीयेऽनर्घराघवे प्रायेण रामभद्रपदमेवादृतम्। माध्याह्निक……व्यग्रान्—अह्नो-मध्यं मध्याह्नः, मध्याह्ने भवं माध्याह्निकम्, माध्याह्निकं यत् कार्यं तस्य सम्पादने व्यग्राः संलग्नास्तान्। उपक्रम्य उपगम्य। आकांक्षमाणं इच्छन्तम्।

अभिवर्तते समागच्छति। पुरुषयुगलं पुरुषस्य युगलं युग्मं, द्वौ पुरुषावित्यर्थः। मन्दमिति—

समीरणः मन्दं वाति, निदाघार्चिषो भासः न परुषाः, अधुना मृग्यः अपि सिंहैः सह अशङ्कं चरन्ति न त्रस्यन्ति। तदध्यासिता छाया मध्यान्हे अपि गुल्म-निकटं न याति सोऽयं रामाभिधानः हरिः इदं वनं उपागतः ( इति ) सुव्यक्त-मित्यन्वयः।

समीरणः पवनः मन्दं शनैः वाति प्रवहति। निदाघार्चिषः ग्रीष्मे प्रचण्डस्य सूर्यस्य भासः दीप्तयः न परुषाः प्रखराः। अधुना इदानीं मृग्यः हरिण्यः अपि,

---

१ मूलपुस्तके 'रा—अश्रूणि……स्थितः'—इति पाठः।

मध्याह्नेपि न याति गुल्मनिकटं छाया तदध्यासिता
व्यक्तं सोऽयमुपागतो वनमिदं रामाभिधानो हरिः ॥ १४ ॥

न केवलमतिक्रान्तमानुषेण प्रभावेण, आकारेणापि शक्यत एव निश्चेतुम् । ( निर्वर्ण्य )

व्यायामकठिनः प्रांशुः कर्णान्तायतलोचनः ।
व्यूढोरस्को महाबाहुर्व्यक्तं दशरथात्मजः ॥ १५ ॥

तदेनमुपगम्य यथावस्थितमावेदयामि । ( उपागम्य ) राजन्, स्वस्ति ।

रा—अभिवादये ।

ऋ—विजयी भव ।

---

किमु वक्तव्यं हरिणाः इति, सिंहैः सह अशङ्कं निःशङ्कं यथा तथा चरन्ति गच्छन्ति न त्रस्यन्ति विभ्यति । तदध्यासिता तेन अध्यासिता रामेणोपाश्रिता छाया सूर्यप्रिया। 'छाया सूर्यप्रिया कान्तिः प्रतिविम्बमनातपम्'—इत्यमरः । मध्यान्हे अपि गुल्मस्य स्तम्बस्य निकटं न याति गच्छति । 'अप्रकाण्डे स्तम्बगुल्मौ'—इत्यमरः । 'झाड़ी' इति ख्यातस्य समीपं अद्यापि न याति । गुल्मस्य तावच्छायैव लघ्वी, मध्यान्हे पुनर्विशेषेण लाघवं प्रतिपन्ना गुल्मस्याधस्तादेव तिष्ठति । यथाह मुरारिः—

'किरति मिहिरे विश्वद्रीचः करानतिवामनी
स्थलकमठवद्देहच्छाया जनस्य विचेष्टते'— इति ।

मध्यान्हेपि जाते रामनिषेवणाय तत्साहचर्यमपरित्यक्तुकामेव प्रतिभाति । स एष रामस्य प्रभावः । रामाभिधानः रामाख्यः हरिः विष्णुः सः अयं नेतरः कश्चन । इदं वनं उपागतः सम्प्राप्तः इति व्यक्तं स्पष्टम् । नहि कस्यचिदपरस्य तादृशःप्रभावः, तस्माद् विष्णुरेवायं रामव्यपदेशभागिति वैष्णवस्य कवेर्भक्त्युद्रेकोद्गारः ॥१४॥

अतिक्रान्तमानुषेणेति—मानुषान् मानवान् अतिक्रान्तः अतिक्रम्य स्थित इति अतिक्रान्तमानुषः प्रभावः मनुष्येषु दुर्लभः । आकारेण आकृत्या ।

व्यायामेति—व्यायामकठिनः व्यायामेन शारीरिकेण कठिनः कठोरगात्रः, प्रांशुः उन्नतः । 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्गे'—इत्यमरः । कर्णान्तायतलोचनः कर्णयोः श्रवणयोः अन्तौ, तदवधिः आयतौ विस्तृतौ लोचनौ यस्य सः, दीर्घलोचनः। व्यूढोरस्कः व्यूढं विपुलं उरो यस्य स व्यूढोरस्कः। 'उरः प्रभृतिभ्यः कप्' (५।४।१५१) इति कप्प्रत्ययः। 'व्यूढं विपुलं भद्रं स्फारं समं वसिष्ठं च'—इति यादवः। महाबाहुः महान् बाहुः यस्य स महाभुजः। व्यक्तं नूनं दशरथात्मजः एष दशरथस्य सूनुः, राम एवेत्यर्थः ॥ १५ ॥

उद्वीक्षमाणः प्रतीक्षमाणः । अतिक्रान्तः व्यतिगतः । प्रविश्येति—

रा—किमागमनप्रयोजनमार्यस्य ?

ऋ—परिसमाप्तसकलकर्मा भगवान् वाल्मीकिर्महाराजस्यागमनमुद्वीक्षमाणस्तिष्ठति।

रा—( विलोक्य ) अये, अतिक्रान्तो मध्यान्हः। तथाहि—

प्रविश्य तरुमूलानि नीत्वा मध्यन्दिनातपम्।
अध्वनीना इवच्छाया निर्गच्छन्ति शनैः शनैः॥ १६॥

अपि च—

मध्याह्नार्कमयूखतापमधिकं तोयावगाहादयं
नीत्वा वारिकणार्द्रकर्णपवनैराह्लाद्यमानाननः।

---

तरुमूलानि प्रविश्य मध्यन्दिनातपं नीत्वा छायाः अध्वनीनाः इव शनैः शनैः निर्गच्छन्ति।

तरुमूलानि तरूणामधः प्रदेशाः तान् निविश्य, मध्यान्हे छायायास्तरूणामधः पर्यवस्थानं स्वाभाविकम्। मध्यन्दिनातपं मध्यान्हकालिकं द्योतम्। 'प्रकाशो द्योत आतपः'—इत्यमरः। नीत्वा यापयित्वा। छायाः यथा अध्वनीनाः पान्थाः शनैः शनैः निर्गच्छन्ति तरुमूलेभ्योऽपसरन्ति। मध्यान्हे सूर्यतापोत्तप्ताः अध्वन्याः यथा तरुमूलानि निषेवन्ते, मध्यान्होत्तरञ्च मन्दातपे रश्मिमालिनि जाते यात्रायै पुनः सन्नह्यन्ति तद्वदेव छाया अपीति भावः। 'अध्वनीनोऽध्वगोऽध्वन्यः पान्थः पथिक इत्यपि'—इत्यमरः।

अत्र मुरारिः—

मध्ये व्योम क्रीडयित्वा मयूखान् भानोर्बिम्बे लम्बमाने क्रमेण।
स्वैरं स्वैरं मूलतः पादपानां पश्यच्छायाः कश्चिदाकर्षतीव॥ इति॥ १६॥

मध्याह्नेति—करघातझाङ्कृतिसरित्कल्लोलचक्रः अयं करी वारिकणार्द्रकर्णपवनैः आह्लाद्यमाननः मध्याह्नार्कमयूखतापं अधिकं तोयावगाहात् नीत्वा वक्त्रःप्रगुण्नैः जलैः आक्रान्तं कूलं अधुना मन्दं मन्दं उपैति।

कर......चक्रः इति—करस्य शुण्डादण्डस्य घातैः प्रहारैः या झाङ्कृतिः झां झां इत्येवंरूपो नादविशेषः तेन सहितं सरितो नद्याः कल्लोलानां महोर्म्मीणां चक्रं मण्डलं यस्य स शुण्डाप्रहारैर्येन गोमतीतरङ्गाः शब्दायमानाः कृता इत्याशयः। सोऽयं करी हस्ती, वारिकणार्द्रकर्णपवनैः वारिणः कणैः शीकरैः आर्द्रौ यौ कर्णौ तयोः पवनैः वातैः जलार्द्रश्रवणव्यजनयोरुद्धूननेन सञ्जातैः वायुभिरित्यर्थः, आह्लाद्यमाननः आह्लाद्यमानं आननं यस्य स, प्रसन्नवदन इत्यर्थः, मध्याह्नार्कमयूखतापं मध्याह्नस्य यः अर्कः सूर्यः तस्य मयूखानां किरणानां तापं ( उद्दामद्युमणिद्युतिव्यतिकरमिति मुरारिः )। 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे दिवस्पतौ'—इति

मन्दं मन्दमुपैति कूलमधुना वक्षःप्रणुन्नैर्जलै-
राक्रान्तं करघातझाङ्कृतिसरित्कल्लोलचक्रः करी ॥ १७ ॥

( इति निष्क्रान्ताः सर्वे )

तृतीयोऽङ्कः ।

---

मेदिनीकारः । 'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः'—इत्यमरश्च । अधिकं असह्यं यद्वा भूयांसमंशम्, तोयावगाहात् जलस्यावगाहनेन हेतुना नीत्वा यापयित्वा, वक्षःप्रणुन्नैः वक्षसा उरसा प्रकर्षेण नुन्नैः विक्षोभं प्रापितैः जलैः नदीनीरैः आक्रान्तं व्याप्तं कूलं तीरं अधुना मन्दं मन्दं शनैः शनैः उपैति आगच्छति ।

मध्याह्नवेलावर्णनायां कैश्चिद् मृगाः, अपरैर्महिषाः, अन्यैः शिखिनः, इतरैश्च सारसाः समादृताः दिङ्नागेन तु नागः इत्यहो नामसाम्यमाहात्म्यम् ।

इति श्रीपण्डितबाशीरामतनूजस्य बज़ीराबाद–पत्तनवास्तव्यस्य
जयचन्द्रस्य कृतौ सञ्जीवन्यां कुन्दमालाटीकायां तृतीयो-
ऽङ्कः पर्यवसितः । शुभं भवतु ।

# अथ चतुर्थोऽङ्कः।

( ततः प्रविशति तापसीद्वयम् )

प्रथमा—हला, जरएणवेदि, रामायणसङ्गीतश्रणिमित्तं वंमीइतपोवणं संपत्ताए तिलुत्तमाए अहं एव्वं भणिदा—अहं पहावणिम्मिदेन सीदारूवेण रामस्स दंसणपहं ओअरिअ रामो सीदाए उवरि साणुकंपो ण वेत्ति जाणिदुं णु इच्छामि, ता तुमं रामं अएणेसहि—त्ति। ता दंसेदु पियसही रामस्स विस्समत्थाणम्। (क)

यज्ञवेदिः—हला, वेदवदि, तिलुत्तमाए जदा एसो आलावो पवुत्तो तदा आसएणगुम्मलदागहणपच्छएणट्ठिदेण रामवयस्सेण अंअहसिएण सव्वं आअरिणदं। (ख)

वेदवती—अच्छाइदं खु आअरिदं, जइ गहिदसंकेअस्स तस्स अग्गदो तिलुत्तमा सीदाए चरिदाइं अणुवट्टिसदित्ति तदो विपरीदो उवहासो भवे, ता इमादो पिअसहिं तिलुत्तमं णिवारेमि। (ग)

य—सहि, वेदवदि, सीदा दाणिं कहिं ? (घ)

---

[क] हला, यज्ञवेदि, रामायणसङ्गीतकनिमित्तं वाल्मीकितपोवनं संप्राप्तया तिलोत्तमयाहमेवं भणिता—अहं प्रभावनिर्मितेन सीतारूपेण रामस्य दर्शनपथमवतीर्य रामः सीताया उपरि सानुकम्पो नवेति ज्ञातुं नु इच्छामि, तत्त्वं राममन्वेषय—इति। तद्दर्शयतु प्रियसखी रामस्य विश्रमस्थानम्।

[ख] हला, वेदवति, तिलोत्तमया यदैष आलापः प्रवृत्तस्तदासन्नगुल्मलतागहनप्रच्छन्नस्थितेन रामवयस्येनायेहसितेन सर्वमाकर्णितम्।

(ग) अत्याहितं खलु आचरितम्, यदि गृहीतसङ्केतस्य तस्याग्रतस्तिलोत्तमा सीतायाश्चरितानि अनुवर्त्तिष्यत इति ततो विपरीत उपहासो भवेत्। तदस्मात् प्रियसखीं तिलोत्तमां निवारयामि।

(घ) सखि, वेदवति, सीतेदानीं कुत्र ?

---

सङ्गीतकं 'नृत्यं वाद्यञ्च गीतञ्च त्रयं सङ्गीतमुच्यते। तिलोत्तमा स्वर्वेश्या यस्याः प्राप्तये सुन्दोपसुन्दयोः परस्परवधः पुराणादौ वर्णितः। दर्शनपथमवतीर्य दृष्टिगोचरं गत्वा। सानुकम्पः सदयः।

वे---सुणाहि अज्ज सत्तमे दिवहे संपादिदाहि तपोवणवासिणीहि विण्णविदो भअवं वंमीई—एसा णूणं अस्समदीहिआ पदुमापचयादिसु अत्तणो उपभोएसु दाणिं महाराअस्स सण्णिहाणेण परपुरुसणअणपरिक्खित्ता ण सक्का इत्थिआजणेण ओगाहिदुंति । तदा भअवदा वंमीइणा णिज्झाणणिच्चलणअणेण मुहुत्तं णिज्झाइअ भणिदं—एदस्सिं दीहिआए वट्टमाणो इत्थिआजणो पुरुसणअणाणं अगोअरो भविस्सदित्ति । तदप्पउदि सीदा रामस्स दंसणपहं परिहरंती दीहिआतीरे सअलं दिवअं अदिवाहेदि । ( क )

य---किं जाणन्ति कुसलवा रामस्स अत्तणो अ संवंधं ? ( ख )

वे---अत्तणो वालभावेण मुणिजणस्स अ संसग्गेण मादरं वि णामदो ण जाणन्ति, किं उण दीहप्पवासविच्छिण्णं रामस्स उत्तन्तम् [ ग ]

---

(क) शृणु, अद्य सप्तमे दिवसे संपातिताभिस्तपोवनवासिनीभिर्विज्ञापितो भगवान् वाल्मीकिः—एषा नूनमाश्रमदीर्घिका पद्मापचयादिषु आत्मन उपभोगेषु इदानीं महाराजस्य सन्निधानेन परपुरुषनयनपरिक्षिप्ता न शक्या स्त्रीजनेनावगाहितुम्—इति । तदा भगवता वाल्मीकिना निध्याननिश्चलनयनेन मुहूर्त्तं निध्याय भणितम्—एतस्यां दीर्घिकायां वर्तमानः स्त्रीजनः पुरुषनयनानामगोचरो भविष्यति—इति । ततः प्रभृति सीता रामस्य दर्शनपथं परिहरन्ती दीर्घिकातीरे सकलं दिवसमतिवाहयति ।

(ख) किं जानीतः कुशलवौ रामस्यात्मनश्च सम्बन्धम् ?

(ग) आत्मनो वालभावेन मुनिजनस्य च संसर्गेण मातरमपि नामतो न जानीतः, किमुत दीर्घप्रवासविच्छिन्नं रामस्य वृत्तान्तम् ।

---

प्रवृत्तः--इति, अस्यालापस्य प्रवृत्तिमूलं यदि तिलोत्तमा तदा 'प्रवर्त्तितः' इति प्रयोग उचितः, एवं स्थिते तु 'तिलोत्तमया ( सह ) यदैष आलापः ( भवत्याः ) प्रवृत्तः'--इति वाक्यं कल्पनीयम् । आसन्न······स्थितेन—इति, आसन्नं यद् गुल्मानां लतानां च गहनं वनं तत्र प्रच्छन्नश्च तिरोभूतश्च स्थितश्च निषण्णश्च तेन । रामवयस्येन रामस्य सुहृदा विदूषिकेन नर्मसचिवेन । आर्यहसितेन पूज्येन हसितसञ्ज्ञकेन ब्राह्मणेन । आकर्णितं श्रुतम् । अत्याहितं महानर्थः । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च'—इत्यमरः । आचरितं कृतम् । गृहीतसङ्केतस्य गृहीतः सङ्केतो येन तस्य पूर्वमेव विज्ञापितस्येत्यर्थः ।

य—किं जाणासि रामो एत्थ तपोवणं पविसदित्ति ? [ क ]

वे—कुदो तस्स आअमो ? [ ख ]

य—गच्छ तुमं तिलुत्तमाए सआसं, अहं अ सीदाए पस्सपरिवट्टिणी होमि। [ ग ]

( इति निष्क्रान्ते )

( प्रवेशकः )

---

(क) किं जानासि रामः अत्र तपोवनं प्राविशदिति ?

(ख) कुतस्तस्यागमः ?

(ग) गच्छ त्वं तिलोत्तमासकाशम्, अहं च सीतायाः पार्श्वपरिवर्तिनी भवामि।

---

अनुवर्त्तिष्यते अनुकरिष्यति। 'न वृद्भ्यश्चतुर्भ्यः' ( ७।२।५६ ) इतीडागम आत्मनेपदे। परस्मैपदे तु अनुवर्त्स्यति।

संपातिताभिः सम्प्रेषिताभिः, संपतिताभिरिति पाठे तु समागताभिरिति व्याख्येयम्।

आश्रमदीर्घिका आश्रमसरसी। सन्निधानेन समीपावस्थित्या। परपुरुषनयनपरिक्षिप्ता—परे अभ्यागताः अपरिचिताश्च ते पुरुषाश्च तेषां नयनैः परिक्षिप्ता स्वविषयीकृता दृष्टा सतीत्यर्थः। अवगाहितुं स्नातुम्। निध्यानं नितरां ध्यानम्। अगोचरः अविषयः। परिहरन्ती परित्यजन्ती। सकलं सम्पूर्णम्। दिवसं दिनम्। अतिवाहयति यापयति।

संसर्गेण सङ्गत्या।

आगमः आगमनम्।

सकाशं समीपम्।

अद्यापि रामस्य अश्वमेधयागो न प्रवृत्तः, तदर्थञ्च नैमिशारण्ये गतास्तपोधना नाद्यापि स्वमाश्रमं प्रति प्रतिनिवृत्ताः, तस्मात्—अद्य सप्तमे दिवसे सम्पातिताभिस्तपोवनवासिनीभिः—इत्येतस्य नायमर्थः नैमिशारण्यात् जाह्नवीतीरस्थं वाल्मीक्याश्रमं प्रति प्रेषिताभिः प्राप्ताभिर्वा, अपि तु जाह्नवीतीरस्थाश्रमाद् गोमतीतीरस्थाश्रमं प्रति प्रेषिताभिर्वाल्मीकिना यद्वा सम्प्राप्ताभिर्वाल्मीकिप्रमुखेन मुनिनिकरेण सार्धमित्यर्थः स्वीकर्त्तव्यः, अद्यापि सीता गोमतीतीराश्रमवर्तिनीति विज्ञेयम्। रामेणामन्त्रितस्य भगवतो वाल्मीकेराश्रमसदृशएवाश्रमो निर्मापितः शिल्पिभिश्चेत्तदा परिसरसाम्याद् भवत्येव विरोधपरिहारः। भागीरथीविरहस्तु दुर्वारः।

( ततः प्रविशत्युत्तरीयकृतप्रावरणा सीता यज्ञवती च )

य—सहि, वैदेहि, केण तुह उवदिट्ठं अपुव्वं उत्तरीअजुअलधारणं ? ( क )

सी—अच्चन्तसीअलेण तरङ्गवाहिणा दीहेण दीहिआमारुदेण। (ख)

य—सहि, पवासविरुद्धं खु एदं सारदचंदकिरणरासिपरिपंडुरं सुरहिवहुलामोदसमारद्धमहुअरउलसंगीदमणुहरं एदं पावरणं। ( ग )

सी—सहि, जदा अहं महाराअसासणेण वणप्पवासे परिच्चत्ता चित्तऊटं परिच्चइअ दक्खिणपहं पत्थिदा तदा चिरणिवाससमुप्पण्णसहिसिणेहाए चिन्ताउलाए वणदेवदाए मायावईए सुमरणणिमित्तं चंदधवलं वासिदसुअंधं अत्तणो दिव्वं उत्तरीअअं मम पणीदं। तं अंअउत्तस्स मम वि हत्थे अच्चन्तसहीभूदं चिरदुःखसहायंत्ति एत्थ अत्ताइं साअरं धारिदं। ( इति रोदिति ) ( घ )

य—सहि, मा रोदी, णहि एसो तपोवणवासो वणवासोत्ति पुच्चिअदि। ( ङ )

---

[क] सखि, वैदेहि, केन तवोपदिष्टमपूर्वमुत्तरीययुगलधारणम् ?

[ख] अत्यन्तशीतलेन तरङ्गवाहिणा दीर्घेण दीर्घिकामारुतेन।

[ग] सखि, प्रवासविरुद्धं खल्वेतच्छारदचन्द्रकिरणराशिपरिपाण्डुरं सुरभिवहुलामोदसमारब्धमधुकरकुलसङ्गीतमनोहरमेतत्प्रावरणम्।

[घ] सखि यदाहं महाराजशासनेन वनप्रवासे परित्यक्ता चित्रकूटं परित्यज्य दक्षिणापथं प्रस्थिता तदा चिरनिवाससमुत्पन्नसखीस्नेहया चिन्ताकुलया वनदेवतया मायावत्या स्मरणनिमित्तं चन्द्रधवलं वासितसुगन्धमात्मनो दिव्यमुत्तरीयकं मम प्रणीतम्। तदार्यपुत्रस्य ममापि हस्तेऽत्यन्तसखीभूतं चिरदुःखसहायमिति अत्रात्मना सादरं धारितम्।

[ङ] सखि, मा रोदीः, नह्येष तपोवनवासो वनवास इति प्रोच्यते।

---

उत्तरीयकृतप्रावरणेति—उत्तरीयं संव्यानं, उत्तरास्मिन् देहभागे भवमुपरिवस्त्रम्। 'द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा। संव्यानमुत्तरीयञ्च'—इत्यमरः।

सी—कहं ण रोइस्सं, कहं एदं तपोवणं आअदो अअउत्तोत्ति दिउणं विद्धारं आस सअणं पत्थरेमि। एआइणी दीहणीसासेहिं रत्तिंदिवं अदिवाहेमि। ता बलियं खु आवेअकारणं। (क)

य—आलक्खणिआइ एदाणि कदणाणि। तुमं एतस्सिं दीहिआतीरविहंगममिहुणविब्भमं अवलोअअन्ती अत्ताणं विणोदेहि। अहं वि अत्तणो णिओअं अणुचिट्ठामि। (परिक्रामति) (ख)

सी—(दीर्घिकामालोक्य) अइधण्णं खु एदं राअहंसमिहुणं एवं अणासादिअ विरहं समाअमसुहं अणुहोदित्ति णत्थि दंपईणं मम विरहसमो उपदेसणिउणो उपज्झायो, जेण पक्खिणो वि अण्णोण्णहिअअग्गहणसमत्थललिअमहुरा चाडुप्पओअं पत्थावयन्ति। (ग)

य—(निर्वर्ण्य) जह एसो ससंभमतक्खणविमुत्तासणो परिग्गहअंसदेससमुक्खित्तवक्कलो सुअसंअमणपाउधो विंमयोफुल्ललोअणो सव्वो जेव (एव्व) मुणिअणो एअमुखओ अपसरिदो तह जाणामि संपत्तेण महाराएण होदंवंति। (घ)

इति निष्क्रान्ता

---

[क] कथं न रोदिष्यामि ? कथमेतत्तपोवनमागत आर्यपुत्र इति द्विगुण............धारयामि। एकाकिनी दीर्घनिःश्वासैरात्रिन्दिवमतिवाहयामि। तद्बलवत् खलु आवेगकारणम्।

[ख] आलक्षणीयानि एतानि कदनानि। त्वमेतस्मिन् दीर्घिकातीरे विहङ्गममिथुनविभ्रममवलोकयन्ती आत्मानं विनोदय, अहमपि आत्मनो नियोगमनुतिष्ठामि।

[ग] अतिधन्यं खल्वेतद्राजहंसमिथुनमेवमनासादितविरहं समागमसुखमनुभवतीति नास्ति दम्पत्योर्मम विरहसम उपदेशनिपुण उपाध्यायः, येन पक्षिणोपि अन्योन्यहृदयग्रहणसमर्थललितमधुराश्चाटुप्रयोगं प्रस्थापयन्ति।

[घ] यथैष ससम्भ्रमतत्क्षणविमुक्तासनः परिग्रहांसदेशसमुत्क्षिप्तवल्कलः......................विस्मयोत्फुल्ललोचनः सर्व एव मुनिजनः एकमुखकः अपसृतस्तथा जानामि सम्प्राप्तेन महाराजेन भवितव्यमिति।

---

तेन कृतं प्रकृष्ट मावरणं आच्छादनं यया सा, द्विपट्टकेन संवृतोत्तरदेहभागेत्यर्थः। अपूर्वमद्भुतम्। यद्यपि सीताया दुकूलयुगलं विशिष्टं तथापि तत्परिधानप्रकारो-

ऽप्यद्भुत इत्यपूर्वपदेनेह द्योत्यते । वस्तुतस्तु सुन्दरीणां सकलमपि वस्तुजातं मण्डनायते, यथोक्तं कालिदासेन—

'किमिव हि मधुराणां मण्डनं नाकृतीना'मिति ।

तरङ्गवाहिना तरङ्गेभ्यो वहनशीलेन, गोमतीदिशातः प्रवहणात् तरङ्गैः सम्पृक्तेनेत्यर्थः । दीर्घेण दीर्घकालं यावत्प्रवहता, स्वल्पकालाय शैत्यं सोढुं समर्थाया अपि सीतायाश्चिराय तत्सहनेऽसमर्थता तस्मात्तया उत्तरीयद्वयं धारितमित्याशयः । शीकरनिकरभरिते वाते वहति शैत्यानुभवः सर्वसाधारणः । दीर्घिका मारुतेन, दीर्घिका सरसी तस्या दिशः समुद्भूतेन वायुना ।

प्रवासविरुद्धमिति—'प्रवासे मलिना कृशे'ति वचनात् । शारदः......परिपाण्डुरमिति—शरदि भवः शारदः शरत्कालिकः, यश्चन्द्रः तस्य यः किरणानां राशिः समूहः, तद्वत् पाण्डुरं श्वेतम्, शारदपार्वणशर्वरीश्वरज्योत्स्नाधवलमित्यर्थः ।

सुरभि.........मनोहरम्—सुरभिः सुगन्धिः बहुलः प्रचुरश्च य आमोदः । 'आमोदो गन्धहर्षयोः'—इति, 'सुरभिर्घ्राणतर्पणः । इष्टगन्धः सुगन्धिः स्यात्,—इति चामरः । तेन निमित्तेन समारब्धं मधुकरकुलेन भ्रमरवृन्देन यत् सङ्गीतं तेन मनोहरम् । परिमललोलुपालिमालागुञ्जितमञ्जुलमिति भावः ।

महाराजशासनेन, महाराजोदशरथस्तस्यादेशेन । चित्रकूटं प्रयागसमीपवर्तिनं तदाख्यं गिरिम् । दक्षिणापथम्—भारतवर्षीयं दक्षिणं भागम् । प्रस्थिता गन्तुं प्रवृत्ता । स्मरणनिमित्तं स्मृतिचिन्हं, वसनं दृष्ट्वा तस्य दातुः स्मरणं भवत्येव । वासितसुगन्धमनुप्रवेशितः शोभनो गन्धो यस्मिन् तत् । प्रणीतं प्रापितं प्रदत्तमिति यावत् । अत्यन्तसखीभूतं चिराय सहवासेन सख्यतां गतम् । आत्मना मया स्वयमेवेत्यर्थः ।

न हि......प्रोच्यते—पूर्वमेव दशरथशासनेन चतुर्दशवार्षिकः प्रवासोऽनुभूतः, सम्प्रति तु रामशासनेन निरवधिर्निरालम्बश्च प्रवासोऽनुभूयते इति सीताया रोदनं स्वाभाविकम् । परं तपोवने वाल्मीक्याश्रमे निर्भयं विचरन्त्या नैष भवत्या वनवासत्वेन गणनीय इति यज्ञवत्याः सीताश्वासनप्रकारः ।

रात्रिन्दिवं दिवारात्रम् । अतिवाहयामि यापयामि । आवेगकारणं आवेगस्य मानसविक्षोभस्य कारणं हेतुः ।

आलक्षितव्यानि अनुभवितव्यानि । कदनानि अनर्थजातानि । तथाच कालिदासः—

'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' ॥ इति ।

विहङ्गममिथुनविभ्रममिति—विहङ्गमाः पक्षिणः कलहंसचक्रवाकादयो दीर्घिका-

[ ततः प्रविशति रामः सचिन्तः कण्वश्च ]

**कण्वः**—आदिष्टोऽस्मि भगवता वाल्मीकिना कण्व, कण्व, दाशरथिं नैमिशारण्यरामणीयकदर्शनेन विनोदय—इति । एष पुनश्चिन्तापराधीनत्वात्पुरोगामिनमपि मां नावगच्छति । तथाहि—

स्खलति मुहुरयं समेपि मार्गे
निभृतगतिः प्रविलम्बते विदूरात् ।
अवनतवदनो नितान्तरम्ये
नच नयने निदधाति काननेऽस्मिन् ॥ १ ॥

[ उपसृत्य ] भो राजन् !

---

तटवर्तिनः, तेषां यानि मिथुनानि द्वन्द्वानि स्त्रीपुंसयुग्मकानीति यावत् । 'स्त्रीपुंसौ मिथुनं द्वन्द्वम्'—इत्यमरः, मिथुनं न द्वयो राशिभेदे स्त्रीपुंसयुग्मके'—इति च मेदिनी । तेषां यो विभ्रमः हावः, रतिचेष्टितं तम् । विनोदय चेतः प्रसन्नं कुरु । नियोगः कर्म, कर्त्तव्यजातम् । अनासादितविरहम्—अनासादितः अप्राप्तः विरहः परस्परवियोगो येन तत्, अननुभूतविरहक्लेशमित्यर्थः । उपदेशनिपुणः उपदेशे चतुरः । उपाध्यायः शिक्षकः । अन्योन्य······मधुराः—अन्योन्यस्य हृदयग्रहणे समर्थाः अतएव ललिताः सुन्दराः मधुराः प्रियाश्च ये ते । चाटुप्रयोगं चाटुवचनं चाटुकारं वा । प्रस्थापयन्ति प्रस्तुवन्ति ।

ससम्भ्रमतत्क्षणविमुक्तासनः—ससम्भ्रमं सत्वरं तत्क्षणे तस्मिन्नेव क्षणे राजदर्शनसमकालमेव विमुक्तं परित्यक्तं आसनं येन स । परिग्रह······वल्कलः—परिग्रहाणां पत्नीनां । 'पत्नी परिजनादानमूलशापाः परिग्रहाः'—इत्यमरः । अंसदेशे स्कन्धे । 'स्कन्धो भुजशिरोंऽसो ऽस्त्री' इत्यमरः । समुत्क्षिप्तवल्कलः परिधापितं वल्कलं वल्कं वृक्षत्वक् येन सः । राजगौरवान् मुनिपत्नीनामंसदेशे वल्कपरिधानम् । विस्मयोत्फुल्ललोचनः विस्मयेन आश्चर्येण उत्फुल्लानि विशदानि लोचनानि यस्य स । एकमुखकः सर्वतो व्यावृत्य एकामेव दिशमभिमुखीभूतः सन् । अपसृतः प्रचलितः [ स्वागतविधये ]।

रामः सचिन्तः सीताविरहात्, कण्वोऽपि सचिन्तः रामदशाव्यतिकरात् ।

दाशरथिं दशरथस्यापत्यं पुमान् दाशरथिस्तम्, राममित्यर्थः । रामणीयकं रमणीयस्य भावो रामणीयकं मनोहरत्वम् । पुरोगामिनं पुरतोयायिनम् । अवगच्छति जानाति । सीताविरहव्यथातिभूमिमिता रामस्य, अश्वमेधक्रत्वाहरणावसरे पत्नीविरहो विशेषेण दुःखाकरोरामस्य ।

स्खलतीति—समेऽपि मार्गे अयं मुहुः स्खलति, विभ्रतगतिः विदूरात्प्रविलम्बते । नितान्तरम्ये अपि अस्मिन् कानने अवनतवदनः न च नयने निदधाति । समे अपि सरले मार्गे पथि अयं रामः मुहुः पुनः पुनः स्खलति पादप्रतिष्ठा-

रा—हन्त, वयस्य, तापसविरुद्धमामन्त्रणम् । अथवा वयसः परि-
णामेनेदमपराद्धं न भगवता ।

अहं रामस्तवाभूवं त्वं मे कण्वश्च शैशवे ।
यूयमार्या वयश्चाद्य राजानो वयसा कृताः ॥ २ ॥

क—अहो धीरोदात्तोऽयमुपालम्भः ।

रा—उच्यतां यद्विवक्षितम् ।

क—सुरभिकुसुमगन्धैर्वासिताशामुखानां
फलभरनमितानां पादपानां सहस्रैः ।

---

ऽलाभे पतनोन्मुखो भवति । निभृतगतिः मन्थरगतिः सन् विदूरात् बहुदूरं विलम्बते पश्चाद्वर्ती भवति । नितान्तरम्ये परममनोहरे अस्मिन् कानने नैमिशाख्ये अरण्ये अवनतवदनः सन् अधोमुखः अधोदृष्टिश्च गम्यते, नयने नेत्रे न निदधाति स्थापयति, काननरामणीयके दृष्टिं न व्यापारयतीति भावः ॥ १ ॥

उपसृत्य 'राममि'ति शेषः, रामस्य समीपं गत्वा ।

हन्तेति वाक्यारम्भे । 'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः'—इत्यमरः वयस्य सखे, तापसस्य कण्वस्य बालमित्रस्य सम्बोधनम् । तापसविरुद्धमामन्त्रणमिति—राजन्निति यत्सम्बोधनं रामस्य कण्वप्रयुक्तं तद्बालमित्रस्य कण्वस्य न शोभते विशेषेण तु तपोधनस्य, तपोधना राज्ञामपि सत्क्रियाभाजनानि । वयसः आयुषः, परिणामेन परिपाकेन, हायनैः सहैव शैशवे व्यतिगते यौवनमध्येन च सम्प्राप्तेनेत्यर्थः । अवस्थाभेदेन शैशवोचितं प्रेम सत्क्रियायां परिणतमिति भावः । एतदेव विश्लिष्य प्रतिपादयति अहमिति—

शैशवे अहं तव रामः अभूवम्, त्वं च मे कण्वः । अद्य वयसा यूयं आर्याः वयं च राजानः कृताः इति योजना ।

शैशवे बाल्ये अहं तव रामः रामपदेन सम्बोध्यः अभूवम्, अभवम्, आसम् । त्वं च मे मम कण्वः 'अभूरि'ति शेषः । कण्वव्यपदेशभागासीरित्यर्थः । अद्य वयसा आयुषा यूयं भवन्तः । सम्मानसूचकं बहुवचनम् । आर्याः पूजनीयाः सत्करणीया वा कृताः । वयं च, अहमित्यर्थः । राजपदसम्मानसूचकं बहुवचनम् । लेखकाः सम्पादकाः राजानश्च बहुवचनान्तपदव्यपदेशभाजः आंगलभाषायामपि । राजानः कृताः राजपदेन व्यपदेष्टुमुचिता विहिताः ॥ २ ॥

धीरोदात्तः—धीरश्च उदात्तश्च । धीरः धैर्यान्वितः । 'धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे, इति कोषः । उदात्तः हृद्यः । 'उदात्तो दातृमहतोर्हृद्ये च स्वरभिद्यपि'--इतिहैमः । उपालम्भः परिभाषणम् ।

उच्यतां कथ्यताम् । विवक्षितं वक्तुमभीष्टम् । सुरभीति—सुरभि······

विरचितपरिवेषश्यामलोपान्तरेखो
रमयति हृदयं ते हन्त कच्चिद्वनान्तः ॥ ३ ॥

रा—बहुमाननिरन्तरीकृतमानसं मां तपोवनमिदं रमयति न रमयतीति वचनावकाश एव नास्ति । पश्य—

दावाग्निं क्रतुहोमपावकधिया यूपास्थया पादपान्
अव्यक्तं मुनिगीतसामगतया भक्त्या शकुन्तस्वनम् ।

---

मुखानां फल···सहस्रैः विरचित···रेखः वनान्तः, हन्त, कच्चित् ते हृदयं रमयति ?

सुरभिः मनोज्ञः । 'सुरभिः स्यान्मनोज्ञेऽपि'—इति विश्वः । कुसुमविशेषणं गन्धविशेषणं वा । सुरभीणि यानि कुसुमानि तेषां गन्धैः, सुरभयो वा ये कुसुमानां गन्धास्तैः । कुसुमानि पुष्पाणि तेषां गन्धैः आमोदैः । 'गन्धः सम्बन्धलेशयोः । गन्धकामोदगर्वेषु'—इति हैमः । वासिताशामुखानाम्—वासितानि सुरभितानि आशानां दिशां मुखानि सन्निहिताः प्रदेशाः यैस्तेषाम् । 'दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः'—इत्यमरः । फलभरनमितानां फलभरेण फलानां भरेण नमितानाम् भरः भारः बाहुल्यं तेन नम्राणाम् । तथा चोक्तम्—

'भवन्ति नम्रास्तरवः फलोद्गमै रि'ति ।

पादपानां तरूणाम् । सहस्रैः दशगुणितैः शतैः, वस्तुतस्तु अनन्तैः, नहि शक्यते पादपानामियत्तावधारणम् । 'अनन्ता वै शतम्' अनन्ता वै सहस्रम्'—इति च शतपथब्राह्मणे । विरचित······रेखः—विरचितेन परिवेषेण श्यामला उपान्ते रेखा यस्य स । परिवेषः परिधिः । 'परिवेषः स्यात्परिधौ परिवेषणे'—इति रुद्रः । सर्वतोगतं वृत्ताकारं मण्डलमिति यावत् तेन । श्यामला कृष्णवर्णा । उपान्ते अन्तस्य समीपे रेखा राजिर्यस्य स । कस्मिंश्चिदायते वनस्थले स्थितानां परितोवस्थिता स्तरवो मण्डलाकारेण वर्तमानाः श्यामा विप्रकृष्टतया प्रतीयन्ते । पुरोगतानां च पादपानामनालक्षितपार्थक्यानां वर्तुलाकारा पङ्क्तिर्दृश्यते । तादृशः वनान्तः वनप्रदेशः ते तव हृदयं रमयति रञ्जयति कच्चित् ? 'कच्चित्कामप्रवदने'—इत्यमरः, इष्टप्रश्ने इति यावत् ॥ ३ ॥

बहुमानेन निरन्तरीकृतं मानसं यस्य तम् । निर्गतं अन्तरं अवकाशं यस्मात् तत् । अनिरन्तरं निरन्तरं कृतमिति निरन्तरीकृतम् । च्विप्रयोगः । अनिरन्तरं सावकाशं निरन्तरं निरन्तरीकृतञ्च पुनर्निरवकाशम् । मानसं मनः । बहुमानेन भरिते परिव्याप्ते च मनसि कुतोऽवकाशो भावान्तरस्येति तात्पर्यम् । वचनावकाशः कथनस्यावसरः ।

बहुमानस्य स्वरूपमेव प्रतिपादयति दावेति—नैमिशे दावाग्निं क्रतुहोमपावकधिया, पादपान् यूपास्थया, अव्यक्तं शकुन्तस्वनं मुनिगीतसामगतया भक्त्या, वन्यान् हरिणान् तापसगौरवेण सम्भावयन् सोहं यन्त्रणया कथं कथमपि पादौ भुवि न्यस्यामि ।

वन्यांस्तापसगौरवेण हरिणान् सम्भावयन्नैमिशे
सोऽहं यन्त्रणया कथं कथमपि न्यस्यामि पादौ भुवि ॥४॥

क--युक्तरूपोऽयं धर्मैकपरायणस्य महाराजस्य सकलजगदभ्युदयनिःश्रेयसहेतोर्निष्प्रत्यूहतपःसिद्धिक्षेत्रे पूर्वराजर्षिवंशाध्यासिते नैमिशे बहुमानः।

---

नैमिशे नैमिषारण्येऽस्मिन् दावाग्निं वनवह्निम्। 'वने च वनवह्नौ च दवो दाव इतीरितः'—इत्यमरः। क्रतुहोमपावकधिया सम्भावयन् यज्ञियाग्निबुद्ध्या गणयन्। पादपान् तरून् यूपास्थया यूपबुध्या सम्भावयन्। यूपः यज्ञियः स्तम्भः पशुबन्धनार्थमादीयते। अव्यक्तं अनालक्षितवर्णं शकुन्तस्वनं शकुन्तानां पक्षिणां स्वनमारावं मुनिगीतसामगतया मुनिभिर्गीतं यत्साम सामवेदः तस्मिन् गतया भक्त्या सम्भावयन्, वन्यान् वने भवान्, हरिणान् मृगान् तापसगौरवेण सम्भावयन्, तापसास्तपोधनाः तेषां तदर्थं वा यद् गौरवं सम्मानं तेन सम्भावयन्। वन्यान् हरिणान् तपोधनानेव मत्वेत्यर्थः।

नैषधीये राजहंसेनापि मुनिवृत्तिता दर्शितात्मनः। तथाहि—

'फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः'—इति।

मृगानां तु वने वासः कन्दमूलाद्यशनं सात्त्विकतादि मुनिसाधर्म्यम्। तथा च कश्चिदेवं श्लोकयाञ्चकार--

'यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्वगिरः शृणोषि न च तान् प्रत्याशया धावसि।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः'॥

अन्यच्च, 'स्वच्छन्दं हरिणेन या विहरता दैवात्समासादिता
भङ्गप्रस्नुतदुग्धबिन्दुमधुरा शालेर्नवा मञ्जरी।
निःश्वासानलदग्धकोमलतृणप्रख्यापितान्तर्व्यथ-
स्तामेव प्रतिवासरं मुनिरिव ध्यायन् वने शुष्यति'॥ इति।

सोऽहं तथा गौरवं चेतसि वहन् यन्त्रणया वेदनया पीडयेति यावत्, संयमेन वा कथं कथमपि क्लेशेनेत्यर्थः भुवि भूतले पादौ चरणौ न्यस्यामि निक्षिपामि। श्रद्धातिरेकात् पावनायां वनस्थल्यां पादप्रक्षेपोऽपि न रोचते रामस्येति भावः ॥४॥

युक्तरूपः समुचितः। धर्मैकपरायणस्य धर्मः एवैकं परायणं यस्य तस्य। परायणं परमयनम्। 'आश्रये तत्पराभीष्टे परायणपदं विदुः'—इति शाश्वतः। एकशब्दो मुख्यार्थकः। धर्मः पुनः—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

आनाकमेकधनुषा भुवनं विजित्य
पुण्यैर्दिवः क्रतुशतैर्विरचय्य मार्गम् ।
इक्ष्वाकवः सुतनिवेशितराज्यभारा
निःश्रेयसाय वनमेतदुपाश्रयन्ते ॥ ५ ॥

---

इति मनुना प्रदर्शितः। स एव मुख्य आश्रयो यस्य तस्य । सकलजगदभ्युदयनिःश्रेयसहेतोरिति—'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' (वैशेषिक० १।१।२) इति कणादसूत्रानुसारि वचनं दिङ्नागस्य। तत्राभ्युदयः समुन्नतिः, निःश्रेयसं तु कल्याणं मोक्षरूपम् । सकलानां जगतामभ्युदयस्य निःश्रेयसस्य च हेतोः कारणस्य। एतच्च मधुसूदनत्वं रामस्याङ्गीकृत्य, वस्तुतस्तु सकलस्य जगतः स्वराष्ट्रगतस्य स्थावरजङ्गमात्मनोऽभ्युदयस्य समुन्नतेः निःश्रेयसस्य कल्याणस्य च हेतुभूतस्येत्यर्थः । निष्प्रत्यूहतपःसिद्धि क्षेत्रे इति—प्रत्यूहेभ्यो विघ्नेभ्यो निर्गता निष्प्रत्यूहा, सा च तपसां सिद्धिः, तस्याः क्षेत्रे स्थाने । 'क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः'—इति विश्वः । सिद्धयः पुनस्तपःसमाधेः फलरूपा अणिमादयोऽष्टौ । तथाहि—

अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा ।
ईशित्वञ्च वशित्वञ्च तथा कामावसायिता ॥ इति ।

पूर्वराजर्षिवंशाध्यासिते इति—पूर्वे ये राजर्षयः राजानश्च ते ऋषयश्च तेषां वंशैः कुलैः पितापुत्रादिक्रमेणेति भावः, अध्यासिते सेविते । नैमिशे तदाख्ये वने । बहुमानः विशिष्ट आदरः ।

आनाकमिति—एकधनुषा आनाकं भुवनं विजित्य पुण्यैः क्रतुशतैः दिवः मार्गं विरचय्य सुतनिवेशितराज्यभाराः इक्ष्वाकवः निःश्रेयसाय एतद् वनं उपाश्रयन्ते इति योजना ।

एकधनुषा एकेन धनुषा, धनुर्भङ्गस्यानवकाशतया एकमेव धनुः पर्याप्तं जगतीविजित्यै । भुवनं जगत् । 'अथो जगती लोको विष्टपं भुवनं जगत्'—इत्यमरः । एकं महाभूतं पृथ्वी, पञ्चभूतेन्द्रियविषयात्मकं तु जगत् इति पृथ्वीजगतोर्भेदः । विजित्य जित्वा पुण्यैः पावनैः, क्रतुशतैः क्रतूनां शतैः अनेकयागैरित्यर्थः, दिवः स्वर्गस्य मार्गं विरचय्य रचयित्वा, उच्चैरवस्थितः स्वर्गस्तमारोहितुं यागरूपा सोपानपङ्क्तिरिति भावः । यथाह कालिदासः—

इति क्षितीशो नवतिं नवाधिकां महाक्रतूनां महनीयशासनः ।
समारुरुक्षुर्दिवमायुषः क्षये ततान सोपानपरम्परामिव ।। इति

( क्षितीशो दिलीपः ) । सुतनिवेशितराज्यभाराः—सुतेषु निवेशितः सङ्क्रामितः राज्यस्य भारः धूः यैस्ते इक्ष्वाकवः इक्ष्वाकुवंश्या राजानः, निःश्रेयसाय निःशेषेण नितरां वा श्रेयसे महते कल्याणाय मोक्षलाभायेत्यर्थः एतद् वनं

[1]( रामः प्रणमति )

क—इदमनन्यतपोवनसाधारणं नैमिशस्य माहात्म्यमवलोकय—

अस्मिन् सन्निवसन्महेश्वरशिरस्ताराधिपज्योत्स्नया
मिश्रीभूय कवोष्णतामुपगतस्तिग्मो निदाघातपः ।

---

नैमिशम्, अयोध्या सान्निध्यात् । उपाश्रयन्ते सेवन्ते । तथा च रघुवंशे

अथ स विषयव्यावृत्तात्मा यथाविधि सूनवे
नृपतिककुदं दत्त्वा यूने सितातपवारणम् ।
मुनिवनतरुच्छायां देव्या तया सह शिश्रिये
गलितवयसामिक्ष्वाकूणामिदं हि कुलव्रतम् ॥

एतत्सुदक्षिणादिलीपविषये ।

प्रथमपरिगतार्थस्तं रघुः सन्निवृत्तं
विजयिनमभिनन्द्य श्लाघ्यजायासमेतम् ।
तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभून्-
नहि सति कुलधुर्ये सूर्यवंश्या गृहाय ॥ इति रघुविषये ।

अनन्य······साधारणमिति--अन्येषां तपोवनानां साधारणं न भवतीति, तपोवनान्तरविशिष्टमित्यर्थः । माहात्म्यं महत्त्वं गौरवमिति यावत् ।

नैमिशारण्यमाहात्म्यमेव दर्शयति अस्मिन्निति--

अस्मिन् तिग्मो निदाघातपः सन्निवसन्महेश्वरशिरस्ताराधिपज्योत्स्नया मिश्रीभूय कवोष्णतामुपगतः तरुपल्लवेषु म्लानिं न, सरसां तोयेषु क्षयं नैव, जनस्य सन्तापं न, किन्तु दृशामालोकमात्रं जनयतीति योजना ।

अस्मिन् नैमिशारण्ये तिग्मः तीव्रः निदाघातपः निदाघस्य ग्रीष्मसमयस्य आतपः सूर्यप्रकाशः सन्निवसन्महेश्वरशिरस्ताराधिपज्योत्स्नया सन्निवसतो महेश्वरस्य शिरसि यस्ताराधिपस्तस्य ज्योत्स्नया, नैमिशे शिवस्यावासः, हरचूडायाञ्च चन्द्रमसः, अत एव चन्द्रशेखरः प्रोच्यते भगवानुमाजानिः, ताराधिपश्चन्द्रः, ताराणां नक्षत्राणामधिपः । 'नक्षत्रे नेत्रमध्ये च तारा स्यात्तार इत्यपि'--इति व्याडिः । ज्योत्स्ना चन्द्रिका । 'चन्द्रिका कौमुदी ज्योत्स्ना'—इत्यमरः । तया मिश्रीभूय सम्मिश्रतां प्राप्य कवोष्णतां ईषदुष्णतां उपगतः प्राप्तः । 'कोष्णं कवोष्णं मन्दोष्णं कदुष्णं त्रिषु तद्वति'—इत्यमरः । सूर्यातपस्तीक्ष्णश्चन्द्रातपस्तु शीतलः तयोः सम्मिश्रणात्कदुष्णतातपस्य । अन्यत्र सूर्याचन्द्रमसौ न सहवासिनौ, अत्र तु चन्द्रशेखरस्य सान्निध्यात्तच्छिरसि गतायाश्चन्द्रलेखायाः कौमुदी सूर्यप्रकाशेन सम्मिश्रिता जायते इति बलवत् खलु माहात्म्य मद्भुतं दिव्यञ्च । तरुपल्लवेषु तरूणां नवनवोद्गतेषु पत्रेषु कोमलत्वात्तेषां ग्रहणम् । म्लानिं ग्लानिं न जनयतीति दूरस्थेन सम्बन्धः ।

---

१ रा--( प्रणमति )--इति मूलपुस्तकस्थः पाठप्रकारः ।

न म्लानिं तरुपल्लवेषु सरसां तोयेषु नैव क्षयं
सन्तापं न जनस्य किन्तु जनयत्यालोकमात्रं दृशाम् ॥ ६ ॥

किञ्च,—

एतस्मिन् विततावध्वरे प्रतिदिनं सान्निध्ययोगाद्धरे-
स्त्यक्त्वा नन्दनचन्दनावनिरुहानालानतां प्रापिताः ।

---

मन्दोष्णेन दिनमणिप्रकाशेनाह्लाद्यमाना पत्राली तरूणामपूर्वां सुषमामिह दर्शयति । अन्यत्र तु--

अङ्गारैः खचितेव भूर्वियदपि ज्वालाकरालं करै—
स्तिग्मांशोः किरतीव तीव्रमभितो वायुः कुकूलानलम् ।
अप्यम्भांसि नखम्पचानि सरितामाशा ज्वलन्तीव च
ग्रीष्मेऽस्मिन्नववाह्निदीपितामिवाशेषं जगद्वर्त्तते ॥ इति भावः ।

सरसां तडागानां तोयेषु जलेषु क्षयं क्षीणतां कृशतां नैव जनयति ।अन्यत्र पुनः—

आपूर्येत पुनः स्फुरच्छफरिकासारोर्मिभिर्वारिभि-
र्भूयोऽपि प्रविजृम्भमाणनलिनं पश्येम तोयाशयम् ।
इत्याशाशततन्तुबद्धहृदयो नक्तंदिनं दीनधीः
शुष्यत्यातपशोषितस्य सरसस्तीरे जरत्सारसः ॥

किञ्च--

उड्डीनं विहगैर्मृतं जलचरैः क्ष्मान्तर्गतं कच्छपैः ।
पाठीनैः पृथुपङ्कपीठलुठनाद्यस्मिन्मुहुर्मूर्च्छितम् ।इति स सर्व एव निदाघे चण्डांशोः परितोऽङ्गारनिकरान् किरतः प्रभावः ।

किञ्च जनस्य सन्तापं न जनयति, प्राणिवर्गं नोद्वेजयतीत्यर्थः । किन्तु दृशां नेत्राणां आलोकमात्रं जनयति, जनस्येति सम्बध्यते । आलोके सति सन्तापराहित्यं सूर्यस्य कस्य न प्रियम् ? तदवस्थ एव दिवाकरो नैमिशारण्ये तस्मात्तस्य माहात्म्य-प्रकर्षः श्लाघनीयः किल ॥ ६ ॥

एतस्मिन्निति--एतस्मिन् विततावध्वरे प्रतिदिनं हरेः सान्निध्ययोगात् नन्दन-चन्दनावनिरुहान् त्यक्त्वा आलानतां प्रापिताः उच्चनिवेशितेन नयनेन आलोकनीयाः अमी पादपाः मत्तैरावणकण्ठरज्जुवलयन्यासक्षतिं बिभ्रतीत्यन्वयः ।

एतस्मिन् विततावध्वरे वितते विस्तृतिं प्राप्ते अध्वरे यागे, समस्तै रङ्गैःसुसम्पाद्य-माने इत्यर्थः 'ध्वरतिर्हिंसाकर्मा तत्प्रतिषेधः'–इति यास्कः । प्रतिदिनं हरेः इन्द्रस्य । मखांशभाजां प्रथमत्वेन गीतत्वादिन्द्रस्योपस्थानम् । 'हरिर्वातार्कचन्द्रेन्द्रयमोपेन्द्र-मरीचिषु । सिंहाश्वकपिभेकाहिशुकलोकान्तरेषु च । हरिर्वाच्यवदाख्यातो हरित् कपिलवर्णयोः'— इति विश्वः । सान्निध्यं सामीप्यं तस्मात्, नित्योपस्थानाद्धेतोः । नन्दनचन्दनावनिरुहान् त्यक्त्वा, अवनौ पृथिव्यां रोहन्ति ते महीरुहा वृक्षाः,

विभ्रत्युच्चनिवेशितेन नयनेनालोकनीया अमी
मत्तैरावणकण्ठरज्जुवलयन्यासक्षतिं पादपाः ॥ ७ ॥

रा—( विलोक्य ) सततप्रवृत्तमहाध्वरेण धर्मारण्येन नन्दनवनमपि विस्मारितो भगवान् पुरन्दरः ।

सचकितमवधाय कर्णमस्मिन् सुरपतिकर्षणमन्त्रनिःस्वनेषु ।
विरचयति शची सदैव नूनं स्रजमवधूय वियोगवेणिबन्धम् ॥८॥

---

चन्दनस्य अवनिरुहाश्चन्दनवृक्षाः, नन्दनस्य इन्द्रकाननस्य सम्बन्धिनो ये चन्दनावनिरुहाः तान्, नन्दने विद्यमानान् चन्दनतरून् विहायेत्यर्थः । इन्द्रस्य स्वर्गं विहाय नैमिशारण्ये नित्योपस्थित्या नन्दनचन्दनावनिरुहाणामपि त्यागः । आलानतां प्रापिताः गजवन्धनस्तम्भतां नीताः, अमी पादपाः–इति दूरस्थेन सम्बन्धः । 'आलानं वन्धस्तम्भे'–इत्यमरः । उच्चनिवेशितेन उच्चैः प्रवेशितेनाक्षिगोलके नयनेन आलोकनीयाः द्रष्टव्याः, एतेन तरूणामत्युन्नतता द्योत्यते । अमी पुरोदृश्यमानाः नैमिशारण्यवर्तिनः पादपाः मत्तैरावणकण्ठरज्जुवलयन्यासक्षतिं मत्तस्य ऐरावणस्य ऐरावतस्य इन्द्रहस्तिनः कण्ठरज्जूनां वलयस्य कङ्कणसाम्यात्कङ्कणस्य न्यासेन या क्षतिः क्षतं, त्वच उन्मथनेन क्षतविक्षतता द्रुमाणाम् । तां विभ्रति धारयन्ति । 'ऐरावतोऽभ्रमातङ्गैरावणाभ्रमुवल्लभाः'–इत्यमरः । 'वलयः कण्ठरोगे ना कङ्कणे पुंनपुंसकम्'–इति च मेदिनी । नन्दनं विहाय नैमिशेऽवस्थितस्य देवराजस्य वाहनमैरावतो गजोऽत्रत्यैः पादपैः सह बध्यते, बन्धनवशाच्च बन्धचिह्नानि द्रुमेषु दरीदृश्यन्ते । ऐरावतगजस्य स्पर्शेन तद्बन्धनसहत्वेन च द्रुमाणां माहात्म्यं तेन च नैमिशस्य भूयानुत्कर्ष इति भावः ॥ ७ ॥

सततं निरन्तरं प्रवृत्तो महान् अध्वरोऽश्वमेधाख्यो यत्र तेन धर्मारण्येन धार्मिकैस्तपोधनैराश्रितत्वात्तैश्च धर्मस्य परिपालनाद् वनस्यास्य धर्मारण्यत्वम् । पुरन्दरः शक्रः दैत्यदानवानां पुरां दारकः दारयिता वा ।

नन्दनवनं विस्मृत्य नैमिशे शक्रोपस्थितिं भङ्गयन्तरेण प्रतिपादयति सचकितमिति—

अस्मिन् सुरपतिकर्षणमन्त्रनिःस्वनेषु सचकितं कर्णमवधाय शची स्रजमवधूय सदैव वियोगवेणिबन्धं विरचयति ।

अस्मिन् नैमिशे वने सुरपतिरिन्द्रः तस्य कर्षणमाह्वानं तस्य ये मन्त्राः ऋचः तेषां निःस्वनेषु उच्चारणेन जातेषु शब्देषु सचकितं सभयं कर्णं अवधाय अवधानपूर्वकं कर्णं दत्त्वेत्यर्थः । शची पौलोमी इन्द्रपत्नी स्रजं नन्दनकुसुमैर्ग्रथितं माल्यं अवधूय निराकृत्य सदैव वियोगवेणिबन्धं वियोगः पतिविरहः । इन्द्रस्य नैमिशेऽवस्थानादेषु दिवसेषु शची वियुक्ता विरहिणी तिष्ठति विष्टपे । तेन वेणिबन्धं

क—इदमपरं न पश्यसि—

> अस्मिन् कपोलमदपानसमाकुलानां
> विघ्नं न जातु जनयन्ति मधुव्रतानाम्।
> सामध्वनिश्रवणदत्तमनोऽवधान-
> निष्पन्दमन्दमदवारणकर्णतालाः ॥ ९ ॥

रा—( विहस्य ) किमत्राश्चर्यम्—

> मुनीनां सामगीतानि पुण्यानि मधुराणि च।
> प्रवासिनामपि मनो हरन्ति किमु दन्तिनाम् ॥ १० ॥

---

विरचयति, एकवेणीधरा तिष्ठतीति भावः। प्रियसन्तोषनिमित्ता शोभार्थं शिरसि धार्यते स्रक् सीमन्तिनीभिः, पतिविरहे तु न सोपयुक्तेति शय्यावधूयतेस्म सेति भावः ॥ ८ ॥

अस्मिन् कपोलमदपानसमाकुलानां मधुव्रतानां सामध्वनिश्रवणदत्तमनोऽवधाननिष्पन्दमन्दमदवारणकर्णतालाः जातु विघ्नं न जनयन्तीति योजना।

अस्मिन् नैमिशकानने कपोलमदपानसमाकुलानां कपोलयोः गण्डयोर्यो मदो दानजलम्। 'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः'—इति मेदिनी। तस्य पाने आस्वादने समाकुला व्यापृताः तेषां मधुव्रतानां भ्रमराणाम्। 'मधुव्रतो मधुकरो मधुलिण्मधुपालिनः'—इत्यमरः। मधु व्रतं भक्ष्यं येषां तेषाम्। सामेति—साम्नां यो ध्वनिर्नादः तस्य श्रवणे दत्तं यन्मनः तस्य अवधानेन स्थिरीकरेण निष्पन्दाः स्पन्दरहिताः गतिशून्याः अत एव मन्दाः ये मदवारणानां मत्तदन्तिनां कर्णतालास्ते जातु कदापि विघ्नं न जनयन्ति कुर्वन्ति। श्रवणव्यजनानामुद्धूननेन षट्पदाः सुदृढं करिभिस्ताड्यमानाः कपोलपालीगतं दानवारि पातुं न प्रभवन्ति, वारणेषु पुनः सामध्वनिसमाकर्णनपरेषु संलग्नचित्ततया न कर्णौ गतिं लभेते नापि मधुकरकृतां मधुचौर्यप्रवृत्तिं वारणा विदंतीति मधुलिहां पारणाऽव्याहता प्रवर्त्तते इत्याशयः।

अन्यत्र तु चञ्चरीकवृन्दस्य न तथा सौख्यमयी दशा। यथाहुः—

> दानार्थिनो मधुकरा यदि कर्णतालै र्दूरीकृताः करिवरेण मदान्धबुद्ध्या।
> तस्यैव गण्डयुगमण्डनहानिरेषा भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ इति।

मुनीनां पुण्यानि मधुराणि च सामगीतानि प्रवासिनामपि मनो हरन्ति दन्तिनां किमु।

मुनीनां वाल्मीकिप्रभृतीनां पुण्यानि पुण्यवन्ति मधुराणि श्रुतिप्रियाणि च सामगीतानि साम्नां गानानि प्रवासिनां विरहिणां अपि मनो हरन्ति आकर्षन्ति—विरहक्लेशक्लिष्टानां प्रियानुशोचिनां चेतसि कुतोऽवकाशो विषयान्तरस्य, तान्यपि रञ्जयतां सामगीतानां मधुरिमाऽवश्यं स्वीकर्त्तव्यः। दन्तिनां दन्तावलानां गजानाम्।

क—( आत्मगतम् ) अहो रामस्य प्रवासे महान्निर्वेदः, यदयं तिर्यग्भ्योऽपि प्रवासिन एव शून्यहृदयानवगच्छति । [ प्रकाशम् ] इतस्तावदवधीयतां दृष्टिः—

मुक्त्वा वसन्तविरहेपि मुनिप्रभावा-
दुन्निद्रसान्द्रकुसुमां सहकारशाखाम् ।
धावन्त्यमी मधुकराः क्रतुहोमधूम-
सन्त्रासिताः सरसि वारिरुहोदराणि ॥ ११ ॥

---

'दन्ती दन्तावलो हस्ती'—इत्यमरः । यूथेन सह करिण्या च विचरतां हस्तिनां सुप्रसन्नचेतस्कानां हृदयहारीणीति किमु वक्तव्यम् । 'किमु सम्भावनायां स्याद् विमर्शे चापि दृश्यते'—इति मेदिनी ॥ १० ॥

प्रवासे महान्निर्वेदः प्रवासनिमित्तको महान् खेदः । तिर्यग्भ्यः वक्रगामिभ्यः । 'स तिर्यङ् यस्तिरोऽञ्चति'—इत्यमरः । मनुष्याणां शिरः समुन्नतत्वेन कन्धरायां धृतमास्ते, पशूनां तु न तथा, तेषां तु ग्रीवा लम्बायमाना मस्तकानि चाग्रतो नतानीति ते तिर्यञ्च उच्यन्ते । प्रवासिनः इति द्वितीयाबहुवचनान्तं पदम् । विरहिणः इत्यर्थः । शून्यहृदयान् शून्यं हृदयं येषां तान् विमनस्कानित्यर्थः । अवगच्छति जानाति । अवधीयतां अवधानेन दीयताम् ।

क्रतुहोमधूमसन्त्रासिताः अमी मधुकराः वसन्तविरहेऽपि मुनिप्रभावात् उन्निद्रसान्द्रकुसुमां सहकारशाखां मुक्त्वा सरसि वारिरुहोदराणि धावन्तीति योजना ।

क्रत्वर्थं यो होमः अग्नौ घृतादीनां प्रक्षेपः तेन यो धूमस्तेन संत्रासिताः अमी मधुकरा भ्रमराः, वसन्तविरहेऽपि वसन्तस्यापगमेपि मुनिप्रभावात् उन्निद्रसान्द्रकुसुमां उन्निद्राणि विकसितानि सान्द्राणि निविडानि च कुसुमानि यस्यास्तां सहकारशाखां सहकारस्य अतिसौरभस्य आम्रस्य शाखां मुक्त्वा परित्यज्य, धूमेनोद्विज्य सहकारशाखापरित्यागः षट्पदानाम्, तथा नाम प्रियाः सहकारमञ्जर्योऽपि येन भ्रमराणां परित्याज्यन्ते तस्य धूमस्य प्राचुर्यं स्वतः सिद्धम्, तेन च क्रतुहोमस्य विशालता व्यज्यते । 'आम्रश्चूतो रसालोऽसौ सहकारोतिसौरभः'—इत्यमरः । सरसि दीर्घिकायां वारिरुहोदराणि वारिरुहाणि पद्मानि तेषामुदराणि कोषाः अन्तः प्रदेशा इति यावत्, धावन्ति । भीतभीता षट्पदाः पलायन्ते, कमलकोषेषु च निलीयावतिष्ठन्ते इत्यभिप्रायः । वसन्तागमे सहकारमञ्जरीविकासो मधुकरोल्लासश्च स्वाभाविकः कविसमयसिद्धश्च । तथाहि—

सहकारकुसुमकेसरनिकरभरामोदमूर्च्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ भवेत्कस्य नोत्कण्ठा ॥

इदञ्च निदर्शनमात्रम् ॥११॥

रा—कथमनवरताहुतिसंवर्द्धितो धूमराशिर्मधुकरानिवास्मान् पर्याकुलयितुं प्रवृत्तः। ( धूमसंवाधां नाटयति )

क—भो भोः किं वाढं धूमेन पर्याकुलनयन इवासि संवृत्तः।

रा—सीताविरहबाष्पेण क्षरता नित्यदुःखिते।

बाढमायासिते भूयो धूमेन मम लोचने ॥ १२ ॥

क—तदेनामग्रतोवर्तिनीमाश्रमदीर्घिकामवगाह्य शीतलेन सलिलेन क्षालितव्यपनीतनयनखेदं विश्रम्य मुहूर्त्तमत्र तिष्ठतु। अहमपि कुलपतेरग्निहोत्रवेलां सन्निधानेन सम्भावयामि ( इति निष्क्रान्तः )।

रा—( परिक्रम्य ) एतद्दीर्घिकातीरमवतरामि। ( अवतीर्य ) अहो प्रसन्नसलिलता कमलाकरस्य। ( उदकमध्ये छायां निर्वर्ण्य ससम्भ्रमम् ) कथं सीताप्यत्रैव ! ( हर्षविस्मयं नाटयति )

सी—( विलोक्य ) हद्धी हंसमिहुणदंसणवावुदाए मए अतक्किदसमाअदो अज्जउत्तो ण संलक्खिदो। ता ओसरिस्सं। ( तथा करोति ) ( क )

रा—कथमसम्भाव्यैव मां प्रस्थिता सीता।

---

( क ) हा धिक् ! हंसमिथुनदर्शनव्यापृतया मया अतर्कितसमागत आर्यपुत्रो न संलक्षितः। तदपसरामि।

---

अनवरताहुतिसंवर्द्धित इति—अनवरतं सततं या आहुति र्होमार्थमाज्यचरुनिक्षेपः तेन संवर्द्धितो वृद्धिं नीतः। पर्याकुलयितुं खेदितुम्। धूमसंवाधां धूमप्रयुक्तां व्यथाम्। 'पीडा बाधाव्यथा दुःखम्'—इत्यमरः। बाढं भृशम्। 'बाढं भृशप्रतिज्ञयोः'—इत्यमरः।

सीताविरहेति—सीताविरहबाष्पेण क्षरता नित्यदुःखिते मम लोचने भूयो धूमेन बाढमायासिते—इत्यन्वयः।

सीतायाः विरहेण यद् बाष्पं ऊष्माश्रु तेन क्षरता स्रवता नित्यदुःखिते नित्यं दुःखिते। एतेन बाष्पक्षरणस्य नित्यत्वमुक्तम्। मम लोचने नयने भूयः पुनरपि भूयसा अधिकेन वा धूमेन बाढं भृशं आयासिते खेदिते। क्षते प्रहार इव बाष्पक्षरणेन सञ्जातखेदयोर्नयनयो रयं धूमकृतः खेदो नितरां पीडाकरः इति भावः ॥१२॥

क्षालितव्यपनीतनयनखेदमिति—क्षालितेन क्षालनेन व्यपनीतो दूरीकृतो नयनयोः खेदः परिक्लेशो यथा स्यात्तथेति क्रियाविशेषणमिदम्। कुलपतेरिति—

मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्।

अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥ इति

आपाण्डरेण मयि दीर्घवियोगखेदं
लम्बालकेन वदनेन निवेदयन्ती।
एषा मनोरथशतैः सुचिरेण दृष्टा
क्वापि प्रयाति पुनरेव विहाय सीता ॥ १३ ॥

तदेनामालम्बे। [ बाहू प्रसार्य ] नैषा वैदेही, किन्तु—

वैदेह्याः क्वापि गच्छन्त्या दीर्घिकातीरवर्त्मना।
अन्तर्गतजलच्छाया मया सैवेति वीक्षिता ॥ १४ ॥

तदस्याः प्रतिकृतेर्मूलप्रकृतिमन्वेषयामि। ( अन्वेषणं नाटयति ) निःसम्पातविविक्तमिदं दीर्घिकातीरम्, बिम्बेन च विना प्रतिबिम्ब-मित्यसम्भाव्यमेतत्। किमिदम्?

---

आपाण्डरेणेति—

आपाण्डरेण लम्बालकेन वदनेन दीर्घवियोगखेदं मयि निवेदयन्ती एषा सुचिरेण मनोरथशतैः दृष्टा सीता पुनरेव विहाय क्वापि प्रयाति।

आपाण्डरेण ईषत्पीतिमयुक्तश्वेतेन लम्बालकेन लम्बा अलका यस्य तेन दीर्घ-केशकलापान्वितेन वदनेन मुखेन दीर्घश्चासौ वियोगः विरहः तेन यः खेदः तं मयि निवेदयन्ती दर्शयन्ती एषा सुचिरेण दीर्घकालानन्तरं मनोरथशतैः मनोरथानां शतैः सह दृष्टा दर्शनगोचरं गता सीता पुनः एव, विहाय त्यक्त्वा, 'मामि'ति शेषः, क्वापि कुत्रापि अनिर्दिष्टे अविज्ञाते च स्थाने प्रयाति गच्छति। मनोरथशतैः कल्पना-परम्पराभिश्च दवीयसी प्रेयसी कल्पितचित्रा या रामेण नेदिष्ठतामानीयते स्म सैवाद्य दृग्गोचरं गता। प्रणष्टायां पुनस्तस्यां मनोरथशतान्यपि प्रणष्टानीति भावः। मनोरथैः प्रेयस्याः पर्युपस्थापनं तु वर्ण्यते कविभिः। तद्यथा—

'सार्धं मनोरथशतैस्तव धूर्त कान्ता सैव स्थिता मनसि कृत्रिमभावरम्या।
अस्माकमस्ति न कथञ्चिदिहावकाशस्तस्मात्कृतं चरणपातविडम्बनाभिः' ॥ इति।

दीर्घिकाजले प्रतिच्छायां वीक्ष्य प्रतिबिम्बाद् बिम्बानुमानं न दुःशकम्। वदन-स्यापाण्डरता तु कथं लक्षिता तदानीं रामेणेति कविरेव वेत्ति। आपाण्डुवदनता-ऽनुमानं कल्पनामूलकं न दृष्टिमूलकमिति वयम् ॥ १३ ॥

आलम्बे निगृह्णामि। प्रसार्य व्यादाय। वैदेह्याः इति—

दीर्घिकातीरवर्त्मना क्वापि गच्छन्त्याः वैदेह्याः अन्तर्गतजलच्छाया सैवेति मया वीक्षिता—इत्यन्वयः।

दीर्घिका सरसी तस्याः तीरे तटे यद्वर्त्म मार्गः तेन, तमवलम्ब्येत्यर्थः। क्वापि कुत्रापि गच्छन्त्याः प्रयान्त्याः वैदेह्याः विदेहराजपुत्र्याः सीतायाः, अन्तर्गतजल-च्छाया अन्तर्गता जले या छाया दीर्घिकाया अन्तर्गतं अभ्यन्तरस्थं यत् जलं तस्मिन् या छायेति वा। सा एव सीतैव सीतारूपत्वेन मया वीक्षिता दृष्टा ॥ १४ ॥

सी—पेक्खदे पडिकिदिं, कहं ण पेक्खदि मं अज्जउत्तो। (विचिन्त्य) होदु विण्णादं, मुणिप्पसादो एसो तपोवणवासिणीणं इत्थिआणं एदस्सिं दीहिआतीरे पुरुसणअणाणं अगोअरदा। जदि पडिकिदिए वि अदंसणं महेसिणा आदिट्ठं भवे तदा अअं जणो अणुग्गहिदो भवे। अहं वि जाव जह एसा पडिकिदी ण दीसइ तह ओसरिस्सं। (अपसरति)(क)

रा—तामेव तावत् प्रसन्नसलिलमध्यवर्तिनीं प्रतिमासीतामवलोकयामि। (विलोक्य) कथं साप्यन्तर्हिता। (मोहं गच्छति)

सी—हद्धी! हद्धी! मोहं गदो अज्जउत्तो। उपसप्पिस्सं। (परिक्रामति) अहवा जदि संलक्खिदो अज्जउत्तो पुणो वि कुप्पिस्सदि तदा मुणिअणा अविणीदेत्ति मं संभावइस्संति। ता गमिस्सं। (निवृत्त्य) अहवा ण एसो जुत्ताजुत्तविआरणस्स कालो, कुप्पदु वा मं अज्जउत्तो मुणिअणो वा अविणीदेत्ति संभावेदु। सव्वहा ण सक्कणोमि एदारिसावत्थं गदं अज्जउत्तं उवेक्खिदुं। (परिक्रामति) सुणंतु भवन्तो लोअवाला, अहं अज्जउत्तेण णिव्वासिदा, संपदं अविणीददाए अज्जउत्तस्स ण सासणं खु अदिक्कमामि, किंदु सोआवेअवलक्कारिदा अत्तणो ण प्पहवन्ती ईदिसं साहसं अणु-

---

[क] प्रेक्षते प्रतिकृतिं कथं न प्रेक्षते मामार्यपुत्रः। [—] भवतु, विज्ञातम्, मुनिप्रसाद एष तपोवनवासिनीनां स्त्रीणामेतस्मिन् दीर्घिकातीरे पुरुषनयनानामगोचरता। यदि प्रतिकृतेरप्यदर्शनं महर्षिणा आदिष्टं भवेत् तदायं जनोऽनुगृहीतो भवेत्। अहमपि तावत् यथैषा प्रतिकृतिर्न दृश्यते तथापसरामि।

[ख] हा धिक् हा धिक्! मोहं गत आर्यपुत्रः। उपसर्पामि। (—) अथवा यदि संलक्षितः आर्यपुत्रः पुनरपि कोपिष्यति तदा मुनिजना अविनीतेति मां सम्भावयिष्यन्ति। तद्गमिष्यामि। (—) अथवा नैष युक्तायुक्तविचारणस्य कालः, कुप्यतु वा मामार्यपुत्रः, मुनिजनो वाविनीतेति सम्भावयतु। सर्वथा न शक्नोमि एतादृशावस्थां गतमार्यपुत्रमुपेक्षितुम्। (—) शृण्वन्तु भवन्तो लोकपालाः,

---

प्रतिकृतेः छायायाः प्रतिबिम्बस्येति यावत्। मूलप्रकृतिं मूलरूपां प्रकृतिं कारणम्। बिम्बे सति प्रतिबिम्बं भवति तस्माद् कारणं बिम्बं कार्यस्य प्रतिबिम्बस्य मूलप्रकृति। 'मूलप्रकृतिरविकृति'रिति साङ्ख्यकारिकाया ईश्वर-

चिट्ठामि । [ उपसृत्य निर्वर्ण्य ] हद्धी हद्धी ! परिच्चत्तचेदणो विश्र श्रअउत्तो । [ परिष्वजते ]

[1]( रामः प्रत्यागमनं नाटयति )

[2]( सीता अपसरणं नाटयति )

रा—कथमकस्मादेव रोमाञ्चितोऽस्मि ?

सी—तह णाम णिव्वासिदा ईदिसं साहसं अणुचिट्ठिअ जं सच्चं भीदंमि संवुत्ता । ( क )

रा—( विलपन् )--गाढमालिङ्ग वैदेहि—

सी—अणवरद्धंमि ( ख )

रा—देहि मे दर्शनं प्रिये ।

सी—पहवदि सिद्धसासणं; किं एत्थ करेमि मंदभाश्रा । ( ग )

रा—त्यज्यतां दीर्घरोषोऽयं--

सी--अहं वि अअउत्तं एव्वं विण्णवेमि । ( घ )

---

अहमार्यपुत्रेण निर्वासिता साम्प्रतमविनीततयार्यपुत्रस्य न शासनं खलु अतिक्रमामि, किन्तु शोकावेगवलात्कारिता आत्मनो न प्रभवन्ती ईदृशं साहसमनुतिष्ठामि । (--) हा धिक्, हाधिक्, परित्यक्तचेतन इवार्यपुत्रः (--)

( क ) तथा नाम निर्वासिता ईदृशं साहसमनुष्ठाय यत्सत्यं भीतास्मि संवृत्ता ।

( ख ) अनपराद्धास्मि ।

( ग ) प्रभवति सिद्धशासनं किमत्र करोमि मन्दभागा ।

( घ ) अहमप्यार्यपुत्रमेवं विज्ञापयामि ।

---

कृष्णीयायाः स्मरति कविः । मुनिप्रसादः मुनेर्वाल्मीकेरनुग्रहः, यद्दीर्घिकापरिसरगतः स्त्रीजनो न केनापि पुरुषेणालक्ष्यते इति ।

परमार्थसीतान्वेषणे भग्नमनोरथः प्रतिमासीतामन्वेष्टुं भूयोप्युद्युङ्क्ते तामिति—

प्रसन्नसलिलमध्यवर्तिनीं प्रसन्नं निर्म्मलं स्वच्छमित्यर्थः, यत्सलिलं सरसीजलं तस्य मध्ये वर्तिनीं वर्तमानामित्यर्थः । प्रतिमासीतां छायया निर्मितां सीताम् । अन्तर्हिता तिरोहिता लुप्ता वा ।

मोहं गच्छति मूर्च्छति ।

---

१ रा—( प्रत्यागमनं नाटयति ) । २ सी—( अपसरणं नाटयति ) । इत्येवं पाठप्रकारो मूलपुस्तके ।

रा—किं नु निष्करुणा मयि ॥ १५ ॥
सी—अज्ज उत्त, विवरीओ खु उवालंभो। (क)
रा— देवि विज्ञापयामि त्वां—
सी—अवहिदंमि एसा, आणवेहि। (ख)

---

[क] आर्यपुत्र! विपरीतः खलूपालम्भः।
[ख] अवहितास्म्येषा, आज्ञापय।

---

संलक्षितः दृष्टः। अविनीता दुःशीला। अतिक्रमामि समुल्लङ्घयामि। शोकावेगबलात्कारितेति—शोकस्य य आवेगः तीव्रता तेन बलात्कारिता वश्यतां नीता। परित्यक्तचेतनः परित्यक्ता चेतना येन विसञ्ज्ञः। परिष्वजते समालिङ्गति। सीतावचनजातं विहाय समग्रं पद्यमेतद्रूपम्—

गाढमालिङ्ग वैदेहि देहि मे दर्शनं प्रिये।
त्यज्यतां दीर्घरोषोऽयं किन्तु निष्करुणा मयि ॥ इति

प्रिये वैदेहि! गाढमालिङ्ग, दर्शनं मे देहि। अयं दीर्घरोषः त्यज्यताम्, किन्तु मयि निष्करुणेति योजना।

प्रिये विदेहराजनन्दिनि! गाढं सम्यगुपपीड्य आलिङ्ग परिष्वजस्व, 'मामि' ति शेषः। मे मम अत्युत्कण्ठितस्य दर्शनं देहि अयं दीर्घरोषः दीर्घो रोषः चिराय हृदि निहितो निर्वासनजनितः क्रोधराशिरित्यभिप्रायः, त्यज्यतां दूरीक्रियताम्। किं नु मयि रामे विरहव्यथावह्निना व्यथ्यमाने निष्करुणा करुणारहिता निर्दया, 'भवती संवृत्तेति' शेषः।

अनपराद्धास्मि—'संलक्षित आर्यपुत्रः पुनरपि कोपिष्यति'—इति विचिकित्सा जागर्ति स्म सीतामनसि। इदानीं सीताकृतं परिष्वङ्गं रामो न केवलं सोढवान्, भूयोऽपि सगाढं परिरम्भं सम्प्रार्थितवानिति सीतायाः महान् परितोषः। रामेण तत्कृतमालिङ्गनं नापराधत्वेन मतमपि तु सादरं सबहुमानञ्च सहर्षञ्च सोत्कण्ठञ्च स्वीकृतमिति नापराद्धं सीतया।

प्रभवति, प्रभाववदस्ति, नहि मयाऽन्यथयितुं पार्यते इति भावः। सिद्धशासन मिति—अणिमादिसिद्धिमन्तः सिद्धा योगीश्वराः, इह तु भगवान् वाल्मीकिः सिद्धिमतां पुरोगत्वेनाभिमतः। तस्य शासनमादेशः, सरसीपरिसरे स्थिता रमणी नराणां दर्शनाविषय इत्येवं रूपः समादेशः इत्यर्थः।

अहं······विज्ञापयामि—दीर्घरोषो ननु भवतैवाङ्गीकृतो न मयेति भवान् मयैव खलु विज्ञापयितव्यः ॥ १५ ॥

मानुषी सीता रामसन्निहितापि तिरोहिता यदिह कविनाऽऽलिखिता तत्किल कल्पनाचातुरीमूलम्। एवं गते उक्तिप्रत्युक्तिप्रकारो नितरां मनोरमो हृद्यश्च विभाति। षोडशसङ्ख्याकः श्लोकः पुनरेवंरूपः—

रा— यत्त्वं चारित्रशालिनी ।

सी—अहो—अच्चाहजोग्गा पाणा । [क]

रा— निर्वासितासि विषयात्—

सी—पहवदि अञ्ञउत्तो सअलस्स परिअणस्स । [ख]

रा— अस्मिन् दोषे प्रसीद मे ॥ १६ ॥

सी—तुमं पसीद, णिच्चपसण्णा अहं । [ग]

---

[क] अहो अत्यागयोग्याः प्राणाः ।
[ख] प्रभवत्यार्यपुत्रः सकलस्य परिजनस्य ।
[ग] त्वं प्रसीद, नित्यप्रसन्नाहम् ।

---

देवि विज्ञापयामि त्वां यत्त्वं चारित्रशालिनी ।
निर्वासितासि विषयादस्मिन् दोषे प्रसीद मे ॥ इति ।

देवि ! त्वां विज्ञापयामि यत् चारित्रशालिनी त्वं विषयात् निर्वासितासि, अस्मिन् मे दोषे प्रसीदेत्यन्वयः ।

देवि सीते ! त्वां विज्ञापयामि त्वाम्प्रति निवेदयामि, यत् त्वं चारित्रशालिनी शोभनचरित्रा असि, आसीश्च । तथापि विषयात् स्वप्रदेशात् निर्वासितासि यत्त्वं मया निर्वासिताऽभूः, सोऽयं महानपराधो मम, तस्मात् अस्मिन् दोषे एतद्दोषनिमित्तं प्रसीद प्रसन्ना भव क्षमस्व, अखिलञ्च मन्युं हृदयतलाद् दूरीकृत्य सुप्रसन्ना मयि भवेति श्लोकव्याख्या । अदृश्यमानापि परिष्वङ्गेन छायया चानुमीयमाना जानकी रामेरितानि वचांसि शृण्वंती यदाह तदिदानीं व्याख्यायते—

अवहितास्मि सर्वथा दत्तावधानास्मि, तस्मात् प्रोच्यतां यदिष्यते । आज्ञापयेति पदं भारतीयललनानुरूपं कविनोपात्तम् ।

अत्यागयोग्याः प्राणाः—न त्यागोचिता असवः । मया स्वजीवितं यद्यपि रक्षितं न विनाशितं नैतदसमञ्जसमाचरितम् । भर्त्रा विशङ्कितचारित्रायाः स्त्रिया मरणं वरं न जीवितम्, अहं तु भर्त्रैव शुद्धचारित्रा प्रतिपाद्यमाना धन्यास्मि । जीवितदशायामेव मया चारित्रशालिनीत्वं भर्तुरभिमतमात्मनो विज्ञातम्; यदि मृताऽभविष्यं नाहमेतदश्रोष्यम् । तस्मात् स्वीयं जीवितं गर्ह्यं कदर्थितञ्च नैवेति विज्ञाय सर्वथा परितुष्टा जीवितुमेव प्रयतिष्ये इति भावः । प्रभवति......परिजनस्येति—परिजनो भृत्यवर्गः, रामः सीतायाः पतिः, राजा च, सर्वथात्वसौ स्वामी । स्वामी च भृत्यं रक्षितुं वा निर्वासितुं वा सर्वथा समर्थः । परिजनस्याङ्गमेवात्मानं कलयन्ती सीताऽऽर्जवस्य परां काष्ठां प्रतिपन्नेति न सन्देहः ॥ १६ ॥

त्वमेव प्रसीद प्रसन्नो भव ! रुष्टेन भवताहं वराकी निराकृता । मया पुनर्निर्वा-

रा——कदा बाहूपधानेन पटान्तशयने पुनः।
गमयेयं त्वया सार्द्धं पूर्णचन्द्रां विभावरीम् ॥ १७ ॥
सी——अयि जणवादभीरुअ, एत्थ सरिण्णहिदे जणे संतपसि। (क)
रा—हा प्रिये जनकराजपुत्रि! देहि मे प्रतिवचनम्। (मोहं गच्छति)
सी—कहं पुणो वि अज्जउत्तो मोहं गदो। समस्ससं। ( पटान्तेन वीजयति ) (ख)
रा——( हस्तं प्रसार्य पटान्तं गृह्णाति ) कथं पटान्त इव संलक्ष्यते। को नु खल्वेष भविष्यति? ( विचिन्त्य ) अथवा—
जनकदुहितरं विहाय देवीं
जनमपरं भुवने तथाप्रभावम्।

( क ) अयि जनपादभीरुक, अत्र सन्निहिते जने सन्तपसि।
( ख ) कथं पुनरपि आर्यपुत्रो मोहंगतः।

सितयापि त्वयि रोषो नाङ्गीकृतो जातु, तस्मात्प्रसादस्तु तवैव युज्यते इत्याशयः। अत्र कालिदासः——
'इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम्।
न कश्चन भ्रातृषु तेषु शक्तो निषेद्धमासीदनुमोदितुं वा' ॥ इति,

कदेति——पटान्तशयने बाहूपधानेन पूर्णचन्द्रां विभावरीं त्वया सार्द्धं कदा पुनः गमयेयमिति योजना। पटेन अन्तं रम्यं यत् शयनं मञ्चः तस्मिन्। 'शय्यायां शयनीयवत्। शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः—इत्यमरः। बाहूपधानेन बाहुरेव उपधानं उपवर्हः तेन, उपधीयते शिरोऽत्रेति तेन। पूर्णचन्द्रां पूर्णश्चन्द्रो यस्यां ताम्। विभावरीं रात्रिं त्वया सार्द्धं सह कदा पुनः गमयेयं अतिवाहयेयम्।

अन्तं रम्यम्। 'मृताववसिते रम्ये समाप्तावन्त इष्यते' इति शब्दार्णवः। अन्तशब्दश्च रम्यार्थको मल्लिनाथेन व्याख्यातः पद्येऽस्मिन्—
'दन्तोज्ज्वलासु विमलोपलमेखलान्ताः सद्रत्नचित्रकटकासु बृहन्नितम्बाः।
अस्मिन् भजन्ति घनकोमलगण्डशैला नार्योऽनुरूपमधिवासमधित्यकासु'॥माघः,४.४०॥

अयीति कोमलामन्त्रणे। जनवादभीरुकेति—जनवादः जनापवादः, बिभेतीति भीरुः स एव भीरुकः। 'त्रस्नौ भीरुभीरुकभीलुकाः'—इत्यमरः। सन्निहिते जने सन्तपसि—न खलु तपोधना बहुदूरस्थाः, लक्ष्मणस्तु सहावस्थायी। नितरां धीरप्रशान्तेन नायकेन रामेण भार्याविरहकृतः सन्तापो न खलु तपोधनानां परेषाञ्च जनानां समक्षं प्रदर्शयितव्यः; प्रत्युत सर्वथाऽप्याकारो रक्षणीयः। लक्ष्मणस्तु यद्यपि 'सहचारी विजानाति चरित्रं सहचारिणः', तथापि बाहूपधानपुरस्सरं पटान्तशयने भार्यया सार्धं पूर्णचन्द्राया विभावर्या गमनप्रस्तावस्तु ततोऽपि गोप्य एवाग्रजेनेति युक्तमुच्यते सीतया सन्निहिते जने सन्तपसीति।

अहमिह न विलोकयामि या मे
स्पृशति पटान्तसमीरणैः शरीरम् ॥ १८ ॥

तदेनामवलोकयामि। ( चक्षुरुन्मीलयन् ) अनवरतबाष्पपिहित-लोचनतया न किञ्चिदपि दृश्यते। तस्मादेनमपकृष्य तावदपनयामि। ( तेनैवोत्तरीयान्तेनाश्रूणि प्रमार्जन्नाकर्षति )

सी—(उत्तरीयं मुञ्चति) अअउत्त ण तुए परकेरएण उत्तरीएण पणअकोविदस्य विअ जणस्स अस्सुप्पमज्जणं अणुचिट्ठिदव्वं। (क)

(क) आर्यपुत्र न त्वया परकीयेनोत्तरीयेण प्रणयकोविदस्य (कोपितस्स) इव जणस्याश्रुप्रमार्जनमनुष्ठातव्यम्।

प्रतिवचनं प्रत्युत्तरम्।

पटान्तेन पटस्य उत्तरीयस्य अन्तेन प्रान्तेन। 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः। अवयवेऽपि'—इति हेमचन्द्रः। वीजयति पवनं करोति यथा मूर्च्छितो रामः सञ्ज्ञां लभते।

पटान्त इवेति—व्यजनपवनस्तीव्रः, पटान्तेन कृतस्तु मन्दः, तस्यैव चानुभवः सम्प्रति रामस्य। प्राकृते वाते तु पवमाने तरुपर्णादयोऽपि सगतयो जायेरन्। विशिष्टं तु मन्दमन्दं पवनमनुभूय पटान्तजन्यत्वानुमानद्वारा कृतं पटान्तानुमानं रामेण। तदेतत् 'इव' पदेन द्योत्यते। यावदसौ पटः सीतया ध्रियते नासौ रामस्य दृष्टिगोचरः। अदृश्यमानोऽपि ग्रहीतुं शक्यः। सर्वथा गृहीतोऽसौ परित्यक्तस्तु सीतया रामस्यापि दृग्गोचर इति शोभना कल्पना कवेः।

जनकदुहितरमिति—

जनकदुहितरं देवीं विहाय इह भुवने तथाप्रभावं अपरं जनमहं न विलोकयामि या पटान्तसमीरणैः मे शरीरं स्पृशति।

जनकदुहितरं जनकस्य मिथिलापरिवृढस्य दुहिता सुता सीता ताम्, देवीं दिव्यगुणशालिनीं विहाय परित्यज्य तां विनेत्यर्थः। तथाप्रभावं तादृशप्रभाववन्तं अलौकिकसामर्थ्योपेतमित्यर्थः, अपरं द्वितीयं जनम्। स्त्रीपुरुषसाधारणो जनशब्दो व्यक्तिपर्यायः। इह भुवने सकलेऽपि भूमण्डले न विलोकयामि पश्यामि, या पटान्तसमीरणैः पटप्रान्तजनितैः पवनैः मे मम शरीरं स्पृशति वीजयति। तथा प्रभाववत्त्वे सति स्त्रीत्वे सति पटान्तसमीरणेन रामशरीरे वीजनत्वं केवलं सीतायामेवोपपद्यते नान्यत्रेति रामस्य बलवती आस्था सतीरत्ने जानक्याम्। मायाविनी तिलोत्तमा महाप्रभावापि सीताभूमिकया रामवञ्चनार्थमेवोद्युङ्क्ते, महाप्रभावो रामहितपरो वाल्मीकिर्नरः सपर्याभाजनञ्च रामस्य, अपरा नार्यो न तथाप्रभावाः यद्यपि रामस्य शरीरं पवनेन वीजितुं समर्थाः। सर्वथा तु गुणत्रितयं सीतायां पर्यवस्यतीत्यदृश्यमानामपि सीतां हृदयनिहितैरेभिर्लक्षणै र्लक्षयति ॥ १८ ॥

उन्मीलयन् विकासयन् समुद्घाटयन्निति यावत्। अनवरत......दृश्यते—इति,

रा— (उत्तरीयं पतितमवलोक्य) कथमुत्तरीयमात्रमेव पश्यामि, न
पुनः परिधानकम्।

अन्यांशुकमतिरभसादविमृश्यविधायिना मयाकृष्टम्।

---

अनवरतं यद् बाष्पं ऊष्माश्रु। 'बाष्पमूष्माश्रु'—इत्यमरः। तेन पिहितस्य आच्छन्नस्य लोचनस्य नयनस्य भावस्तया। अश्रुप्लुता दृष्टिर्निरुध्यते न च शक्नोति किमपि द्रष्टुम्। अत एव कालिदासो मेघदूते—

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया-
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितै र्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः॥ इति॥

भारविरपि—

'तुषारलेखाकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः।
अगूढभावापि विलोकने सा न लोचने मीलयितुं विषेहे'॥

इति। 'अश्रुणोर्दृष्टयावरकत्वेपि तन्निपातस्यामङ्गलत्वात्तन्निर्वर्तकं निमीलनं सा न चकारेत्यर्थः—' इति च तत्र बभाण कोलाचलसूरिर्मल्लिनाथः।

एनं पटान्तमित्याशयः। अपकृष्य आकृष्य। अपनयामि दूरीकरोमि तदाधारादिति भावः, स्वस्य तु समीपमेव प्रापयिष्यति।

परकीयेण परस्य वस्तुना। प्रणयः प्रेमा। 'प्रणयास्त्वमी। विश्रम्भयाच्ञाप्रेमाणः'—इत्यमरः। कोविदस्य विज्ञस्य, कोपितस्येति पाठे रोषितस्य। उत्तरीयं पतितमवलोक्येति-अद्यापि सीताप्रावरणं रामेण न दृष्टमभूत्, तेन कृष्टं तया च मुक्तं पुनर्भूतले पतितं सीतया निस्सङ्गतां गतं तु रामस्य दृग्गोचरमभूदिति महान् प्रभावो वाल्मीकेः। महती च कल्पनाप्रौढिः कवेर्दिङ्नागस्य।

परिधानकं परिधातारम्। विचित्रः प्रयोगः किलायम्, नहि कोषेषु परिधानकशब्दो दृश्यते, परिधानं वस्त्रं परिधीयते इति, तदेव परिधानकमित्येवं रूपस्तु प्रयोगो न दुर्लभ इत्यन्यदेतत्। अन्यांशुकेति—

अविमृश्यविधायिना मया अतिरभसात् आकृष्टं ज्योत्स्नानिर्मोकललितं इदं अन्यांशुकं गगनतलात्परिगलितमित्यन्वयः।

अविमृश्यविधायिना अविचार्यकारिणा, परकीयवस्त्राकर्षणरूपं न नाम मम शोभते चापलमिदमिति न गणितम्। पटप्रान्तेन वीजयन्त्याः कस्याश्चिद्वस्त्रापहारः प्रत्युपकरणस्थले बलवानपकारो न मादृशेन कार्य इति नाकलितम्। मया तु बाष्पनिरुद्धनयनेन वा मुनिप्रभावाद्वा न शक्या ऽवलोकयितुं तथापि न सा परिधात्री सर्वेषामेव दृशामगोचरा विशेषेण तु समानजातीयतया नारीणामिति नैवावधारितम्। उत्तरीयसहिता याऽऽगता सैव तेन विना गच्छन्ती तिष्ठन्ती वा कथं न ह्रेपिष्यते इति

गगनतलात्परिगलितं ज्योत्स्नानिर्मोकललितमिदम् ॥१६॥

( पुनर्निर्वर्ण्य ) किमपरमकस्मादेवासमीक्ष्यकारिणमात्मानमवगच्छामि । सुव्यक्तं तयै ( दे ) व चित्रकूटवनदेवतया मायावत्या प्रदर्शितम्—

द्यूते पणः प्रणयकेलिषु कण्ठपाशः
　　क्रीडापरिश्रमहरं व्यजनं रतान्ते ।
शय्या निशीथकलहे हरिणेक्षणायाः
　　प्राप्तं मया विधिवशादिदमुत्तरीयम् ॥ २० ॥

---

नैव विचारितमिति रामस्याविमृश्यकारितायां न कश्चन सन्देहः । मया रामेण अतिरभसात् अतिवेगात् । 'रभसो वेगहर्षयोः'--इति विश्वः, अतिचापल्यादिति तात्पर्यम् । आकृष्टं सत्, ज्योत्स्नानिर्मोकललितमिति—ज्योत्स्ना चन्द्रिका, निर्मोकः कञ्चुकः सर्पत्वगिति यावत्, तद्वत् ललितं सुन्दरम् । ज्योत्स्नायां यो निर्मोकः चन्द्रिकया भूयोऽपि धवलतां नीतः कञ्चुकस्तद्वत् ललितमिति वा व्याख्येयम् । एतेनोत्तरीयस्य धावल्यं सौक्ष्म्यञ्च व्यज्यते । इदं पुरोगतं अन्यांशुकं अन्यस्य अन्यस्या वा स्वतो भिन्नस्य भिन्नाया वा अंशुकं वस्त्रं संव्यानरूपम्, गगनतलाद् विहायसः परिगलितं परिभ्रष्टं पतितमिति यावत् ॥ १६ ॥

किमपरं......अवगच्छामि—इति, चापलमपि कदाचित् सत्फलं प्रसूते, यतोऽसमीक्ष्यकारित्वस्य फलं मया प्रियाया उत्तरीयरूपं समधिगतमिति भावः । सुव्यक्तं नूनम् । तयैव सीतयैव, तदेव सीताया इति वा यथामति यथापाठं व्याख्येयम् ।

द्यूते इति--द्यूते पणः, प्रणयकेलिषु कण्ठपाशः रतान्ते क्रीडापरिश्रमहरं व्यजनम्, निशीथकलहे शय्या, हरिणेक्षणायाः इदं उत्तरीयं मया विधिवशात् प्राप्तम् ।

द्यूते कैतवे पणः ग्लहः, लाप्यमानं वस्त्विति यावत् । 'पणोऽक्षेषु ग्लहः'—इत्यमरः । तथा च भारविः—

दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः ।
नीतानि पणतां नूनमीदृशी भवितव्यता ॥ इति ।

प्रणयकेलिषु नर्मक्रीडासु कण्ठपाशः उद्बन्धनार्थमुपादीयमानत्वात् पाशरूपता । रतान्ते सुरतावसाने क्रीडापरिश्रमहरं रतिक्रीडया जातस्य श्रमस्य निवारकं व्यजनं व्यजनरूपत्वेनोपयुक्तमनेकशः । निशीथकलहे दम्पत्योः कलहे संवृत्ते रात्रौ तदेवोत्तरीयं शय्या शयनीयत्वेनानेकदा परिकल्पितं सीतया । हरिणेक्षणायाः मृगलोचनायाः सीतायाः, इदमुत्तरीयं मया विधिवशात् दैवगत्या प्राप्तं समुपलब्धम् । एतदेव पद्यं भोजदेवेन 'शृङ्गारप्रकाशे' स्थल द्वये ( नवमे, त्रयोदशे च प्रकाशे ) समुद्धृतं दृश्यते । महानाटके च ॥ २० ॥

सी—दिट्ठिआ अहिएणादं अंअउत्तेए। (क)

रा—कीदृशमिदानीमस्य प्रियावल्लभस्य सम्मानविशेषमनुतिष्ठामि [ विचिन्त्य ] भवतु अयमेवास्यानन्यसाधारणः सम्मान-विशेषः। [ प्रावृणोति ] [ आत्मानं प्रावृत्य अवलोक्य ] द्वितीयप्रावरणं मामवलोक्य किमपि चिन्तयिष्यति मुनि-जनः। तस्मादात्मीयमुत्तरीयं परित्यजामि [ इति उत्क्षिपति ]

सी—( गृहीत्वा सहर्षम् ) पिअं मे संवुत्तं चिरजीविदाए फलं। ( आघ्राय ) दिट्ठिआ असंकंतविलेवणामोअं अंअउत्तस्स[1] उत्तरीअं। सव्वहा सच्चसंधा राहवा। ( प्रावृत्य ) अम्हे एदं पिअजणसंसग्गसुहप्परिसं उत्तरीअं पावरिअ अंअउत्तवच्छ-त्थलपरिस्संतं विअ अविरलसमुब्भिण्णरोमंचणिरंतरं अत्ताणं उव्वहामि। ( ख )

रा—( सविस्मयम् ) यथैतदुत्तरीयमप्राप्तमहीतलमेव केनाप्यपहृतं तथा जनामि प्रत्यासन्नफलो मे मनोरथः इति। ( विचिन्त-यन् ) उत्तरीयापहारो जलच्छायायां दृश्यते, न सीता; किमे-तत् ? भवतु सिद्धाश्रमवासिभ्यो जनेभ्योऽस्याः प्रभावो भविष्यति। तत्कोनु खल्वस्याः प्रत्यासन्नदर्शनेऽभ्युपायः। अयि वैदेहि। न किञ्चित् स्मरसि कस्यचित् पूर्ववृत्तान्तस्य, यन्मामेवं दर्शनमात्रेणापि न सम्भावयसि।

सी—अज्जवि कीदिसो पूव्ववुत्तन्तो। [ग]

---

[क] दिष्ट्या अभिज्ञातमार्यपुत्रेण।

[ख] प्रियं मे संवृत्तं चिरजीवितायाः फलम्। [—] दिष्ट्या असङ्क्रान्तविलेपनामोदमार्यपुत्रस्योत्तरीयम्। सर्वथा सत्यसन्धा राघवाः। [ — ] अहो एतत् प्रियजनसंसर्गसुखस्पर्शमुत्तरीयं प्रावृत्यार्यपुत्रवक्षःस्थलपरिश्रान्तमिवाविरलसमुद्भिन्नरोमाञ्चनिरन्तर-मात्मानमुद्वहामि।

[ग] अद्यापि कीदृशः पूर्ववृत्तान्तः।

---

अभिज्ञातं पूर्वदृष्टस्यानुभूतस्य वा वस्तुनः पुनः सम्प्रत्ययोऽभिज्ञा, तद्विषयता-मापादितमित्यर्थः। सम्मानविशेषं विशिष्टं सत्कारम्। द्वितीयप्रावरणं प्रावारकयुगल-वन्तम्।

'प्रियं मे—इति पृथक् 'संवृत्तं चिर जीवितायाः फलम्'—इति च पृथक् कल्प-

---

१ मूलपुस्तके 'अंअउत्तस्य'—इति पाठः प्रामादिकः।

रा—अविदितमनुसृत्य चित्रकूटे
सुतनु सुमापचयाय निर्गतां त्वाम् ।
कुसुममपाचितं विकीर्य भूमौ
स्मरसि रसेन मया धृतं पटान्तम् ॥ २१ ॥

सी—[विहस्य] साहसिअ अदो एव्व दूरे परिहरिअसि । (क)

(क) साहसिक, अत एव दूरे परिह्रियसे ।

नीयम् । प्रियस्य रामस्योत्तरीयकप्राप्तिः सीतायाः परितोषहेतुः । असङ्क्रान्तविले-पनामोदामिति—असंक्रान्तो विलेपनस्य आमोदो यस्मिन् तत्, शृङ्गारार्थं कामिभिः क्रियते चन्दनादिना विलेपनं गात्रस्य, तदीयः परिमलश्च वाससि सङ्क्रमते । इदमुत्तरीयकं तु तादृशामोदहीनमिति रामस्य शृङ्गारानपेक्षा विरहावस्थोचिता सीताया नितरां सम्मता ।

सत्यसन्धाः सत्यप्रतिज्ञाः । 'सन्धा प्रतिज्ञा मर्यादा'—इत्यमरः । मम परित्यागकाले लक्ष्मणेन यत्संदिष्टं रामो दारान्तराहरणनिस्पृहमानस इति तत्सर्वथा सत्यमेव परिणतमिति भावः । राघवाः 'रघुकुलकुलीनाः क्षितिभुजः—' इति मुरारिः । अविरलसमुद्भिन्नरोमाञ्चनिरन्तरमिति—अविरलः संहतः समुद्भिन्नः समुद्भूतो यो रोमाञ्चस्तेन निरन्तरं अन्तरशून्यम्, रोमाञ्चितसकलगात्रेत्यर्थः । उत्तरीयापहारो जलच्छायायां दृश्यते—इति, रामेण यदुत्तरीयमुत्क्षिप्तं तत्सीतयाऽन्तराले धृतम् । भूमितलस्पर्शस्तस्य नाभूत् । रामतो वियुक्तं यावत्सीतया न सङ्गतं तत्तावद् दृष्टिगोचरमासीत् । यदा पुनः सीतया तद्धृतमनालक्षितहस्तकमलया तदापि तदीया छायाऽनवधानतया दीर्घिकाजले सङ्-क्रान्ता । ततश्च रामानुभवः । अविदितेति—सुतनु । चित्रकूटे सुमापचयाय निर्गतां त्वां अविदितमनुसृत्य अपचितं कुसुमं भूमौ विकीर्य मया रसेन पटान्तं धृतं स्मरसि ।

सुतनु, शोभना तनुः शरीरं यस्याः तत्सम्बोधने । चित्रकूटे तदाख्ये पर्वते, सुमापचयाय सुमानां कुसुमानां अवचयाय, कुसुमान्यवचेतुमित्यर्थः । तथा च भट्टिः—

'गतास्यादवचिन्वाना कुसुमान्याश्रमद्रुमान्' । इति । निर्गतां प्रयातां त्वाम् अविदितं त्वयेति शेषः, क्रियाविशेषणमिदम् । निभृतं यथा स्यात्तथा त्वामनुसृत्य अनुगम्य अपचितं कुसुमं अवचितं पुष्पनिकरं भूमौ भूतले विकीर्य क्षिप्त्वा रसेन भावोद्रेकेण—तथा च बाणः कादम्बरीप्रस्तावनायाम्—

'रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव' । इति ।

मया तव पटान्तं धृतं स्वकरेण समालम्बितं यत् तत् त्वं स्मरसि किम् ॥२१॥

रा—कथं न किञ्चिदपि प्रतिवचनं प्रयच्छति ?

सी—आसण्णा मम दिअहावसाणवेला । ण जुत्तं अ एतावत्थं गदं अअउत्तं देवदादुदिअं कदुअ अपक्कमिदुं। ता किं एत्थ करइस्सं । ( दिशोऽवलोक्य ) दिट्ठिआ एसो पिअवअस्सो कोसिओ किंवि अण्णेसंतो विअ कोदूहलसमावेसणिक्खित्तलोअणो इदो एव्व आअच्छइ, ता ओसरिस्सं । ( निष्क्रान्ता ) [क]

[ ततः प्रविशत्यन्वेषमभिनयन् विदूषकः ]

वि—कहिं णु खु तत्तभवं भविस्सदि राआ। [ परिक्रम्यावलोक्य च ] एसो पिअवअस्सो चिन्ताउलो विअ णिहुदमणोहराए आकिदीए दीहिआतीरं अलंकरेइ, ता उवसप्पिस्सं । [ उपसृत्य ] जेदु भवं। [ख]

रा—[ विलोक्य ] दिष्ट्या प्रियवयस्यः कौशिकः प्राप्तः । वयस्य कौशिक ! कुतो भवान् ?

वि—अज्ज सूरोदअप्पहुदि मम तुमं अण्णेसमाणस्स सअलो दिअहो अदिक्कंदो। [ग]

रा—किङ्कृतोऽयमस्मदन्वेषणे भवतः प्रयासः ?

---

(क) आसन्ना मम दिवसावसानवेला। न युक्तं चैतदवस्थां गतमार्यपुत्रं देवताद्वितीयं कृत्वापक्रमितुम्। तत् किमत्र करिष्यामि । [—] दिष्ट्या एष प्रियवयस्यः कौशिकः किमप्यन्विष्यान्निव कौतूहलसमावेशनिक्षिप्तलोचन इत एवागच्छति। तदपसरामि ।

[ख] कुत्र खलु तत्रभवान् भविष्यति राजा। [ — ] एष प्रियवयस्यश्चिन्ताकुल इव निभृतमनोहरया आकृत्या दीर्घिकातीरमलङ्करोति। तदुपसर्पामि। [ — ] जयतु भवान्।

[ग] अद्य सूर्योदयप्रभृति मम त्वामन्वेषमाणस्य (?) सकलो दिवसोऽतिक्रान्तः।

---

साहसिकेति—साहसे प्रसृतः साहसिकः । साहसं पुनरिहा विमृश्यकारिता । तथा च हैमः—'साहसं तु दमे दुष्करकर्मणि । अविमृश्यकृतौ धार्ष्ट्य—इति । परिहियसे दूरतस्त्यज्यसे । एतच्च प्रणयानुसारेण ।

देवताद्वितीयमिति—देवता द्वितीया यस्य तम्, देवतासहायं केवलमेकाकिनमित्यर्थः ।

---

१ 'अन्वेषयमाणः'—इति सुवचम् ।

वि—सुदं मए पहादए समए अदिमुत्तमंडपब्भंतरे पच्चएणट्ठिदेण विस्सद्धपउत्तसंकहाणं मुणिकरणाआणं अच्छराणं वि मुहादो किंवि तवोवणरहस्सं मंतिअमाणं । तं तुह अप्पिअं आसी। अब्भंतरट्ठिदं विअ गूढगब्भं अहिअदरं बाहेइ । ( क )

रा—कीदृशं तपोवनरहस्यम् ?

वि—भो किं ण जाणासि तत्तहोदी—( ख )

रा—( कर्णौ पिधाय ) स्त्रीसम्बद्धमेव तद्रहस्यम्, तदलमनेन श्रुतेन ।

वि—माभयाहि, रामवअस्सो खु अहं । ण जाणासि तत्तहोदिं पुराणसग्गदासिं—( ग )

रा-(आत्मगतम्) देवगणिकासम्बद्धैषा कथा,न कश्चिद्दोषस्तदाकर्णने । ( प्रकाशम् ) कतमासौ पुराणस्वर्गदासी किमुर्वशी किं तिलोत्तमा । [2]

(क) श्रुतं मया प्राभातिके समयेऽतिमुक्तमण्डपाभ्यन्तरे प्रच्छन्नस्थितेन विस्रब्धं प्रवृत्तसङ्कथानां मुनिकन्यकानामपसरसामपि मुखतः किमपि तपोवनरहस्यं मन्त्र्यमाणम् । तत् तव च [अ] प्रियमासीत् । अभ्यन्तरस्थितमिव गूढगर्भमधिकतरं बाधते ।

(ख) भोः किं न जानासि तत्र भवती—

(ग) माभीः, रामवयस्यः खल्वहम् । न जानासि तत्र भवतीं पुराणस्वर्गदासीम्—

येन प्रदोषे कान्तारमध्ये देवी सीता परित्याजिताऽन्तर्वत्नी तस्यैव रामस्य

१ 'अतिमुत्तु'—इति मूलपुस्तके पाठः ।

२ वि–हे राम, पिअवयस्स, रामत्ति खणे खणे अलिअमहुरेहिं वअणेहिं आउलयसि । (हे राम प्रियवयस्य, रामेति क्षणे क्षणे अलीकमधुरैर्वचनैराकुलयसि)। रा–किं तिलोत्तमा?

'वि—हे राम–इत्यारभ्य रा—किं तिलोत्तमेत्यन्तोऽपपाठोऽप्रासङ्गिकश्च। न हि रामेण स्वयमेव हे राम, प्रियवयस्य रामेति क्षणे क्षणे उद्घुष्टं क्वचित् न च तदुद्घोषः समीचीनः। अप्रासङ्गिकस्य ग्रन्थस्यास्य समावेशः सर्वथापि शोचनीयः। सम्पादकयुगलेन कथमक्षिनिमीलनपुरस्सरं समादृतोऽयमिति न शक्यते विज्ञातुम् । कतमासौ पुराणस्वर्गदासी किमुर्वशी किं तिलोत्तमेति रामप्रश्नस्य न जानामि किं तिलोत्तमा सिलोत्तमेति सर्वथा युक्तमुत्तरम्, तत्र सन्दर्भस्यास्याप्रासङ्गिकत्वे न बहु वक्तव्यमस्माभिः।

वि—ण आणामि किं तिलुत्तमा सिलुत्तमेत्ति। सा किल तत्तहोदीए चिरकालविउत्ताए विदेहराअतणआए चरिदं अणुचिट्ठिय पिअवयस्सं उपहसिदुं इच्छइ। (क)

रा—(आत्मगतम्) कष्टं सम्यगुपलक्षितं कौशिकेन। अन्यथा हि दृश्यमाने प्रियासन्निधानाभिज्ञाने स्वयं न दृश्यत इत्यसम्भाव्यमेतन्मानुषीषु। सर्वथा वञ्चितोऽस्मि कामरूपिण्या तिलोत्तमया।

(क) न जानामि किं तिलोत्तमा सिलोत्तमेति। सा किल तत्र भवत्याश्चिरकालवियुक्ताया विदेहराजतनयायाश्चरितमनुष्ठाय प्रियवयस्यमुपहसितुमिच्छति।

कृते ईदृशो रक्षाविचारक्रमः सीमन्तिनीनां मूर्धन्यत्वेन सीताया आलेखनं कवेः प्रतिपादयति।

अपक्रमितुं चौर्येण दूरमपसर्तुमित्यर्थः। कौशिकः—नायं विश्वामित्रो गाधिपुत्रः कौशिकः, अपि तु कश्चिदन्यो यदृच्छया कविकल्पितनामरूपः।

सूर्योदयप्रभृति—सूर्योदयादारभ्य। सूर्योदयात्प्रभृति इति तु सुवचम्, अव्ययस्य 'प्रभृति' पदस्य पञ्चम्यन्तपदोत्तरतैव दृश्यते अव्ययपरता वा। तथाच—'शैशवात्प्रभृति पोषितां प्रियाम्'—इत्युत्तरे रामचरिते भवभूतिः। ततः प्रभृति, अतः प्रभृति—इत्येवमाद्या प्रयोगाः। अद्य प्रभृति इत्यत्र तु अद्येत्यव्ययम्—यत्—सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु। वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्। इत्यविभक्तिकमपि पञ्चम्यन्तमेवेति ध्रुवम्। कालिदासोऽपि—

> ततः प्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ।
> व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्त्ववृत्ति॥ इति,

ततश्च 'सूर्योदयप्रभृति' इत्यत्र पञ्चमीसमासो वेदितव्यः। सूर्योदयात्प्रभृति इति च विग्रहः। प्रयासः परिश्रमः।

अतिमुक्तामण्डपाभ्यन्तरे—इति, अतिमुक्तमण्डपाभ्यन्तरे इति तु सुवचम्। अमरेण अकारान्तः पुंलिङ्गः शब्द आदृतः। तथा हि—'अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवी लता-इति' कुन्दभेदस्य पञ्च पर्यायान् संदृब्धवान् सौ। 'अतिमुक्तस्तु निस्सङ्गे वासन्त्यां तिनिशेऽपि च'—इति मेदिनीकारः। रन्तिदेवोऽपि-'वैशाखे माधवः कृष्णे माधवी चातिमुक्तके'—इति। आकारान्तस्त्वतिमुक्त

तृषितेन मया मोहात् प्रसन्नसलिलाशया।

---

शब्दो नास्माकं विदितः। कालिदासोऽपि—'त्वमतिमुक्तलताचरितं मयि'—इति प्रयुक्तवानकारान्तमेवेतिदिक्। अतिक्रान्तो मुक्तां शौक्ल्यादिति अतिमुक्तकस्तत्सहितो यो मण्डपः जनाश्रयः। 'मण्डपोऽस्त्री जनाश्रयः'—इत्यमरः। तस्याभ्यन्तरे अन्तःप्रदेशे। प्रच्छन्नस्थितेन प्रच्छन्नः आवृतो निगूढ इति यावत्, यथा कश्चिन्नावलोकयेदिति। स्थितश्च आसीनश्च, आत्मानं तिरोधायावस्थितेनेत्यर्थः, विस्रब्धप्रवृत्तसङ्कथानाम्—विस्रब्धमविशङ्कं प्रवृत्ता संकथा संलापो यासाम्। रहस्यं निगूढाभिप्रायः। 'तत् तव अप्रियमासीदिति पाठोऽस्मद्धृदयङ्गमः। नहि तिलोत्तमया प्रवञ्चनं रामस्य प्रियं भवितुमर्हति। अभ्यन्तर······बाधते—इति, तादृशं रहस्यं विदित्वा यावन्न रामस्य सङ्क्रामयेत् तत्, तावदुदरम्भरेर्विदूषकस्य परमदुःखावहम्। न विदूषकसदृशा रहस्यं गोपायितुमलम्। अतएव शकुन्तलाविषये पूर्वमुक्त्वाप्यनवधानवशात् पुनस्तद्वचनजातसंहारे कृतः प्रयत्नो दुष्यन्तेन। यत्रेदमुक्तम्—

'क्व वयं क्व च शान्तमन्मथो मृगशावैः सममेधितो जनः।
परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः'॥ इति।

कर्णौ पिधायेति—परस्त्रीसम्बद्ध आलापोऽपि रामेण सर्वथा परिवर्ज्यते इत्यहो शमोत्कर्षः। परस्त्रीकथाश्रवणे तु मैथुनायितमेव स्यात्। तथा चोक्तम्—

'श्रवणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्य मेतदेवाष्टलक्षणम्'॥ इति।

माभीरिति—मा भैषीरित्यर्थः।

रामवयस्यः रामस्य सखा। 'सहचारी विजानाति चरित्रं सहचारिणः'—इति, यथा त्वं परस्त्रीकथाविमुखस्तथा जानाम्येव, तेन न मया परस्त्रीसम्बन्धे किमप्यालपनीयमिति तात्पर्यम्। पुराणस्वर्गदासीमिति—पुराणा चासौ स्वर्गदासी च ताम्। पुराणा पुरातना स्वर्गदासी स्वर्वेश्या, यद्वा पुराणस्य यः स्वर्गः, पुराणे वर्णितः तस्य दासीति। देवगणिकासम्बद्धेति—देवानां त्रिविष्टपवासिनां गणिका वेश्या तया सम्बद्धा तन्निबन्धना। 'वारस्त्री गणिका वेश्या रूपाजीवा'—इत्यमरः। गणः समूहोऽस्त्यस्याः भर्तृत्वेनेति गणिका। कथा वार्ता। किमुर्वशीति—स्वर्वेश्यानामुर्वशी अभिरूपभूयिष्ठेति तस्याः प्रथमोपादानम्।

अञ्जलिर्विहितः पातुं कान्तारमृगतृष्णिकाम् ॥ २२ ॥
( उत्तरीयमवलोक्य ) कथमुत्तरीयमपि निर्मितमति—
मायाविन्या। अहो परवञ्चनायामतिमहन्नैपुणम्।
वि—भो वयस्य! विलक्खमुहो विअ दीससि। किं ताए वंचिदोसि? (क)

---

(क) भो वयस्य, विलक्षमुख इव दृश्यसे। किं तया वञ्चितोऽसि ?

---

चरितं भूमिकाम्। अनुष्ठाय आश्रित्य।

उपलक्षितं विज्ञातम्। प्रियासन्निधानाभिज्ञाने—प्रियायाः सीतायाः सन्निधानं समीपेऽवस्थानं तस्य अभिज्ञानं सूचकं चिह्नं तस्मिन्। कामरूपिण्या यथामति रूपान्तरधारिण्या। कामस्य रूपमिव रूपं यस्याः सा तिलोत्तमा सौन्दर्यातिशयेन रतिसहचरमतिशयाना न तथा व्याख्यायते इत्यास्तां तत्। दीर्घिकाजले छायागता रामदुकूलापहारिणी परिष्वङ्गेण रामगात्रस्य दूषिका नूनं सा तिलोत्तमा न सीतेति सन्धार्य वचनमिदम्—तृषितेनेति—

तृषितेन मया प्रसन्नसलिलाशया मोहात् कान्तारमृगतृष्णिकां पातुं अञ्जलिः विहितः।

तृषितेन पिपासितेन मया प्रसन्नसलिलाशया प्रसन्नं निर्म्मलं यत् सलिलं पानीयं तस्य आशया तृष्णया। 'आशा ककुभि तृष्णायाम्'—इति हैमः। मोहात् अज्ञानात् कान्तारमृगतृष्णिकां कान्तारे याऽनुभूयमाना मृगतृष्णा ताम्, कान्तारस्य कान्तारे वा यो मृगस्तस्य तृष्णिकामिति वा। पातुं अञ्जलिः करसम्पुटो विहितः रचितः। पिपासाकुलो मृगो घर्मभानुभानुभिः सन्तापितायां स्थल्यां सरसीप्रत्ययेन धावन्नितश्चेतश्च गच्छति न च जलं लभते। यथाहुः—

स्थलीनां दग्धानामुपरि मृगतृष्णामनुसरं—
स्तृषार्तः सारङ्गो विरमति न खिन्नेपि मनसि।
अजानानस्तत्त्वं न स मृगयतेऽन्यत्र सरसी—
मभूमौ प्रत्याशा न च फलति विघ्नं च कुरुते॥ इति॥

प्रतिच्छायातः परमार्थसीतालाभार्थं सर्वोऽपि यत्नो मे निष्फल इति भावः॥ २२॥

कथं.......मायाविन्या—इति, साम्प्रतं रामेण धृतमुत्तरीयं सीताया विद्यते इति तत्त्वम्। तिलोत्तमया मायामास्थाय प्रभावनिर्मितमेतद्दुकूलमित्यलीकभावना रामस्य। सीतां दुकूलं याचित्वापि तिलोत्तमया शक्यते धारयितुं तदिति नायं कल्पः समादृतः कविना, तथा सति स्वर्वेश्यामैत्रीकायाः सीतायाः सतीत्वापलापसम्भावना समुदियात्, सीताचापि रामवञ्चकतापदमियादिति रूपकवस्तुनिरूपणे नितरां निपुणो दिङ्नागः।

रा—वञ्चितः कृतोऽस्मि ।

वि—किं मए सुदं रहस्सं अएणहा होदि ? (क)

( नेपथ्ये )

सन्ताप्य लोकमखिलं निरवग्रहेण
तीव्रो नरेश्वर इव प्रथमं स्वधाम्ना ।
सोऽयं वयःपरिणतेरिव शान्ततेजाः
सायं मृदुर्भवति तिग्मरुचिः क्रमेण ॥ २३ ॥

रा—( निर्वर्ण्य ) अस्तं गच्छति भगवान् दिवाकरः ।

प्रियजनरहितानामङ्गुलीभिर्वधूना—
मवधिदिवससङ्ख्याव्यापृताभिः सहैव ।

---

(क) किं मया श्रुतं रहस्यमन्यथा भवति ?

---

नैपुणं कौशलं चातुर्यमिति यावत् ।

विलक्षमुखः विस्मयेनाश्चर्येणान्वितं मुखं यस्य स । 'विलक्षो विस्मयान्विते'—इत्यमरः ।

वञ्चितः कृतोऽस्मि—इति, न केवलं वञ्चितः अपि तु सीताप्रतिपत्त्युपशमान् नूनं सर्वस्वमेवापहृतं तिलोत्तमयेतिभावः ।

सन्ताप्येति—

सोऽयं तिग्मरुचिः निरवग्रहेण स्वधाम्ना अखिलं लोकं सन्ताप्य वयःपरिणतेः क्रमेण शान्ततेजाः तीव्रो नरेश्वर इव सायं मृदुर्भवति ।

सोऽयं तिग्मरुचिः तिग्मास्तीव्राः खरतराः प्रचण्डा इति यावत् रुचयो दीप्तयः रोचमानाः किरणौघाः यस्य स चण्डांशुः सूर्य इत्यर्थः, निरवग्रहेण निष्प्रतिबन्धेन स्वैरं प्रसृतेनेति यावत् । 'गजालिके वृष्टिरोधे प्रतिबन्धेऽप्यवग्रहः' इति रुद्रः । स्वधाम्ना स्वतेजसा अखिलं सकलं लोकं सन्ताप्य तापयित्वा क्रमेण शान्ततेजाः शान्तं तेजो यस्य स, सायं मृदुः सह्यातपो भवति । वयःपरिणतेरिव वयसः आयुषः परिणतेः परिणामात् परिपाकादिवेत्यर्थः शान्ततेजाः इत्येतेन सम्बध्यते । सायङ्काले स्वाभाविकी सूर्यातपमृदुता दिनैककस्यापगमात् वयसः परिणतिप्रयुक्तत्वेनोपचर्यते । क इव ? तीव्रः चण्डशासनो नरेश्वर इव नृप इव । सोऽपि स्वधाम्ना स्वप्रभावेण । 'धाम शक्तौ प्रभावे च तेजोमन्दिरजन्मसु'—इति विश्वः । अखिलं लोकं जनम् । 'लोकस्तु भुवने जने'—इत्यमरः । सन्ताप्य वयः परिणतेर्हेतोः क्रमेण शान्ततेजाः भवति । तथाचोक्तम्—

धातुषु क्षीयमाणेषु शमः कस्य न जायते । इति ॥ २३ ॥

प्रियजनरहितानां बधूनां अवधिदिवससङ्ख्याव्यापृताभिः अङ्गुलीभिः सहैव

व्रजति किरणमालिन्यस्तमेकैकशोऽस्मिन्
सरसकमलपत्रश्रेण्यः सङ्कुचन्ति ॥२४॥

अपि च,--

आकर्षात् प्रग्रहाणां नियमितगतयश्चोदितास्तोत्रपातै-
र्नैव स्थातुं न यातुं सचकितचरणाः सारथेः पारयन्तः।

---

अस्मिन् किरणमालिनि अस्तं व्रजति सरसकमलपत्रश्रेण्यः एकैकशः सङ्कुचन्ति।

प्रियजनरहितानां प्रियजनेन निजवल्लभेन रहितानां वियुक्तानां वधूनां जनीनां अवधिदिवससङ्ख्याव्यापृताभिः अवधिदिवसानां भर्तृप्रवासस्य अवधिदिनानां सङ्ख्यायां गणनायां व्यापृताभिः प्रवृत्ताभिः अङ्गुलीभिः सहैव अस्मिन् किरणमालिनि रवौ, किरणैरंशुभिर्मालते शोभते इति, तस्मिन् दिनमणौ अस्तं व्रजति गच्छति, सरसकमलपत्रश्रेण्यः सरसानां रसान्वितानां प्रत्यग्राणां अतएव मञ्जुलानां कमलपत्राणां नलिनदलानां श्रेण्यः पंक्तयः, एकैकशः क्रमेण सङ्कुचन्ति सङ्कोचमञ्चन्ति। नलिनीनां पत्रसङ्कोचो भर्तुः सूर्यस्य विरहजनितः। विरहिण्यो नार्यो भर्तॄणां प्रत्यागमनमुदीक्षमाणाः वासरान् गणयन्त्योऽङ्गुलीः स्वीया एकैकशः सङ्कुचन्ति, तद्वन्नलिन्यः क्रमेण पत्राणां स्वकानां सङ्कोचं कुर्वाणाः भर्तृविरहमनुशोचन्त्यो होरागणनापरत्वेनोत्प्रेक्ष्यन्ते विदग्धेन कविपुङ्गवेन। मुरारिणाप्येतदाकलितम्। तद्यथा—

'एकैकप्रभृतिक्रमेण गणनामेषामिवास्तं यतां
कुर्वाणा समकोचयद् दशशतान्यम्भोजसंवर्तिकाः।
भूयोऽपि क्रमशः प्रसारयति ताः सम्प्रत्यमूनुद्यतः
संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान्॥ इति।

'सन्ताप्ये'ति 'प्रियजने'ति च श्लोकद्वयस्यापि सम्मिलितं भावं कश्चिदेकस्मिन्नेव श्लोके समुपनिबद्धवान्। तथाहि—

कोऽत्र भूमिवलये जनान्मुधा तापयन्सुचिरमेति सम्पदम्।
वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः॥

अन्यच्च—अभिभूय सतामवस्थितिं जडजेषु प्रतिपाद्य च श्रियम्।
जगतीपरितापकृत्कथं जलधौ नावपतेदसौ रविः॥ इतिदिक् ॥२४॥

सारथेः प्रग्रहाणां आकर्षात् नियमितगतयः तोत्रपातैः चोदिताः सचकितचरणाः विधुराः तिग्मरश्मेः वाजिनः नैव स्थातुं न यातुं पारयन्तः विषमपरिसरादस्तशैलस्य शृङ्गात् दुर्विन्यस्तैः खुराग्रैः वारिराशिं कथमपि गाहन्ते।

सारथेररुणस्य प्रग्रहाणां रश्मीनां आकर्षात् आकर्षणाद्धेतोः नियमितगतयः नियमिता गति र्येषां ते, अथ च तोत्रपातैः तोत्रस्य पातैः पातनैः चोदिताः प्रेरिता जवेन

दुर्विन्यस्तैः खुराग्रैर्विषमपरिसरादस्तशैलस्य शृङ्गा-
द्गाहन्ते वारिराशिं कथमपि विधुरा वाजिनस्तिग्मरश्मेः ॥ २५ ॥

( इति निष्क्रान्ताः सर्वे )

इति चतुर्थोऽङ्कः।

---

धावितुम्, सचकिताः भयेन कम्पमानाः चरणाः पादा येषां ते अत एव विधुराः कष्टंगताः, तिग्मरश्मेः सूर्यस्य वाजिनः बलवन्तोऽश्वाः नैव स्थातुं न च यातुं गन्तुं पारयन्तः शक्नुवन्तः। अस्ताचलादवपत्य वारिराशौ गन्तव्यं सप्तसप्तिसप्तिभिः। अवपतनं नाटयन्तोऽहमहमिकया जवमादधानाः प्रस्खलेयुः स्यन्दनञ्च विनिपातयेयुरिति दीर्घदर्शिनो ऽनुभविनोऽनूरोः रश्मिनिकराकर्षणे समुद्योगः। तेन च वाजिनां स्यदे भग्ने नियमितगतिता। गतिमान्द्यातिशये पुनः संवृत्ते तोत्रपातैस्तेषां तोदनमप्यावश्यकम्। तथा सति वाजिनां धावेम तिष्ठेम वेति किङ्कर्त्तव्यत्वविमूढता सम्पद्यते इति तोत्रपातं भूयोऽपि प्रतिपदमाशङ्कमानाः सवेपथुचरणैः स्थातुं गन्तुं द्वयमपि ते न पारयन्तीति भावः। 'प्राजनं तोदनं तोत्रम्'—इत्यमरः। मुरारिरप्येवं जगाद—

'गगनशिखरमुदयाद्रेरधिरूढाः कष्टमर्करथहरयः।
अस्तमहीधरमधुना झटिति सुखेनावरोहन्ति ॥ इति।

सुखगामिन्यवपाते प्रजविता ननु प्रस्खलनजननी, अत एव नियन्त्रा कार्य एव प्रग्रहाकर्षः। तास्मिन् सति गतिमान्द्यम्, ततश्च भगवान् दिनकरो विश्राममपेक्षमाणो विलम्बितो माभूदिति तोत्रपातोऽप्याद्रियते इति सकृच्छ्रा स्थितिर्वाजिनाम्। अत एव ते विधुराः। 'विधुरं प्रत्यवाये स्यात् कष्टविश्लेषयोरपि'—इति विश्वः। अत्रार्गटः—

रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगाः
निरालम्बो मार्गश्चरणरहितः सारथिरपि।
रविर्गच्छत्यन्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणम् ॥ इति

तदलं पल्लवितेन, प्रकृतमनुसरामः। विषमपरिसरात् विषमो दन्तुरः परिसरः समीपवर्ती प्रदेशो यस्य तस्मात्, अस्तशैलस्य अस्ताचलस्य शिखरात् शृङ्गात् कूटादिति यावत्, दुर्विन्यस्तैः दुःखेन संस्थापितैः खुराग्रैः खुराणामग्रैः, निरालम्बे पथि विचरतां खुराग्राणां दन्तुरायां अस्ताचलभुवि न्यासो दुःखाकरः। वारिराशिं तोयनिधिं अवगाहन्ते। स्वतन्त्रस्यैकलस्य वाजिनो जलावगाहनेऽपि खुराणां विषमैव स्थितिः किम्पुनः स्यन्दने नियुक्तानामिति सर्वमवदातम् ॥ २५ ॥

इति श्रीपण्डितबाशिरामतनूजस्य वजीराबादपत्तनवास्तव्यस्य
जयचन्द्रस्य कृतौ सञ्जीवन्यां कुन्दमालाटीकायां चतुर्थोऽङ्कः
पर्यवसितः। शुभं भवतु।

# पञ्चमोऽङ्कः

( ततः प्रविशति विदूषकः )

वि—( नेपथ्याभिमुखमवलोक्य ) आसण्णो तपोधणाणं संपातस-
मओ, ता तुवरेदु भवं । ( क )

( ततः प्रविशति रामः )

रा—सवनमवसितं हुतं कृशाना
वुदयगतः समुपासितो विवस्वान् ।
इति विधिमवसाय्य वासरादौ
नियमधनानहमागतः प्रणन्तुम् ॥ १ ॥

वि—एदं अत्थाणमंटपं, पविसदु भवं । ( ख )

रा—( प्रविष्टकेन चिन्तां नाटयन् )
आ ! आश्चर्यमस्माकं किं वृत्तमतीतेऽहनि ?
अतिप्रसादादसतीव तस्मिन्
दृष्टा मया वारिणि पङ्कजाक्षी ।

---

( क ) आसन्नस्तपोधनानां सम्पातसमयः, तत् त्वरतु भवान् ।
( ख ) एतदास्थानमण्टपम्, प्रविशतु भवान् ।

---

'रङ्गभूमेर्बहिः स्थानं यत्तन्नेपथ्यमुच्यते'– इति भरतः ।
'नेपथ्यं वर्णिका क्षितिः'–इति च ।

आसन्नः समीपवर्ती । सम्पातसमयः सम्भूयागमनवेला ।

सवनेति—

सवनं अवसितम्, कृशानौ हुतम्, उदयगतः विवस्वान् समुपासितः, इति वासरादौ विधिमवसाय्य नियमधनान् प्रणन्तुं अहमागतः—इति योजना ।

सवनं स्नानं अवसितं निर्वृतम् । कृशानौ पावके हुतं आज्यमिश्रितचरुनिक्षेपः कृतः; उदयगतः उदयाचले स्थितः विवस्वान् ( भगवान् भुवनभास्करो ) भास्करः समुपासितः सम्यगर्चितः । इति एवं वासरादौ दिवसस्यारम्भे विधिं विधानम् । 'विधिर्विधाने दैवे च'—इत्यमरः । प्रातःकालिकं कृत्यमित्यर्थः, अवसाय्य समाप्य, नियमधनान् नियमः संयम एव धनं येषां तान् तपोधनान् प्रणन्तुं प्रकृष्टया भक्त्या नन्तुं अहमागतोऽस्मि ॥ १ ॥

आस्थानं संसद्, आसमन्तात्स्थीयतेऽत्रेति । 'समज्या परिषद्गोष्ठी सभासमितिसंसदः । आस्थानी क्लीवमास्थानं स्त्रीनपुंसकयोः सदः'—इत्यमरः । तस्य मण्टपं मण्डपं जनाश्रयः । 'मण्टप'मिति प्रान्तिकमुच्चारणं तत्रभवतः कवीश्वरस्य

लम्बालकं पाण्डुरपीनगण्डं
प्रसादरम्यं वदनं वहन्ती ॥२॥

अथवा विलोक्यते तिलोत्तमया कृतोऽयं परिहास इति।

तस्याः स्वहस्तरचितामिव कुन्दमालां
सादृश्यवन्ति सिकतासु पदानि तानि।

---

कस्यचिल्लेखकस्य वा। प्रविष्टकं प्रवेशः। वृत्तं जातम्। अतीतेऽह्नि गतदिवसे।

अतिप्रसादादिति—

अतिप्रसादात् असति इव तस्मिन् वारिणि लम्बालकं पाण्डुरपीनगण्डं वदनं वहन्ती पङ्कजाक्षी मया दृष्टेत्यन्वयः।

अतिप्रसादात् अतिनैर्मल्याद्धेतोः असति इव अविद्यमाने इव तस्मिन् वारिणि दीर्घिकाजले। तथा नाम विमलं पयः सरस्या यथा तत्सत्ता निपुणमीक्षमाणेनैव लक्ष्येति भावः। लम्बालकं लम्बाः सुदीर्घाः अलकाः केशा: यस्मिन्, पाण्डुरपीनगण्डं पाण्डुरौ श्वेतपीतौ पीनौ पीवरौ गण्डौ कपोलौ यत्र तत्। विरहवशात्तप्तचामीकरवर्णतास्थानिनि श्वेतपीततादेशः, भर्तुर्यज्ञमुद्दिश्य नैमिशे सम्प्राप्त्या तत्सान्निध्यव्यपेक्षया काले काले च तद्दर्शनावाप्त्या कृशावपि कपोलौ स्वभावतः पीवरौ भूयः पुष्टिमधिगतवन्तौ विज्ञेयौ। तादृशं वदनं मुखं कमलमिति च ध्वन्यते वारिसान्निध्यात्। वहन्ती धारयन्ती पङ्कजाक्षी कमलनेत्रा सीता मया दृष्टेत्यहो आश्चर्यम्।

वारिणि प्रतिबिम्बितस्य वदनस्य पीनगण्डता शक्या द्रष्टुं न पुनः पाण्डुरतापीति वयम् ॥ २ ॥

परिहास उपहासः।

तस्याः—इति,

देवगणिका तस्याः स्वहस्तरचितां इव कुन्दमालाम्, सिकतासु तानि सादृश्यवन्ति पदानि, छायां च येन विदधातु, हस्तपटान्तवातैः रामं कथं स्पृशति —इत्यन्वयः।

देवगणिका दिव्या वेश्या तिलोत्तमा तस्याः सीतायाः स्वहस्तरचितां निजकरेणोद्ग्रथितां इव सर्वथा सीताविरचितमाल्यसदृशीमित्यर्थः, कुन्दमालां विदधातु विरचयतु नाम। समानकौशलवशात्कुन्दमाला शक्या तथा समुद्ग्रथितुं तिलोत्तमयापीति भावः। सिकतासु बालुकासु तानि सादृश्यवन्ति सीतापदसदृशानि पदानि पादलक्ष्माणि सा तिलोत्तमा विदधातु। प्रायेण स्त्रीणां चरणसाम्यं दृश्यते तेन पादचिह्नमपि समानं स्यात्। छायां च विदधातु, स्त्रीत्वसामान्यादुच्छ्रायपरिणाहसाम्याच्च दीर्घिकाजले प्रतिबिम्बोपि तिलोत्तमायाः सीतासमो भवेदेव; एतावत्तु तिलोत्तमया

छायां च देवगणिका विदधातु येन
राम कथं स्पृशति हस्तपटान्तवातैः ॥ ३ ॥

[ चिन्तां नाटयति ]

वि—एसो सचिन्तो विग्र, अज्ज ता उपविसिअ निव्वन्धइस्सम्।
( उपविश्य ) भो भो वग्रस्स, मा तुमं एत्थ ठिदो खु कहिं ठिदो खु तुमं णवमेहासिणिद्धस्सामलो परिणद्धमुत्ताहारो अच्चंदसमुण्णद्धदुरारोहाणं इंदनीलमआणं भवणक्खंभाणं अण्णतमो विअ मम हिअअविब्भमं उप्पादेसि। ता एदस्स लक्खीणिवासभवणस्स सेवासमअसमुवागदसामंतणरिंदमहुरसद्दोपगीतस्स अत्थाणदासेरमंडपपुंडरीअस्स कण्णिआमंडले विअ एदस्सिं सिंहासणे महुमहणणाभीकमलकण्णिआसमारूढस्स भअवदो पिदामहस्स महत्तणं अधिक्खिवपंतो उववसिट्ठो होहि। (क)

(क) एष सचिन्त इव, अद्य तदुपविश्य निर्वन्धयिष्यामि। भो भो वयस्य, मा त्वमत्र स्थितः खलु कुत्र स्थितः खलु त्वं नवमेघस्निग्धश्यामलः परिणद्धमुक्ताहारोऽत्यन्तसमुन्नद्धदुरारोहाणामिन्द्रनीलमयानां भवनस्तम्भानामन्यतम इव मम हृदयविभ्रममुत्पादयसि। तदेतस्य लक्ष्मीनिवासभवनस्य सेवासमयसमुपागतसामन्तनरेन्द्रमधुरशब्दोपगीतस्यास्थानदासेरमण्टपपुण्डरीकस्य कर्णिकामण्डल इवैतस्मिन् सिंहासने मधुमथननाभीकमलकर्णिकासमारूढस्य भगवतः पितामहस्य महत्त्वमधिक्षिपन्नुपविष्टो भव।

शक्यं कर्त्तुमस्माभिश्च मन्तुम्, परं हस्तपटान्तवातैः रामं कथं स्पृशति, हस्ते वर्तमानस्य पटान्तस्य मारुतैः रामं निस्सङ्गं निस्पृहञ्च मां कथं स्पृशति सेति नैतच्छक्यमस्माभिरनुमातुमित्यर्थः। वारवनितानां तथोपसेवनादरोऽस्वाभाविको विशेषेण तु सर्वथा विषयवासनाविमुखनां जनानाम्। न केवलं हस्तपटान्तवातैरेव रामं स्पृष्टवती सीता समुपगूहनेनापि, परं तदानीमचेतनावशात् तद्विषये रामस्य सर्वथाऽज्ञानमेवावसेयम् ॥ ३ ॥

निर्बन्धयिष्यामि सविशेषं प्रार्थयिष्ये। यथा कालिदासीये रघुवंशे—
'निर्बन्धसञ्जातरुषार्थकार्श्यमचिन्तयित्वा गुरुणाहमुक्तः।
वित्तस्य विद्यापरिसङ्ख्यया मे कोटीश्चतस्रो दश चाहरेति' ॥ इति।
'निर्बन्धः प्रार्थनातिशयः'—इति च तत्र मल्लिनाथः। अत्रस्थितः खलु

१ 'दासेरे'—इति मूलपुस्तकस्थः पाठोऽनवधानमूलः।

रा—यथाह भवान् । ( उपविश्य चिन्तां नाटयन् )

अद्याहमभिनवसुखदुःखस्य सचेतन इवास्मि संवृत्तः । ( ध्यानमभिनीय हस्तं च हृदये निवेश्य )

आसीदियत्सु दिवसेषु निरस्तजाने-
नैराश्यलुप्तमनसो न सुखं न दुःखम् ।

---

कुत्र स्थितः खलु–इति, यत्र तत्रापि स्थितः, प्राकृतजनयोग्येषु स्थानेष्ववस्थितः सन्नित्यर्थः । नवमेघस्निग्धश्यामलः नवोऽभिनवो ऽसृष्टः, अतएव जलेन भृतो मेघो जीमूतः तद्वत् स्निग्धः श्यामलश्च चिक्कणः श्यामवर्णश्च । तथा च जगन्नाथः—

सन्त्येवास्मिन् जगति बहवः पक्षिणो रम्यरूपा-
स्तेषां मध्ये मम तु महती वासना चातकेषु ।
यैरूर्ध्वाक्षैरपि निजसखं नीरदं स्मारयद्भि-
श्चित्तारूढं भवति किमपि ब्रह्म कृष्णाभिधानम्' ॥ इति ।

परिणद्धमुक्ताहारः परिणद्धः आसञ्जितः मुक्ताभिरुद्ग्रथितो हारः मुक्ताकलापो येन स । अत्यन्तसमुन्नद्धदुरारोहाणामिति—अत्यन्तमत्यर्थं समुन्नद्धाः समुन्नताः विशाला इति यावत्, अतएव दुरारोहाः दुःखेनारोढुं शक्यास्तेषाम् । इन्द्रनीलमयानां इन्द्रनीलमणिविकाराणाम्—यथा रघुवंशे—

'ततो नृपेणानुगताः स्त्रियस्ता भ्राजिष्णुना सातिशयं विरेजुः ।
प्रागेव मुक्ता नयनाभिरामाः प्राप्येन्द्रनीलं किमुतोन्मयूखम्' ॥ इति ।

भवनस्तम्भानामन्यतम इवेति—प्रासादस्थूणानामेकतमः, तादृशारोहपरिणाहवत्त्वाच्छ्यामत्वाच्च रामस्य. इन्द्रनीलमणिखचितैः प्रासादस्तम्भैः साम्यम् । हृदयविभ्रमं चित्तविक्षोभम् । सिंहासनमनाद्रियमाणो यत्र तत्रावस्थितो न खलु नृपो रामः शोभते । यथाहुः —

' स्थानहीना न शोभन्ते केशा दन्ता नखा नराः ' इति । यत्रतत्रावस्थित्या प्रणयिनो विदूषकस्य मनस उद्वेजनं स्वाभाविकमेव । पुण्डरीकं श्वेतकमलम् । 'पुण्डरीकं सिताम्भोज'मित्यमरः । कर्णिकामण्डले—'कर्णिका करिहस्ताग्रे करमध्याङ्गुलावपि । क्रमुकादिच्छटांशेऽब्जवराटे........ इति मेदिनीकरः । अब्जवराटस्तु पद्मबीजकोषः । 'वराटकः पद्मबीजकोषे रज्जौ कपर्दके'—इति कोषः । मधु......आरूढस्य–इति, मधुमथनो विष्णुर्मधुसूदनः, तस्य या नाभी नाभिः, तत्र यत् कमलं पुण्डरीकं तस्य कर्णिका बीजकोषः तां समारूढस्य समारुह्य आसीनस्य । पितामहस्य परमेष्ठिनो ब्रह्मणः । महत्त्वं महिमानम् । अधिक्षिपन् न्यक्कुर्वन् । उपविष्ट आसीनः । सिंहासनस्थो भवेति विदूषकाभिप्रायः ।

आसीदिति—

छायादिदर्शनबलादधुना मनो मे
दुःखं सुखञ्च परिगृह्य पुनः प्रसूतम् ॥ ४ ॥

( चिन्तां नाटयति )

वि—( निर्वर्ण्यात्मगतम् ) अहो मे संपदं अभिप्पाअं लक्खइस्सम् । ( प्रकाशम् ) भो राअं, एदे आसनकेसरिणो गुरुदरभरुव्वेहणजादपरिस्समा विअ मुहविवरविणिग्गअमुत्ताकलावच्छलेन फेणधारं उव्वमंति, तह तक्केमि वाहुजुअलेण पुढवीं

---

इयत्सु दिवसेषु निरस्तजानेः नैराश्यलुप्तमनसः न सुखं न दुःखम् । अधुना छायादिदर्शनबलात् मे मनः दुःखं सुखं च परिगृह्य पुनः प्रसूतमित्यन्वयः ।

इयत्सु एतावत्सु दिवसेषु दिनेषु, सीतात्यागात्प्रभृति अद्य यावदित्यर्थः, निरस्तजानेः निरस्ता जाया यस्य तस्य निर्वासितपत्नीकस्य मम नैराश्यलुप्तमनसः नैराश्यं आशाराहित्यं तेन लुप्तं मनो यस्य तस्य, प्रदोषकाले कान्तारमध्ये परित्यक्ता सीता ध्रुवं प्रणष्टा न शक्या पुनर्द्रष्टुमिति नैराश्यस्वरूपम् ।

यथाह भवभूतिः—

'त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा,
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥ इति ।

तेन मनोऽपि नष्टप्रायमध्यवसायेष्वव्यापृतत्वात् । न सुखं न दुःखम्, 'अजायत'— इति शेषः । अधुना पुनः इदानीं तु छायादिदर्शनबलात् छायादेर्दर्शनस्य बलात्, दीर्घिकाजले दृष्टा छाया सीतायाः, आदिपदेन सैकते पदपङ्क्तिः, उत्तरीयम्, कुन्दमाला चोद्ग्रथिता संगृह्यन्ते। तद्दर्शनादेव मे मनः दुःखं सुखं च परिगृह्य परितो गृहीत्वा सुखदुःखाभ्यां संसृष्टमित्यर्थः पुनः प्रसूतं समुत्पन्नम् । यद्यपि मनस्तत्त्वं नित्यं लोपप्रसूत्यविषयमिति दार्शनिकाः । तथापि तीव्रनैराश्यस्य कृते कथञ्चिज्जीवनयात्रां निर्वहतो जनस्य सुखेषु विगतस्पृहस्य दुःखेषु चानुद्विग्नस्य धीरस्य समदर्शिनो मनो नष्टत्वेनोपचरितमिह । सुखदुःखयोरनुभवे पुनः प्रवृत्ते तु सुखार्थं स्पृहयमाणो दुःखपरिहाणाय च यत्नं चिकीर्षति जने अनुभूयते मनसः प्रवृत्तिरिति मनसः प्रसूतिर्व्यपदिष्टा ॥ ४ ॥

अभिप्रायं मनोगतमाशयम् । लक्षयिष्ये ज्ञातुं यतिष्ये कैश्चिदपि सङ्केतैरनवधानेन राममुखान्निर्गतैर्वचोभिस्तदीयं मनोगतमनुमास्यामीति भावः । आसनकेसरिणः, केसरः सिंहस्कन्धकेशराशिः, स विद्यते एषामिति केसरिणः, केशरिणो वा सिंहाः, आसनस्य केसरिणः, आसने वा ये केसरिणस्ते । आस्यतेऽस्मिन्निति आस-

हिअएण पुढवीदुहिदरं उव्वहंतो अदीव गुरुअरो संवु-
त्तोत्ति। (क)

रा—( आत्मगतम् ) सीताकथामुप ( दिश्य ) श्रुत्य कौशिको नूनं
जिज्ञासते; एष बालमित्रम्, तदस्मै यथास्थितं निवेदयामि।
( प्रकाशम् ) वयस्य, अस्त्येतत् स्मराम्यहमविच्छेदेन
वैदेहीम्।

वि—किं दोसदो आदु गुणदो ? (ख)

रा—न दोषतो नापि गुणतः।

वि—एदं उभयं उज्झिअ कहं सीमन्तिणीओ सुमरीअंति ? (ग)

रा—अन्यदम्पतीविषय एव कारणानुरोधी प्रेमावेशः,सीतारामयोस्तु
न तथा।

(क) अहो ! अस्य साम्प्रतमभिप्रायं लक्षयिष्ये। ( — ) भो
राजन्। एते आसनकेसरिणो गुरुतरभारोद्वहनजातपरिश्रमा इव
मुखविवरविनिर्गतमुक्ताकलापच्छलेन फेनधारामुद्वमन्ति, तथा तर्क-
यामि बाहुयुगलेन पृथिवीं हृदयेन पृथिवीदुहितरमुद्वहन्नतीव गुरुतरः
संवृत्त इति।

(ख) किं दोषत उत गुणतः ?

(ग) एतदुभयमुज्झित्वा कथं सीमन्तिन्यः स्मर्यन्ते ?

---

नम्। राजासनं सिंहासनमुच्यते सिंहैरधस्तादुह्यमानत्वात्। ते च सिंहाः काञ्चन-
मणिमया इति। मुख……छलेनेति, मुखस्य यद् विवरं कुहरं तस्माद् विनिर्गता
विनिर्याता ये मुक्तानां कलापाः समूहाः, मुक्ताभिर्विरचिता हारा वा 'कलापः संहतौ
वर्हे काञ्च्यां भूषणतूणयोः' इत्यजयः। 'चन्द्रे विदग्धे व्याकरणभेदेऽपि कथ्यते
बुधैः'—इति च मेदिन्यां विशेषः। परं भूषणत्वमविशेषेणैव व्यपदिष्टम्, अतः
कालिदासीयं पद्यमुद्ध्रियते—

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
अन्योन्यशोभाजननाद् बभूव साधारणो भूषणभूष्यभावः॥ इति

तस्य छलेन व्याजेन, शोभार्थं दंष्ट्रापङ्क्तिव्यपदेशाय वा मुखे निहितैर्मुक्ता-
गुच्छकैरित्यर्थः। उद्वमन्ति उद्गिरन्ति। बाहुयुगलेन पृथिवीमिति—पृथ्वीपरि-
वृढेन राज्ञा समालिङ्गनीयैव दोर्भ्यामसौ। अतएवाजमुद्दिश्य कालिदासः—

'क्षितिरिन्दुमती च भामिनी पतिमासाद्य तमग्र्यपौरुषम्।
प्रथमा बहुरत्नसूरभूदपरा वीरमजीजनत् सुतम्'॥ इति।

पृथ्वीदुहितरं सीताम्।

दुःखे सुखेष्वप्यपरिच्छदत्वा-
दसूच्यमासीच्चिरमात्मनीव।
तस्यां स्थितो दोषगुणानपेक्षो
निर्व्याजसिद्धो मम भावबन्धः ॥ ५ ॥

वि—मा सुमं वैदेहिं अलिअमहुरवअणेहिं अंहारिसं वंचेसि। सो खु तुमं देविं अन्तरेण। (क)

(क) मा सुमं वैदेहीमलीकमधुरवचनैरस्मादृशं वञ्चयसि। स खलु त्वं देवीमन्तरेण—

उपक्षिप्येति पाठः साधीयान्। सीताकथां संलक्ष्येत्यर्थः। उपश्रुत्येतिपाठे तु श्रुत्वाऽऽकर्ण्येत्यर्थो ज्ञेयः, विदूषकेण सीताकथा श्रुतैव मुनिकन्यकाभ्योऽप्सरोभ्यश्च। जिज्ञासते ज्ञातुमिच्छति। बालमित्रं बालसखा आशैशवान्मैत्रीमुपगतः। यथास्थितं यथार्थम्। उज्झित्वा त्यक्त्वा, गुणदोषावुभावपि परित्यज्येत्यर्थः।

कारणानुरोधी कारणमनुरुन्धानः, कारणपूर्वकः सहेतुक इति यावत्। प्रेमावेशः प्रीत्यतिशयः।

'दुःखे' इति—

दुःखे सुखेष्वपि अपरिच्छदत्वादसूच्यं ( यथा स्यात् तथा ) दोषगुणानपेक्षः निर्व्याजसिद्धः मम भावबन्धः तस्यां चिरमात्मनीव स्थितः आसीदिति योजना।

दुःखेषु सुखेष्वपि च अपरिच्छदत्वात् अतिरोहितत्वात्सुव्यक्तत्वादित्यर्थः। असूच्यं अप्रदर्शनीयं वाचा, अहं सीतायामत्यर्थं स्निह्यामीति वचसा प्रदर्शनानपेक्षीत्यर्थः। क्रियाविशेषणमिदम्, अत एव क्लीवता। यदाह—

द्वितीयान्तत्वकर्मत्वे क्लीबत्वञ्च तथैकता।
क्रियाविशेषणस्यैवं मतं सूरिभिरादरात्॥ इति।

दोषगुणानपेक्षः दोषान् गुणांश्चानपेक्ष्यावस्थितः, निर्व्याजसिद्धः कमपि व्याजं मिषं विनैव सिद्धः प्रतिष्ठितः, मम भावबन्धः प्रेमभावनारूपः, आत्मनि स्वस्मिन् यथावास्थितस्तथा चिरं तस्यां सीतायामप्यवस्थितः। यथाऽऽत्मा सर्वस्यापि प्रियः, सत्स्वपि दोषेषु न ग्लानिः, गुणेषु च नादरः, तथैव सीतापि रामस्य प्रियेति भावः॥ ५॥

सुमं कुसुमं, कुसुमेन सादृश्यं वैदेह्याः ताम्, अलीकवचनैः मिथ्याऽऽलापैः, अस्मादृशं मत्सदृशं जनं नित्यसहचरमित्यर्थः मा वञ्चयसि वञ्चितुं न यतस्वेत्यर्थः। अयम्भावः—उपरिष्ठात् प्रेमाणं प्रदर्श्य हृदये च परमां विरक्तिं सन्धार्य त्वया नीता दिवसाः कतिचन सीतया साकम्। अत एव देवीमन्तरेण सीतां विनापि तव

१ वैदेहिं २ अस्मादृशमिति चापपाठो मूलपुस्तके प्रामादिकः।

अपि च,—

गृध्रैराबद्धचक्रं वियति विचलितैर्दीर्घनिष्कम्पपक्षै-
र्धूमैर्ध्वस्ताकंभासां सघनमिव दिशां मण्डलं दर्शयन्तः ।
नन्दैरानन्दयन्तः पितृवननिलयान् प्राणिनः पश्य, चैतान्,
निर्वान्त्यद्यापि नैते स्रुतबहलवसावाहिनो हव्यवाहाः ॥ २८ ॥

राजा—अन्येनैवेदमनुष्ठितम् ।

पश्यन्तं राक्षसमनादृत्येत्यर्थः ( षष्ठी चानादरे इति षष्ठी ) हता विनाशिताः। क्रोधवशाद्दारुणप्रतिज्ञां विधाय शिखामुन्मुच्यैकरज्जुनिबद्धपशूनिव नन्दान् राक्षसं तिरस्कुर्वन् मदन्यो नैव कश्चिद्विनाशितवान् किन्त्वहमेवेत्यर्थः । त्वदुक्तराक्षसकृत्या-पेक्षयाऽस्मत्कृत्यस्यैव विशिष्टत्वादहमेव ततः प्रशस्य इति भावः । केनान्येन हता इत्युक्त्या मद्व्यतिरिक्तेन केनापि न हताः किन्तु मयैव हता इत्यर्थप्रतीत्यां पद्येऽ-स्मिन्नर्थापत्त्यलंकारः । पशव इवेत्यत्रेवशब्देन नन्दानामेकरज्जुसंयतपशुसादृश्यव-धनादुपमालङ्कारश्च ॥ ओजो गुणः । गौडी रीतिः । स्रग्धरावृत्तम् ॥ २७ ॥

गृध्रैरिति । वियति गगने आबद्धानि कृतानि चक्राणि चक्राकारवेष्टनानीत्यर्थः। तद्यथा स्यात्तथा विचलितैरुड्डीयमानैः दीर्घा निष्कम्पाश्च पक्षा येषां ते दीर्घनिष्कम्प-पक्षास्तैर्दीर्घनिष्कम्पपक्षैः आयतनिश्चलदलैः गृध्रैर्दाक्षाय्यैः ।

आतापि–चिल्लौ दाक्षाय्य–गृध्रावित्यमरः ।

तैरेव धूमैः ( चिताग्निप्रशमाद्धूमत्वाभावेन गृध्रेषु धूमत्वारोपः ) ध्वस्तास्ति-रोहितोऽर्कभासः सूर्यतेजो यासु तास्तथोक्तास्तासां ध्वस्तार्कभासां तिरोहितसूर्य-तेजसां दिशामाशानां मण्डलं सां दिशामाशानां मण्डलं चक्रवालं ।

चक्रवालं तु मण्डलमित्यमरः ।

घनेन सहितं सघनं समेघमिव दर्शयन्तः लोकान्प्रत्यवलोकयन्तः कुर्वन्तो वा ( धातूनामनेकार्थत्वादृदृशेः कृधातुसमानार्थकता ) पितृवनं श्मशानं निलय आवासो येषां ते तथोक्तास्तान् पितृ वननिलयान् श्मशानवासिनः एतान् प्राणिनः प्रेतवृका-दीन् नन्दैः बहलवसावशिष्टैः आनन्दयन्तः प्रीणयन्तः एते इमे श्मशानभूमौ सं-श्यमाना इत्यर्थः । स्रुतबहलवसावाहिनः कायनिस्स्रुतहृन्मेदधारिणो हव्यवाहाः चिताग्नयोऽद्यापि सम्प्रत्यपि न निर्वान्ति प्रशाम्यन्ति इति त्वं पश्यावलोकय। प्रचुरलोकक्षयेन चिताग्नेः सुप्रज्वलितत्वाद्यापि न मे नन्दकुलनिर्दहनकोपप्रशान्ति-



चाणक्यः—आः केन ?

राजा—नन्दकुलविद्वेषिणा दैवेन ।

चाणक्यः—दैवमविद्वांसः प्रमाणयन्ति ।

राजा—विद्वांसोऽप्यविकत्थना भवन्ति ।

चाणक्यः—( सक्रोधम् । ) वृषल ! वृषल !

मिच्छसि ?—

शिखां मोक्तुं बद्धामपि पुनरयं धावति

( भूमे

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।
प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना,
परीतः कालेन ज्वलयसि मम क्रोधदहनम्

रिति भावः । अयं वधरूपो विद्रवः । कोपावेशादतीत
न्यैतदा निदूर्देशादत्र भाविकालङ्कारः ।

अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः
यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥

इति दर्पणोक्तलक्षणात् । स च गृध्रेषु धूमत्वारोपण
त्प्रेक्षणार्थकेवशब्दसत्त्वादुत्प्रेक्षया च संसृष्टः । स्रग्धरा

दवमिति । दैवं भाग्यम् अविद्वांसोऽज्ञानिनो ज
कार्यसाधकमभ्युपगच्छन्ति न विद्वांस इत्यर्थः ।

विद्वांस इति । विद्वांसो विज्ञा अविकत्थना आत

सक्रोधमिति । सक्रोधं यथा तथा ब्रवीतीत्यर्थः
मिवानुचरमिव आरोढुं तिरस्कर्तुमिच्छसि वाञ्छसि प्र

शिखामिति । अयमेष मम करो हस्तो बद्ध
शिखां चूडां पुनर्भूयो मोक्तुं बन्धनात्स्खलयितुं धावति
णान्तरम् ब्रवीति ) एष चरणः पादः पुनरपि भूयोऽ
कर्तुं चलति गच्छति, नन्दानां नवनन्दानां प्रणाशाद्विन
प्राप्तं मम क्रोधो दहन इव क्रोधदहनस्तं क्रोधदहनं
कालेन मृत्युना परीतः प्राप्त इव प्रेरित इव वा ज्वलय

चाणक्यः—आः केन ?

राजा—नन्दकुलविद्वेषिणा दैवेन ।

चाणक्यः—दैवमविद्वांसः प्रमाणयन्ति ।

राजा—विद्वांसोऽप्यविकत्थना भवन्ति ।

चाणक्यः—( सक्रोधम् । ) वृषल ! वृषल !! भृत्यमिव मामारोढुमिच्छसि ?-

शिखां मोक्तुं बद्धामपि पुनरयं धावति करः,

( भूमौ पादप्रहारं कृत्वा )

प्रतिज्ञामारोढुं पुनरपि चलत्येष चरणः ।

प्रणाशान्नन्दानां प्रशममुपयातं त्वमधुना,

परीतः कालेन ज्वलयसि मम क्रोधदहनम् ॥ २९

---

रिति भावः । अयं वधरूपो विद्रवः । कोपावेशादतीतविषयस्यापि साक्षाद्विपवप्रयोज्यैतदा निर्देशादत्र भाविकालङ्कारः ।

अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।

यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥

इति दर्पणोक्तलक्षणात् । स च गृध्रेषु धूमत्वारोपणाद् रूपकेण सघनमिवेत्यत्रोत्प्रेक्षणार्थकेवशब्दसत्त्वादुत्प्रेक्षया च संसृष्टः । स्रग्धरावृत्तम् ॥ २८ ॥

दवमिति । दैवं भाग्यम् अविद्वांसोऽज्ञानिनो जना इति शेषः । प्रमाणयन्ति कार्यसाधकमभ्युपगच्छन्ति न विद्वांस इत्यर्थः ।

विद्वांस इति । विद्वांसो विज्ञा अविकत्थना आत्मप्रशंसिनो न भवन्तीत्यर्थः ।

सक्रोधमिति । सक्रोधं यथा तथा ब्रवीतीत्यर्थः । वृषल मौर्य ! माम् भृत्यमिवानुचरमिव आरोढुं तिरस्कर्त्तुमिच्छसि वाञ्छसि प्रवर्तसे इति यावत् ।

शिखामिति । अयमेष मम करो हस्तो बद्धां प्रतिश्रुतिपूरणात्संयतामपि शिखां चूडां पुनर्भूयो मोक्तुं बन्धनात्स्खलयितुं धावति प्रसरति, ( भूमौ पादप्रहरणानन्तरम् ब्रवीति ) एष चरणः पादः पुनरपि भूयोऽपि प्रतिज्ञां प्रतिश्रुतिमारोढुं-कर्तुं चलति गच्छति, नन्दानां नवनन्दानां प्रणाशाद्विनाशात् प्रशमं शान्तिमुपयातं प्राप्तं मम क्रोधो दहन इव क्रोधदहनस्तं क्रोधदहनं कोपानलम् अधुना साम्प्रतं कालेन मृत्युना परीतः प्राप्त इव प्रेरित इव वा ज्वलयसि प्रदीपयसि । नन्दकुलवि-

( जोर से ) भद्रभाछरक ! कुमार ( मलयकेतु ) हमारा दूर रहना पसन्द नहीं करते, इसलिये इसी सभामण्डल में आसन लगाओ ।

पुरुष—यही आसन है, आप बैठिये ।

भागुरायण—( बैठकर ) । भद्र भाछरक ! जो कोई मुद्रा के लिये मुझसे मिलना चाहे, उसे तुम यहां ले आना ।

पुरुष—आपकी जो आज्ञा ।

( चला गया ) ।

भागुरायण—( मनही मन ) । कष्ट है !! मेरे पर ऐसा प्रेम रखने पर भी कुमार मलयकेतु ठगा जाय, यह बहुत कठिन है, आश्चर्य की बात है ।

अथवा—

( ४ ) पराधीन पुरुष, कुल, लज्जा, कीर्ति और प्रतिष्ठा से विरक्त होकर अल्पकाल रहनेवाले धन के लाभकी आशा से धनवान् पुरुष के निकट अपना शरीर बेचकर उसकी आज्ञा पालन करता हुआ वह सत्-असत् विचारशून्य होकर उचित-अनुचित का विचार नहीं करता ॥

( प्रतीहारीके साथ मलयकेतु का प्रवेश ) ।

मलयकेतु—( मनही मन ) । आश्चर्य है ? राक्षस में अधिक सन्देह होने के कारण हमारा व्याकुल बुद्धि किसी निश्चित अर्थको नहीं प्राप्त कर पाती ॥

कैसे कि—

( ५ ) नन्द के वंश में रहे हुये स्नेह से स्थिर भक्ति होने के कारण चाणक्य से तिरस्कृत नन्द-वंशोत्पन्न बुद्धिमान् मौर्य के साथ राक्षस क्या सन्धि ( मेल ) करेगा ? अथवा अनुरूप गुणयुक्त हमारी स्थिरता को विचारता हुआ वह सत्य प्रतिज्ञ होगा ? इस प्रकार कुलाल चक्र पर चढ़े हुए की तरह मेरा चित्त बहुत काल से सन्देह में पड़ा है ॥

( जोरसे ) विजये ! भागुराण कहां है ?

प्रतीहारी—कुमार ! भागुरायण सैन्यशिविर से बाहर जानेवालों को जाने-आने की आज्ञा पत्र दे रहे हैं ।

मलयकेतु—विजये! क्षणमात्र खडा रहो तब मैं दूसरी तरफ मुँह किये हुए भागुरायण के नेत्रों को मैं अपने हाथों स बन्द करता हूं ।

प्रतीहारी—कुमारकी जो आज्ञा ।

भासुरक—( प्रवेश कर ) आर्य ! एक क्षपणक मुद्राचिह्न के लिये आपसे मिलना चाहता है ।

भागुरायण—ले आओ ।

भासुरक—जो आज्ञा । ( चला जाता है ) ।

क्षपणक—( प्रवेशकर ) आपके धर्मकी वृद्धि हो ।

भागुरायण—( विचित्रढङ्ग से देखकर मन ही मन ) अये ! यह तो राक्षस का मित्र जीवसिद्धि है !! ( जोरसे ) भदन्त ! राक्षसके किसी कार्य ही के लियेजाते हैं न ।

क्षपणक—( कानों को बन्द कर ) । ऐसा मत कहिये । मैं उस जगह जाता हूं, जहाँ राक्षस अथवा पिशाच का नाम भी नहीं सुना जाता ।

भागुरायण—भदन्त ! मित्र ( राक्षस ) में आपका बड़ा सस्नेह क्रोध है । मैं आप से पूछता हूँ कि राक्षस ने आपका क्या बिगाड़ा है ?

क्षपणक—उपासक ! राक्षसने मेरा कुछ भी नहीं बिगाड़ा है, किन्तु मन्द भाग्यवाला मैं स्वयं अपने कार्यों से लज्जित हूँ ।

भागुरायण—भदन्त ! तुम हमारी उत्कण्ठा को बढ़ा रहे हो ।

मलयकेतु—( मनही मन ) हमारी भी उत्कण्ठा को भी ।

भागुरायण—सुनना चाहता हूँ ।

मलयकेतु—मैं भी ।

क्षपणक—उपासक ! इस न सुनने लायक वचन के सुनने से क्या लाभ ?

भागुरायण—भदन्त ! यदि कहने योग्य न हो तो न कहिये ।

क्षपणक—उपासक ! वह कोई गोपनीय बात नहीं है ।

भागुरायण—तब कहिये ।

क्षपणक—उपासक ! ऐसा नहीं है, तो भी मैं वह कठोर बात नहीं कहूँगा ।

भागुरायण—भदन्त ! तो मैं भी मुद्राचिह्नित आज्ञापत्र नहीं दूंगा ।

क्षपणक—( मनही मन ) सुननेके लिये इच्छुक भागुरायण से कहना ठीक है । ( जोरसे ) तब उपाय ही क्या है ? अच्छा मैं कहता हूँ, आप सुनिये । मैं

पिता भी पुत्रों को गर समझकर प्राणतक लेलेते हैं, मित्र भी मन्त्री को छोड़ देते हैं, प्राणसे भी श्रेष्ठ उस धनको जिष्णुदास दुःख की तरह त्यागने के लिये तैयार है। वैश्य जातीय आप का वह धन वणिक् जाति के स्वाभाविक कार्पण्य दोष के रहने पर भी सफल हुआ।

( जोर से ) भद्र ! तब इसतरह कहने पर इस चन्द्रगुप्तने क्या कहा ?

पुरुष—आर्य ! इसतरह कहने पर चन्द्रगुप्तने वैश्यजातीय जिष्णुदास से कहा कि हे जिष्णुदास ! मैंने धनके लोभ से श्रेष्ठी चन्दनदासको नहीं पकड़ा है, किन्तु इसने मन्त्रिराक्षस के कुटुम्बवर्गको छिपा रक्खा है, मैंने बहुत बार इस से याचना की, पर इसने नहीं दिया। अब भी यह यदि मन्त्रिराक्षसका कुटुम्ब दे देवे तो इसकी जान बच सकती है नहीं तो इसको प्राणान्तिक दण्ड होगा। जिष्णुदास से यह ऐसा कह कर चन्दनदास वध्यस्थानमें लायागया है। इसलिये उसका संकल्प है कि प्रियमित्र चन्दनदासका अश्रोतव्य समाचार सुनने के पहले ही मर जाऊँगा। जब अग्नि में प्रवेश करने की कामना से श्रेष्ठी जिष्णुदास नगर से बाहर चला गया है, तो मैं भी जबतक प्रियमित्र जिष्णुदासका अश्रोतव्य समाचार नहीं सुनता उसके पहले ही बांधकर आत्मघात किये लेता हूँ। इसीलिये इस प्राचीनवाटिकामें आया हूँ।

राक्षस—चन्दनदास मारडाला गया ?

पुरुष—आर्य ! मारा नहीं गया। वह इस समय बारम्बार मन्त्रिराक्षसके गृहजनको समर्पण करने के लिये बाध्य किया जारहा है। किन्तु वह मित्रवात्सल्यके कारण उसको नहीं देता, इसी कारण इसके मरने में विलम्ब होरहा है।

राक्षस—(खुशी से मन ही मन)। साधु मित्र ! चन्दनदास साधु!—

( १८ ) शरणागतकी रक्षा करने से शिवि राजा के यशकी तरह उज्ज्वल यशको तुमने विना मित्रकी सहायता के ही प्राप्त कर लिए।

( जोर से ) भद्र ! भद्र ! शीघ्र जाओ अभी जिष्णुदास को अग्निप्रवेश से रोको। मैं भी चन्दनदास को मरण से छुड़ाता हूँ।

पुरुष—अब किस उपाय से आप चन्दनदास को मरण से छुड़ा सकते हैं ?

राक्षस—(तलवार को बाहर कर) पुरुषार्थका परममित्र इस तलवार से।

देखो—

( १९ ) स्वच्छ मेघवाले आकाश के सदृश मूर्त्तिधारी, युद्ध की अभिलाषा से रोमाञ्चित की तरह स्थित, हाथ के साथ मित्रता करने वाला, मेरे पराक्रम के आधिक्य से संग्रामरूपी परीक्षणोपल में शत्रुओं से देखागया पुरुषार्थवाला यह खड्ग मित्रस्नेह के कारण पराधीन मुझको इस समय युद्धके लिये प्रेरित करता है ॥

पुरुष—आर्य ! ऐसा करने पर चन्दनदास जीवित रह सकता है। विषम दशाविशेष के परिणामको प्राप्त मैं आपके निर्णीत निश्चय को नहीं जान सकता ( देखकर पैरों पर गिर कर ) आप ही सुगृहीत नामवाले मन्त्रि राक्षस हैं क्या ? यदि हां तो प्रसन्न होकर मेरे सन्देह को दूर कीजिये।

राक्षस—भद्र ! स्वामी के वंशका विनाश देखनेवाला और मित्रविनाशका हेतु, अनार्य तथा अपुण्यनामवाला मैं यथार्थ ही राक्षस हूं।

पुरुष—( हर्ष के साथ फिर पैरों पर गिर कर )। प्रसन्न होइये, प्रसन्न होइये। आश्चर्य है। हर्ष की बात है। मैं कृतार्थ हूं।

राक्षस—उठो उठो, अब समय बिताना व्यर्थ है। जिष्णुदास से कहो कि राक्षस चन्दनदास को मरण से छुड़ाता है।

पुरुष—( पैरों पर गिर कर ) मन्त्रिराक्षस ! आप प्रसन्न हों, प्रसन्न हों। इस नगर में पहले दुष्ट चन्द्रगुप्तने आर्यशकटदास के वध की आज्ञा दी थी। सो शकटदास किसी पुरुष द्वारा वध्यस्थान से भगाकर दूसरे स्थान में पहुँचादिया गया। तब दुष्टचन्द्रगुप्त ने जल्लादों से पूछा कि 'किस कारण ऐसी भूल की गयी' ऐसा कह कर उसने आर्य शकटदास के भागने से बढ़ी हुई क्रोधाग्नि को घातक जनके वधरूपी जल से शान्त किया। उसी दिन से घातक लोग जिस किसी शस्त्रधारी नये पुरुष को आगे वा पीछे देखते हैं, तब आधे रास्ते ही में अपने प्राणकी रक्षा करते हुए सावधान होकर वध्यस्थान में लाये हुए वध्यपुरुष को मारते हैं। इस लिये छिपाकर शस्त्रको लिये आप वध्यस्थान में जाँय। क्यों कि चन्दनदास कावध शीघ्र ही होने वाला है।

( इतना कह कर चला जाता है )।

राक्षस—( मन ही मन )। आश्चर्य है ! उस ब्राह्मण चाणक्य का नीतिमार्ग अत्यन्त कठिन है।

**राजा**—अकारणपरित्यागानुशयतप्तहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन ।

(प्रविश्यापटीक्षेपेण चित्रफलकहस्ता ।)

**चतुरिका**—[1]इअं चित्तगदा भट्टिणी । (इति चित्रफलकं दर्शयति ।)

**विदूषकः**—[2]साहु वअस्स, महुरावत्थाणदंसणिज्जो भावाणुप्पवेसो । क्खलदि विअ मे दिट्ठी णिण्णुण्णअप्पदेसेसु ।

**सानुमती**—[3]अम्भो एसा राएसिणो णिउणदा । जाणे सही अग्गदो मे वट्टदि त्ति ।

---

१. इयं चित्रगता भट्टिनी ।

२. साधु वयस्य, मधुरावस्थानदर्शनीयो भावानुप्रवेशः । स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु ।

३. अहो एषा राजर्षेर्निपुणता । जाने सख्यग्रतो मे वर्तत इति ।

---

णात्संकल्पोपनीतां प्रत्याह—**अकारणेति** । अकारणं कारणराहित्येन यः परित्यागस्तेनानुशयः पश्चात्तापस्तेन तप्तं हृदयं यस्य सः । अत्र परित्यागश्चेत्कथं कारणाभावः कारणाभावश्चेत्कथं परित्याग इति विरोधो नाशङ्कनीयः । अत्र कारणशब्देन प्रसिद्धं नायिकापराधरूपं गृहीतं तदेव त्यागे कारणं दृष्टचरमिति । अनेन चित्रफलकहस्तायाश्चतुरिकायाः सूचनम् । सूचिताया एवापटीक्षेपेण प्रवेशोऽतित्वरासूचनाय । अपटी जवनिका । 'अपटी काण्डपटीका प्रतिसीरा जवनिका तिरस्करिणी' इति हलायुधः । 'इयं चित्रगता भट्टिनी' इत्यनेन यद्राज्ञा पुनर्दर्शनं याचितं तदनया भङ्ग्या कविना संपादितम् । अत एव पश्चात् 'चित्रफलकं दर्शयति' इत्युक्तिः । साधु वयस्येति भिन्नं वाक्यम् । मधुरं सुन्दरं यदवस्थानमाकृतिस्तया दर्शनीयो हृद्यो भावानुप्रवेशोऽभ्यन्तरीकरणम् । सुन्दराकारतया भावाविर्भावो रम्यतर इत्यर्थः । स्खलतीव दृष्टिर्निम्नोन्नतप्रदेशेषु । अनेन मधुराकृतित्वमेवोक्तम् । यथा प्रत्यक्षदृष्टायामाकृतौ निम्नोन्नतेषु दृष्टिः स्खलति तथा चित्रेऽपीति महदालेख्यकौशलमिति भावः । किं बहुना सत्यानुप्रवेशं कथालावण्यं कौतूहलं मे जनयति । एतदेवानुसंधायाह सानुमती—अहो इति । अहो आश्चर्ये । एषा राजर्षेर्निपुणता । अहं जाने सखी शकुन्तलाग्रतो मे वर्तत इति । जाने इति संबन्धः ।

रा—नैवमध्यवसितं—एकान्ते सीतानिरपेक्षो राम इति ।

अन्तरिता अनुरागा भावा मम कर्कशस्य बाह्येन ।
तन्तव इव सुकुमाराः प्रच्छन्नाः पद्मनालस्य ॥ ६ ॥

वि—तुमं अदिप्पवलेण हिअअसंदावेण वडवाणलेण विअ भअवं महासमुद्दो अत्तणो महत्तणेण परिहीअसि । अहं उण सहावलहुदाए देवीए सीदाए गइं सुमरिअ दावाणलेण विअ

---

निर्वाहो जातः इत्यध्याहार्यम् । यथा सीतां वञ्चितवानसि तथैव मामपि वञ्चितुमुद्युङ्क्ते इति ।

'नैवमध्यवसितं' 'समीचीन' मिति शेषः। एष ते अध्यवसायो निश्चयो न समीचीनः, अपि तु वितथः। एकान्ते सीतानिरपेक्षो राम इत्येवंरूपो भवद्विचारो न सत्यः, अपि तु यथा सर्वेषां समक्षं सीतावियोगस्य कृते खिन्नोस्मि तथैवैकान्तेपि खिन्नमना अवतिष्ठे न सीतायां विरक्तः। सीतां निर्वासयन् रामो गर्ह्यमनुष्ठितवानिति येषां मतं तेषामेवान्यतमो विदूषकः। स सीतायां वस्तुत उदासीनं प्रजापवादभीत्या च सीताव्यपेक्षं रामं मनुते। सन्ति तादृशा अपि जनाः ये सीतां निर्वासयतो रामस्य नैर्घृण्यं न मर्षयन्ति, तेषां रञ्जनार्थमात्मा सर्वदा खिन्न एव प्रदर्शनीयः । थामस बेकटसंज्ञस्य मित्रस्य व्यापादने चतुरः पुरुषान् स्वयं नियुज्य यथा प्रजारञ्जनार्थं तृतीयहेनरीसंज्ञो नृपो ब्रिटिशानां तन्मरणमनुशुशोच, प्रत्यहं बलिञ्चोपाहरत्तदर्थम्, तद्वदेव सीतां निर्वास्य क्रव्यादानां पारणां विधाय रामेण सा शोच्यते इति विदूषकाभिप्रायः । अत एव किं तां गुणतः स्मरसि दोषतो वेति विदूषकस्य प्रश्नावकाशः—इत्यलं पल्लवितेन ।

अन्तरिता इति—

अनुरागा अन्तरिताः, बाह्येन कर्कशस्य मम सुकुमाराः भावाः पद्मनालस्य तन्तव इव प्रच्छन्नाः इति योजना ।

अनुरागाः प्रीतयः, अन्तरिताः तिरोहिताः, नाहं कस्मिंश्चिदपि वस्तुनि रागं दर्शयामीत्येतावताऽहं सर्वथा रागशून्यत्वेनावसेयः, अपि तु अन्तरात्मनि वह्याम्यवानुरागं प्रिये वस्तुनि सीतारूपे इति तात्पर्यम् । बाह्येन बाह्यतः कर्कशस्य कठोरस्य मम सुकुमाराः नितरां कोमलाः भावाः अनुरागात्मकाः प्रच्छन्नाः तिरोहिताः सन्तो अन्तरात्मनि निवसन्तीति । यथा पद्मनालस्य नलिनदण्डस्योपरिष्टात्कर्कशस्यापि अभ्यन्तरेऽवस्थिता मृदुलास्तन्तवो भवन्ति तद्वत् । नारिकेलफलसम्मितं रामहृदयमुपरिष्टात्कर्कशमन्तस्तु सरसमिति बहिराकारं सुगुप्ततया रक्षन्नपि अन्तर्मन्युभरेणावस्कन्नमना राम इति ॥ ६ ॥

वडवानलो वाडवः । 'वाडवं करणे स्त्रीणां घोटिकौघे नपुंसकम् । पाताले न स्त्रियां पुंसि ब्राह्मणे वडवानले'।—इति मेदिनी । प्रबलभूकम्पेषु समुद्रान्तर्वर्तिनां

तुसारबिंदु णिरवसेसं परिसुस्सामि, ता परित्ताएहि मं । ( इति रोदिति ) (क)

रा—यदि त्वं स्मरणयोग्यां सीतामवगच्छसि कस्मादहं तत्परित्याग-प्रवृत्तस्तदा न प्रतिषिद्धः ?

वि—पसादसुमुहो वि राआ दुव्विएणव्वो सेवएहिं, किं उण कोव-भीसणो । (ख)

रा—वयस्य, नहि मादृशास्तादृशीं कोपावस्थामवगाहन्ते, यस्यां वर्तमानायां सुहृदामनाश्रवा भवन्ति ।

---

(क) त्वमतिप्रबलेन हृदयसन्तापेन वडवानलेनेव भगवान् महासमुद्र आत्मनो महत्त्वेन परिहीयसे, अहं पुनः स्वभावलघुतया देव्याः सीताया गतिं स्मृत्वा दावानलेनेव तुषारविन्दुर्निरवशेषं परिशुष्यामि ।

(ख) प्रसादसुमुखोऽपि राजा दुर्विज्ञाप्यः, सेवकैः, किं पुनः कोपभीषणः ।

---

पेट्रोलिअमादिसञ्ज्ञकपदार्थानां दीर्घदीर्घेषु प्रस्फुटितेष्वाशयेषु लघुतया जलतलं विहायोपरितलमाक्रामत्सु तदीयद्रवेषु जववशादग्नेरुदयः, स च जलोपर्यवस्थितं द्रव-राशिं दहन् दूराद्दवीयो भूयान् ज्वलनराशिर्दृश्यते नाविकैः । कालिदासोऽप्याह स्म—

'पावकस्य महिमा स गण्यते कक्षवज्ज्वलति सागरेऽपि यः' इति ।

महत्त्वेन परिहीयसे इति—महान् समुद्रो वाडवानलेन शोषितोऽपि स्वमहत्त्वरक्षणं करोति, पुनरपि महानेव दृश्यते इत्यर्थः । सीताया गतिमिति—दशां तस्या स्मारं स्मारं तुषारबिन्दुरवश्यायाः कण इव दावानलेन वनवह्निनाऽहं निरवशेषं साकल्येन परिशुष्यामि शुष्को भवामि ।

अनाश्रवाः अवश्याः ।

- नरपतिरिति—

अधिकप्रवृत्ततेजा नरपतिः गुणनिहितैः सचिवैः निवारणीयः । सहस्ररश्मिः भुवनमभितपन् जलगुरुभिः मेघैः व्यपनीयते हीति योजना ।

अधिकप्रवृत्ततेजाः अधिकं प्रवृत्तं प्रसृतं तेजो यस्य सः । 'तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः'—इति मेदिनी ।

भरतस्तु—'अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ इति ।

रक्षोभवनोषिताया देव्याः परिग्रहमालम्ब्य पौरकृतमधिक्षेपं दूतमुखेन निशम्य असहमानो रामभद्रस्तथा नाम दूनो यथा सीतां स्वविषयादपि निर्वासनपरोऽभूदिति

नरपतिरधिकप्रवृत्ततेजा गुणनिहितैः सचिवैर्निवारणीयः ।
भुवनमभिपतन् सहस्ररश्मिर्जलगुरुभिर्व्यपनीयते हि मेघैः ॥७॥

वयस्य, वर्तमाना सीताकथा द्वयोः सन्तापकारिणी । तद्गच्छ प्रतीहारभूमिम् । समाज्ञापय दौवारिकान्, समासन्नस्तपोधनानां सम्पातसमयः, तस्मात्सम्भृतवेत्राणि सर्वद्वाराणि क्रियन्ताम् ।

वि—भो राअ, कीस उण एदे कंदमूलफलासिणो वक्कलपरिधाणा उद्दंडदंडधरा ईरिसेण आआरेण संभाविअन्ति । (क)

रा—अस्थानेऽयमत्र भवतः सन्देहः । ननु मूलस्वयोगमूलसकल-पुरुषार्थसंवेदिनी ज्ञाननिष्पत्तिः । ( ? ) पश्य—

---

(क) भो राजन्, कीदृशाः पुनरेते कन्दमूलफलाशिनो वल्कल-परिधाना उद्दण्डदण्डधरा ईदृशेनाचारेण सम्भाव्यन्ते ।

---

परकृताधिक्षेपासहनप्रवृत्तिः परां काष्ठाम्प्राप्तेति सूच्यते । गुणनिहितैः गुणानां मन्त्रणाकौशलादीनां कृते निहितैः मन्त्रिपदे स्थापितैः सचिवैरमात्यैः निवारणीयः वारयितव्यः, दुरन्ताद्व्यवसायाद् रोद्धव्यः इत्यर्थः । 'अति सर्वत्र वर्जयेदि'त्युक्तेः । यद्वा निरागसः सीतायाः परिक्लेशने महानादरो यः स्वीकृतो रामेण स स्वप्रभाव-वशात्सम्पन्न इति तावता प्रभावेण प्रजा दुःखयन् नरपति र्वारणीय एवामात्यैनेति । सहस्ररश्मिः सूर्यः भुवनं लोकं अभितपन् सन्तापयन्, जलगुरुभिः जलेन गुरुभिः, जलेन निमित्तेन गुरुतां प्राप्तैः मेघैः जलदैः व्यपनीयते हि, दूरीक्रियते आच्छाद्यते इत्यर्थः । सन्तापकत्वं रवेर्व्यपनुद्यते मेघैः स्वयं मध्यस्थैस्तद्वत्सचिवैरपि स्वयं व्यवधाय राज्ञः प्रखरतेजस्तो रक्षणीयाः प्रजा इति भावः ।

एतत्तु बलवता कालेन शिक्षितस्य रामस्य शोकाकुलस्य वचनम् । उन्मादे प्रवृत्ते तु स एवाहस्म—

　　तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।
　　यद्यर्थिता निर्हृतवाच्यशल्यान् प्राणान्मया धारयितुं चिरं वः' ॥ इति, ॥७॥

वयस्य······सन्तापकारिणीति, सीतासम्बन्धे यावद्विचारः प्रवर्तते शोक-शङ्कुस्तावत् प्रवर्धते । न चेदानीं सीतासमवाप्तिसंभवः । चिराय कथाशेषतां क्रव्यादैर्नीता इति हि भावना रामस्य । भूयोऽप्यनुशोच्यमाना केवलं सन्तापहेतुः सेति परिहातव्यैव तदीया चर्चेति रामस्य प्रस्तावः । 'गतं न शोचामीति' पक्ष-मवलम्ब्य शक्यते जीवितस्य स्वस्य रक्षणम्, मन्युज्वलनभरेण तु सम्प्लुष्टं दग्धं धूमायितं वा स्यादिति भावः । प्रतीहारभूमिं द्वारस्थानं यत्र द्वारपालैः समवस्थीयते । 'स्त्री द्वार्द्वारं प्रतीहारः'—इत्यमरः । दौवारिकान् द्वारपालान् । समासन्नः समीपवर्ती ।

ज्योतिः सदाभ्यन्तरमात्तपादै—
र्दीपितं नार्थगतं व्यनक्ति ।

---

सम्पातसमयः सम्भूयागमनकालः । सम्भृतवेत्राणि सम्भृता वेत्राः वेत्रयष्टयो येषु तानि, द्वारविशेषणम् । वेत्रपदेन साहचर्याद्वेत्रवतां द्वारपालानां ग्रहणम् । सर्वेषु द्वारेषु द्वारपालैरवस्थेयमिति भावः ।

कन्दमूलफलाशिनः—कन्दः सस्यमूलम् । 'कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्'—इति मेदिनीकरः । मूलं शिफा । 'मूलमाद्ये शिफाभयोः'—इत्यमरः । कन्दमूलफलाहारास्तपस्विनः । वल्कलं वल्कं तरुत्वक् परिधानं वस्त्रमेषामिति वल्कलपरिधानाः । तथा च मुरारिः—

'वारांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थिती-
रैणेय्यां त्वचि संविशन्ति वसते चापि त्वचस्तारवीः ।
तत्पश्यन्ति च धाम नाभिपततो यच्चार्मणे चक्षुषी
धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते' ॥ इति

उद्दण्डदण्डधराः उद्दण्डा भयावहा ये दण्डास्तेषां धारकाः । आचारेण सम्मानसूचकव्यवहारेण । सम्भाव्यन्ते सत्क्रियन्ते । निर्धना अकिञ्चनास्तपस्विनो न खलु तावन्तमादरातिशयमर्हन्तीति विदूषकाभिप्रायः ।

अस्थानेऽत्र अयं भवतः सन्देह इति योजनीयम् 'अत्र' इत्येतस्य 'भवतः' इत्यस्य च संयोगे तु अत्रभवान् पूज्यः स्यात्, न च विदूषको राज्ञः पूजाभाजनम्, बालमित्रत्वात्सेवकत्वाच्च । मूल......संवेदिनीति, मूलेन विश्वस्य जगतो मूलभूतेन परब्रह्मणा यः स्वस्यात्मनो योगः सम्बन्धः तन्मूलास्तन्निमित्तास्तन्निबन्धना ये सकला अपि पुरुषार्थास्तेषां संवेदिनी ज्ञापिका बोधिका ज्ञाननिष्पत्तिः ज्ञानस्य निष्पादनरूपा ज्ञानसम्पदा । 'ऋते ज्ञानान्न मुक्ति'रित्युपनिषद् । वेदोऽपि भगवान् तमेवार्थमाह—

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' ॥ इति ।

जीवस्य परमात्मना सम्बन्ध एव मोक्षः । स एव च परमः पुरुषार्थः । पण्डितराजजगन्नाथेन परमात्मानमुद्दिश्य कृतो मूलशब्दस्य प्रयोगो भामिनीविलासे । तथाहि—

मूलं स्थूलमतीव बन्धनदृढं शाखाशतं मांसलाः
वासो दुर्गमहीधरे तरुपते कुत्रास्ति भीतिस्तव ।
एकः किन्तु मनागयं जनयति स्वान्ते ममाधिज्वरं
ज्वालालीवलयीभवन्नकरुणो दावानलो घस्मर ॥ इति ।

मूलं परब्रह्म स्थूलं परममहत्परिमाणमिति च तत्र टीकाकृत् ।

ज्योतिरिति—

नालं हि तेजोऽप्यनलाभिधानं
स्वकर्मणो मारुतमन्तरेण ॥ ८ ॥

वि—जदि महत्थो तपोधणाणं समाअमो अह अ लहु गच्छिअ जहआणत्ति संपादेमि (निष्क्रम्य पुनः प्रविश्य) ही ही सो संपदं मए राइणो आणाए पडिहारणिक्खित्तेण दिट्ठा सुसिणिद्ध-सामलच्छाआ अणुब्भिण्णतारुण्णविग्गहा तोरणत्थंभवट्ठिदा मंगलंकुरा विअ वालभावेण असमत्तपमाणा विअ अप्पमाधा विअ कंदप्पदारआ विअ रुपसोवग्गेण उच्चदरा सालतरु विअ पप्पंदा विअ लोलदरा विअ महावला विअ अचंतधीरा

सत् सदा वा आभ्यन्तरं ज्योतिः आप्तपादैः अदीपितं न अर्थगतं व्यनक्ति । अनलाभिधानं तेजो हि मारुतमन्तरेण स्वकर्मणो न अलम् ।

सत् श्रेष्ठं यद्वा सदैव आभ्यन्तरं ज्योतिः अन्तःकरणे स्थितं प्रज्ञानात्मकं तेजः आप्तपादैः आप्तचरणैः, पूजार्थं प्रयोगप्रकार एष, तत्र भवद्भिराप्तैरित्यर्थः । 'आप्तः पुनः साक्षात्कृतधर्मा यथार्थवस्तुचिख्यापयिषया प्रयुक्त उपदेष्टे'ति वात्स्यायनः । अदीपितं अनिद्धं सत् अर्थगतं अर्थस्य गतिं यथार्थवस्तुस्थितिं न व्यनक्ति प्रकटयति । अतएव भोजराजश्चम्पूरामायणे—

'उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत् तानन्तरेण निपतेत्क नु मत्प्रणामः' ॥ इति ।

आभ्यन्तरं ज्योतिर्यद्यपि विद्यमानमात्मनि तथापि आप्तोपदेशरूपं बाह्यमुपकरणमपेक्षते तदिति आप्ताः अमी मुनयोऽवश्यं सत्करणीया जनेन स्वाभ्युदयाशंसिनेति तात्पर्यम् । तत्र दृष्टान्तमाह—अनलाभिधानं तेजः पावकाख्यं ज्योतिः, मारुतमन्तरेण पवनेन विना, 'अन्तरान्तरेण युक्ते द्वितीया' [ २. ३. ४ ] स्वकर्मणो दाहस्य न अलं न समर्थम् । अत एव पावको मरुत्सखत्वेन व्यवह्रियते । यथाह कालिदासः—

मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्तमानम् ।
अवाकिरन् बाललताः प्रसूनैराचारलाजैरिव पौरकन्याः ॥ इति ।

अपि च—

विभावसुः सारथिनेव वायुना घनव्यपायेन गभस्तिमानिव ।
बभूव तेनातितरां सुदुःसहः कटप्रभेदेन करीव पार्थिवः ॥ ८ ॥ इति ।

महार्थः महानर्थः प्रयोजनं यस्य स । 'च' पदमनावश्यकम् । लघु सत्वरम् । यथाज्ञप्ति यथादेशम् । अनुद्भिन्नेति—अद्यापि न उद्भिन्नं प्रकटीभूतं तारुण्यं तरुणत्वं विग्रहे शरीरे ययोस्तौ, अद्याप्यपरित्यक्तबालभावौ । तोरणेति—तोरणे द्वार-

विअ अचंदललिदा विअ असंखेपिदा विअ वअस्सस्स कलादंसणा आगदा दुवे तापसकुमारआ। (क)

रा—( साकूतम् ) कस्तयोरस्मन्नयनसीमावतरणप्रतिवन्धः ?

वि—सुणाहि दाव पदाणं वालभावललिदाणं कोऊहलसंवद्धाणं एदं उवण्णासम्। (ख)

रा—कथय कथय।

वि—ते किल भअवदो वम्मीइमहेसिणो सिस्सा पवीणा वीणाकलाविण्णाणे अपुव्व किल आअमं धारिंति। एदे किल एव्वं वदंति—तावसिणो जणाणं तपोधणवहुमाणेण अह्माणं विअ भूदठाणं आसणं पदाणं अ अणुचिठ्ठिदव्वं। जदा अहे मंदभद्दस्स दीअइ रादललअ दुक्खराविण्णासं महाकइसंगधितमहापुरुसचरित्तवंधं महन्थगंभीरं केण वि अस्सुदपुव्वं आअमं गंधव्ववेदवसंवादि सरसं जोअविरइअवण्णरमणीअअं वीणातंतिरसिदाणुविद्धं गीदं गाअह्म तदा विण्णाण-

(क) यदि महार्थस्तपोधनानां समागमः अहं च लघु गत्वा यथाज्ञप्ति सम्पादयामि। (—) ही ! ही ! साम्प्रतं मया राज्ञ आज्ञया प्रतीहारनिदिष्टेन दृष्टौ सुस्निग्धश्यामलच्छायौ अनुद्भिन्नतारुण्यविग्रहौ तोरणस्तम्भावस्थितौ मङ्गलाङ्कुराविव वालभावेन, असमाप्तप्रमाणाविव, अप्रमादाविव, कन्दर्पदारकाविव रूपसौभाग्येन, उच्चतरौ सालतरू इव, प्रस्पन्दाविव, लोलतराविव, महावलाविव, अत्यन्तधीराविव, अत्यन्तललिताविव, असंक्षेपिताविव, वयस्यस्य कलादर्शनौ आगतौ द्वौ तापसकुमारकौ।

(ख) शृणु तावदेतयोर्वालभावललितयोः कौतूहलसम्बद्धयोरेतमुपन्यासम्।

बाह्यभागः। 'तोरणोऽस्त्री वहिर्द्वारम्' इत्यमरः। तत्र यः स्तम्भस्तत्समीपमवस्थितौ। मङ्गलेति—मङ्गलस्य कल्याणस्य अङ्कुरौ प्ररोहौ। वालभावेन वाल्येन। वाल्यं हि वयसः प्रारम्भे भवति तथा च मङ्गलमप्यारम्भ एव क्रियते। 'श्वः श्रेयसं शिवं भद्रं कल्याणं मङ्गलं शुभम्'—इत्यमरः। असमाप्तेति—न समाप्तं पूर्णं प्रमाणमुच्छ्रायो ययोस्तौ। अद्यापि तयोरारोहो न पूर्णताम्प्राप्तः, अपितु तयोः समुन्नति भूयोऽपि भवित्रीति भावः। अप्रमादौ प्रमादोऽनवधानता तद्रहितौ। कन्दर्पेति—कन्दर्पः कामः तस्य दारकौ वालकौ। कारणगुणाः कार्यगुणानारभन्ते इति हि काणादानां नयः, अभिरूपभूयिष्ठौ कुमारौ अभिरूपादेव जनकाज्जातौ

विसेसपसएणहिअओ राआ जं वुत्तं अणुचिठ्ठस्सदि एसो जाणिदंवोत्ति अह्माणं भअवदो वंमीइमहेसिणो आदेसोत्ति।(ग)

रा—अहो विज्ञानावलेपः शौण्डीर्यगर्भश्चोपन्यासः। वयस्य यथाभिमतं प्रतिज्ञाय प्रवेशयाविलम्बितं पुरा तौ न चिरावस्थाननिर्वेदेन पराङ्मुखीभवतः।

वि—कुदो दाणिं णिव्वेदो ? ते हि अएणोएणवच्छलत्तणं आआरसारिच्चं काअपक्खपरिभूसिदं च वअणं पेक्खिअ—एव्वं रामलक्खणा महाराअदसरहे धरमाणे राअठ्ठाणं अलंकरंत्ता भवंति-त्ति तुह्माणं वालभावं महाराअं अ सुमरिअ वप्फपुएणणअणेहिं सोविदल्लएहिं परिपुट्टा चिठ्ठंति। (घ)

रा—किमस्मच्छैशवानुकारिणी तयोराकृतिः ?

वि—अह इं (ङ)

रा—वर्धते मे कुतूहलम्, तत्प्रवेशयाविलम्बितम्।

वि—जं भवं आणवेदि। (च)

---

(ग) तौ किल भगवतो वाल्मीकिमहर्षेः शिष्यौ प्रवीणौ वीणाकलाविज्ञानेऽपूर्वं किलागमं धारयतः। एतौ किलैवं वदतः—राजर्षेर्जनानां तपोधनबहुमानेनास्माकमिव भूस्थानमासन्नं.........अनुष्ठातव्यम्.........दुष्करविन्यासं महाकविसङ्ग्रथितमहापुरुषचरित्रबन्धं महार्थगम्भीरं केनाप्यश्रुतपूर्वमागमं गान्धर्ववेदसंवादि सरसं योगविरचितवर्णरमणीयकं वीणातन्त्रीरसितानुविद्धं गीतं गायावः तदा विज्ञानविशेषप्रसन्नहृदयो राजा यद्वृत्तान्तमनुष्ठास्यति एष ज्ञातव्य इत्यस्माकं भगवतो वाल्मीकिमहर्षेरादेशः-इति।

(घ) कुत इदानीं निर्वेदः ? तौ हि अन्योन्यवत्सलत्वं आकारसादृश्यं काकपक्षपरिभूषितं च वदनं प्रेक्ष्य एवं रामलक्ष्मणौ महाराजदशरथे ध्रियमाणे राजस्थानमलङ्कुर्वन्तावभूताम्-इति युवयोर्बालभावं महाराजं च स्मृत्वा वाष्पपूर्णनयनैः सौविदल्लैः परिपृष्टौ तिष्ठतः।

(ङ) अथ किम्।

(च) यद्भवानाज्ञापयति।

---

स्याताम्, तादृश एव कन्दर्पः, तस्मात्स एव जनकत्वेनोत्प्रेक्ष्यते। अतएवोर्वश्याजनिमुद्दिश्य कालिदास आह स्म—

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।

( इति निष्क्रान्तः )

( ततः प्रविशतो विदूषकेणोपदिश्यमानमार्गौ तापसौ कुशलवौ )

वि—इदो इदो अज्जा। (क)

( परिक्रम्य )

कुशः—( अपवार्य ) वत्स लव, इदानीं भगवतो वाल्मीकेरादेशादम्बामभिवाद्य पार्थिवभवनाभिमुखं प्रस्थिते मयि काकपक्षग्रहणसंज्ञया पर्णशालायां प्रवेश्य कीदृशेन रहस्येनाम्बया पृथक् संविभक्तो भद्रमुखः ?

---

(क) इत इत आर्यौ।

---

वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः' ॥ इति।

रूपसौभाग्येन रूपसम्पदा। प्रस्पन्दौ प्रकृष्टः स्पन्दः स्फूर्त्तिविशेषो ययोस्तौ। लोलतरौ बाल्यसुलभचाञ्चल्यभरान्वितौ। ललितौ लालित्यभाजौ। असंक्षेपितौ विशिष्टारोहपरिणाहवन्तावुदारौ वा। कलादर्शनौ सङ्गीतकलाया दर्शनं प्रदर्शनं ययोरभीष्टम्।

साकूतम्—साभिप्रायम्। अस्मादिति—अस्माकं नयनयोः सीमायां अवतरणे गोचरतामागमने प्रतिबन्धः विघ्नः।

उपन्यासः कथनम्, प्रस्ताव इति यावत्।

प्रवीणौ कुशलौ, प्रकृष्टो वीणायामिति दुर्गः। आगमं विज्ञानम्। दुष्करेति—दुष्करः विन्यासः पदावलीस्थितिः, रचनेति यावत्। गान्धर्ववेदसंवादि गन्धर्वाणामयं गान्धर्वः स चासौ वेदः तस्य संवादि संवदनशीलमनुकूलमित्यर्थः। सरसं रसयुक्तम्, मनोहरमित्यर्थः। योगेति—योगःसम्बन्धविशेषः, तेन विरचितं वर्णानामक्षराणां रामणीयकं रमणीयत्वं यस्मिन् तत्। वीणेति—वीणाया विपञ्च्या यास्तन्त्र्यः तासां रसितेन शिञ्जितेन अनुविद्धं सम्बद्धम्, परिवादिनी तन्त्रीसमाहननजातनादोपेतमित्यर्थः। 'वीणा तु वल्लकी। विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः। यदिति—यद्वृत्तान्तमिति मूलपुस्तके, यं वृत्तान्त मिति वयम्। यं वृत्तान्तं उदन्तं अनुष्ठास्यति आचरिष्यति यत्करिष्यतीत्यर्थः। एष वृत्तान्त इत्यर्थः। सीताया भाविजीवनपद्धतिनिर्धारणाय महर्षेरयमुद्योगः, राममनोगतं सम्यगवबोद्धुमेष यत्नः।

विज्ञानेति—विज्ञानस्य विद्याप्रकर्षस्य अवलेपो गर्वः। शौण्डीर्यं गर्वातिशयः। यथेति—यथारुचितं भवते तापसकुमाराभ्यां वा। चिरेति—राज्ञोदर्शनमलब्ध्वा चिराय यदवस्थानं प्रतीहारभूमौ तेन यो निर्वेद आत्मग्लानं खेद इति यावत् तेन। पराङ्मुखीभवतः प्रतिनिवर्त्तेते।

लवः—न खलु कश्चित्संविभागः। किन्तु तदानीं तापसजनसङ्कीर्ण-मुटजाभ्यन्तरं प्रविश्य बाहूपपीडं तनूदरेण परिष्वज्य शिरसि चाघ्राय सीत्कारलक्षितस्मितमधुरं साशङ्का शनैः शनैः कर्ण-पत्रं वर्धयन्ती स्वमुखेन मन्मुखमपवार्य एवं सन्दिष्टवती—वत्स युवाभ्यां स्वाभाविकमवलेपं परित्यज्य सत्कर्त्तव्यो महा-राजः कुशलश्च परिप्रष्टव्यम्—इति।

कुशः—युज्यते कुशलप्रश्नः, प्रणामस्तु कथम्?

लवः—न कथम्?

कुशः—अप्रणन्तारः किलास्मद्वंश्याः।

लवः—क एवमाह?

कुशः—अम्बा।

---

अन्योन्यवत्सलत्वं कुशलवयोः परस्परं सौभ्रात्रम्। आकारसादृश्यं आकारयो-राकृत्योः साम्यम्। कुशलवौ यमलौ सदृशाकारवन्तौ। रामसुतौ रामाकारसादृश्य-वन्तौ। रामो लक्ष्मणश्च भ्रातरौ तयोरपि जनयितृसाम्येनाकारसाम्यं, लक्ष्मण-सान्निध्याच्च तदाकारेणापि साम्यं कुशलवयोरिति विवेकः। काकपक्षः शिखण्ड-कस्तेन परिभूषितमलङ्कृतम्। वदनं मुखम्। भ्रियमाणे जीवति सति। राजस्थानं राज्ञो दशरथस्य स्थानं, यत्र राजा दशरथोऽतिष्ठत् प्रासादे वा परिषदि वा सर्वत्र रामलक्ष्मणयो रव्याहतः प्रवेश आसीदेव। सौविदल्लैः कञ्चुकिभिः। 'सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते'—इत्यमरः। तल्लक्षणं तु—

'अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः।
सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते'॥ इति।

अपवार्येति—'तद्भवेदपवारितम्। रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते'। इति दर्पणे विश्वनाथः। काकपक्षेति—काकपक्षस्य शिखण्डकस्य ग्रहणमेव ग्रहणेन वा या सञ्ज्ञा सङ्केतस्तया। पृथक्संविभक्तः—रामायणगानादिस्तु सम्भूय आवा-भ्यामनुष्ठेयः। अस्ति किमपि त्वया केवलेनैव कर्त्तव्यतया समुपदिष्टमम्बया तवेत्य-भिप्रायः। भद्रमुखः भद्रं मुखं यस्य स सुमुख इत्यर्थः।

तापसेति—तापसा एव जनास्तैः सङ्कीर्णं' सङ्कुलं व्याप्तमिति। उटजेति-उटजं मुनिगृहम्। 'मुनीनां पर्णशालोटजो ऽस्त्रियाम्'—इत्यमरः। तस्य अभ्यन्तरं अन्तर्वर्ती भूभागः। बाहूपपीडं बाहूभ्यामुपपीड्य उपपीड्येत्यर्थः। इदञ्च बाहुभ्या-मुपपीडनं कुशलवयोस्तात्प्रथमदर्शनसौभाग्यातिशयेन सद्योभाविना सुखितायाः सीतायाश्चेतस्युल्लासविकासं दर्शयति। तनूदरेण कृशेनोदरेण, अत एव सुन्दर्यः कृशोदर्य उच्यन्ते। निदर्शनमात्रमिहोपन्यस्यते—

लवः—प्रणाममपि सैवोपदिष्टवती। न च गुरुनियोगा विचारमर्हन्ति।

कुशः—साधयामस्तावत्, अग्रतस्तत्र यत्कालोचितमनुष्ठास्यावः।

( परिक्रामतः )

वि—इदो इदो अज्जा। (क)

रा—( विलोक्य ) नूनं तदेवैतद्दारकद्वयं कौशिकेनोपदिश्यमान-
मार्गमित एवाभिवर्तते। कथमस्भायितोऽस्मि। किन्नु
खल्वेतत्।

---

(क) इत इत आर्यौ।

---

'आक्रान्ते शैशवेऽस्मिन्नभिनववयसा शासनान्मीनकेतो-
र्बालाया नेत्रयुग्मं श्रुतियुगमविशद्भ्रूयुगेनापि सार्धम्।
वक्षोजद्वन्द्वमुच्चैर्बहिरिह निरगाच्छ्रोणिबिम्बेन साकं
मध्यः सङ्गृह्य बद्धस्त्रिवलिभिरभितः कार्श्यमङ्गीकरोति' ॥
वयःप्रकर्षादुपचीयमानस्तनद्वयस्योद्वहनश्रमेण।
अत्यन्तकार्श्यं वनजायताक्ष्या मध्यो जगामेति ममैष तर्कः ॥
काञ्चीगुणैर्विरचिता जघनेषु लक्ष्मी-
लब्धा स्थितिः स्तनतटेषु च रत्नहारैः।
नो भूषिता वयमितीव नितम्बिनीनां
कार्श्यं निरर्गलमधार्यत मध्यभागैः' ॥

इति सुन्दरीणां मध्यभागकार्श्यमालम्ब्य विविधकल्पनाजालेन प्रचितानि पद्यप्रसूनानि प्रचुराणि दृश्यन्ते साहित्यसरस्याम्। शिरसि चाघ्रायेति—शिरश्चुम्बनं विधायेत्यर्थः।

सीत्कारेति—सीत्कारेण लक्षितं समुद्भासितं यत् स्मितं तेन मधुरं मनोहरमिति क्रियाविशेषणम्। स्मितलक्षणं पुनः—

'ईषत्प्रफुल्लितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः।
अदृष्टदन्तकुसुमैरुत्तमानां स्मितं भवेत्' ॥ इति।

कर्णपत्रं कर्णभूषणविशेषम्। वर्धयन्ती कर्णविवरान्निस्सारयन्तीति तात्पर्यम्। वर्धनपदप्रयोगः सायं व्यापारोपरमे हट्टकपरित्यागकालोचिते तद्द्वारपिधाने, दीपकनिर्वापणे चापि भूयान् दृश्यते पञ्जाप् प्रान्ते।

युज्यते कर्त्तव्यत्वेन योग्योऽस्ति। कुशलवयोरयं प्रश्नोत्तरालापो नितरां स्वाभाविकः परमहृद्यश्चेति नात्र सन्देहः।

गुरुनियोगेति—गुरुनियोगः गुरूणामादेशाः। विचारं तर्कवितर्कपुरस्सरनिर्धारणम्। तथा च कालिदासः—

न चैतदभिजानामि नाकूतमपि किञ्चन ।
तथाप्यापातमात्रेण चक्षुरुद्बाष्पतां गतम् ॥ ६ ॥

अथवा किमत्राश्चर्यम्—

आपातमात्रेण कयापि युक्त्या
सम्बन्धिनः सन्नमयन्ति चेतः ।
विमृश्य किं दोषगुणानभिज्ञ-
श्चन्द्रोदये श्च्योतति चन्द्रकान्तः ॥ १० ॥

निर्वर्णयामि तावत्किमाकारावेताविति । कथं द्रष्टुमपि न प्रभवामि । यथा यथा कुमारावेतौ निर्वर्णयामि तथा तथा हृदयमप्यननुभूतपू-

---

'आज्ञा गुरूणां ह्यविचारणीया'। इति,

साधयामः गच्छामः । 'प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यते'—इति दर्पणः ।

कालोचितं समयानुकूलम् । लवस्योत्तरप्रत्युत्तरचातुरी गुरुभक्तिश्च प्रशस्या । कुशस्यापि गर्वातिशयः कौमारावस्थोचितः सहृदयहृदयहारी ।

अस्मायितः आत्मानं विस्मृत्य अन्यथात्वमापादितः । कुशलवौ वीक्ष्य कश्चना—पूर्वो मनोविकारो रामस्य जातः, तस्यैवायं प्रपञ्चो नचैतदिति—

एतत् न अभिजानामि आकूतमपि न च जानामि; तथापि आपातमात्रेण चक्षुः उद्बाष्पतां गतमित्यन्वयः ।

एतत् पुरो दृश्यमानं दारकद्वयं दारकयुग्मं बालकद्वयं कुशलवरूपं न अभिजानामि परिचिनोमि । आकूतमपि एतयोरभिप्रायं मनोगतं भावमपि च न जानामि वेद्मि । तथापि आपातमात्रेण दर्शनसमकालमित्यर्थः । 'तदात्वे पात आपातः'—इत्यमरः । झटित्येवेति तात्पर्यम् । चक्षुः मदीयं नयनं उद्बाष्पतां गतं अश्रुक्लिन्नं जातमिति ॥ ६ ॥

सम्बन्धिनः कयापि युक्त्या आपातमात्रेण चेतः सन्नमयन्ति । दोषगुणानभिज्ञः चन्द्रकान्तः चन्द्रोदये विमृश्य श्च्योतति किमित्यन्वयः ।

सम्बन्धिनो बान्धवाः, तथात्वेनाविदिता अपीति भावः । कया अपि अनिर्वचनीयया युक्त्या, आपातमात्रेण झटित्येव चेतः चित्तं सन्नमयन्ति आत्मप्रवणं कुर्वन्ति । तत्र दृष्टान्तमाह दोषेति—दोषाणां दूषणानां गुणानां च अनभिज्ञः, अचेतनत्वाद्गुणदोषावजानानः चन्द्रकान्तः चन्द्रोपलः चन्द्रोदये सति चन्द्रे अभ्युदिते सति विमृश्य विचार्य श्च्योतति द्रुतो भवति किम् ? नैवेत्यर्थः । अजानतोऽपि बन्धुभावं सान्निध्यमात्रेण चन्द्रकान्तमणेर्द्रवीभावो यथा चन्द्रनिमित्तः प्रत्यक्षीक्रियते नच तद्धेतुरवसीयते तद्वदेव पारस्परिकसम्बन्धे अविदितेऽपि रामस्याश्रुविमोको हर्षविस्मयोद्भावितः सन्निहितयोः कुशलवयोर्बान्धवत्वप्रयोजकः स्यादिति भावः ॥१०॥

वेंण साध्वसप्रहर्षशोकानुक्रोशसम्भेदचित्रेणावस्थाविशेषेणाक्रम्यमाणं मूर्च्छयेव तिरोधीयते । ( मूर्च्छामभिनीय ) बाष्पपातश्च कथम्! प्रशान्त इव मे हृदयस्तम्भो बाष्पपातेन; स्वस्थीभूतोऽस्मि संवृत्तः । एतद्व्यपनीतबाष्पव्यवधानेन चक्षुषा पुनरवलोकयामि। ( निर्वर्ण्य ) गम्भीरोदारः सन्निवेशः । प्रशान्तमनोहरा वेषरचना ? विनयोदयोदात्तमभिक्रान्तम्, सुव्यक्तमनेन युगलेन कुलीनेन भवितव्यम् ।

वि—एसो अत्तभवं राआ, उपसप्पदु अंआ जहाहिप्पाअं । [क]

कु—वत्स लव अपि जानासि त्वं सम्प्रत्येव प्रणामसम्बन्धेन यथा मया कथितम् ?

ल—अथ सम्प्रति किम् ?

---

[क] एषोऽत्रभवान् राजा, उपसर्पतामार्यौ यथाभिप्रायम् ।

---

अननुभूतेति—पूर्वमनुभूतः अनुभूतपूर्वः, न अनुभूतपूर्वस्तेन, अद्यापि यस्यानुभवो नाभूदित्यर्थः । साध्वसेति—साध्वसं भयम्, प्रहर्षः प्रकृष्टो हर्षः प्रसन्नतातिशयः, शोकः शुक्, अनुक्रोशः करुणा तेषां सम्भेदः सम्मिश्रणं तेन चित्रेण शबलेन, यथा विविधवर्णानां सम्मिश्रणेन चित्रता जायते तथा विविधभावानां सम्भेदकृतं वैचित्र्यम् । अवस्थेति—अवस्था दशा तस्या विशेषो वैशिष्ट्यम्, तेन । आक्रम्यमाणं अभिभूयमानम् । हृदयेति हृदयस्य स्तम्भः स्तम्भनं जडता । बाष्पपातेन अश्रुमोचनेन— अश्रुप्रवाहे सति हृदयस्तम्भनिवृत्तिः । जलप्रवाहे सति अवष्टभ्य स्थितं वस्तु निवर्त्तते तद्वत् । व्यपनीतेति—व्यपनीतं निवारितं दूरीकृतमिति यावत् बाष्पं ऊष्माश्रु तदेव व्यवधानमवष्टम्भो यस्य तेन । सन्निवेशः शरीरावयवानामवस्थितिः । विनयेति—विनयस्य शालीनताया उदयेन उदात्तं हृद्यम् । 'उदात्तो दातृमहतोर्हृद्ये च स्वरभिद्यपि'—इति हैमः । भारविरपि—

तिष्ठतां तपसि पुण्यमासजन् सम्पदोऽनुगुणयन् सुखैषिणाम् ।
योगिनां परिणमन् विमुक्तये केन नास्तु विनयः सतां प्रियः ॥ इति ।

प्रणामसम्बन्धेनेति—राज्ञः प्रणाममुद्दिश्येत्यर्थः । नास्मादृशाः प्रणमन्ति कस्यापि पुरतो नमयन्ति मस्तकमित्येवंरूपं यदभिहितमित्यर्थः । पार्थिवं पृथिव्या अधिपतिं राजानम् । प्रत्यासीदामि समुपसर्पामि । साध्वसेन······स्वाङ्गानामिति—साध्वसमाशङ्का, कथं राजाऽभ्युपगन्तव्यः कथं वा तत्समक्षमावाभ्यां वर्तितव्यमित्येवंरूपा । 'आशङ्का साध्वसं दरः । भिया च'—इति हैमः साध्वसेन सकलमपि शरीरमभि-

कु—यथा यथैनं पार्थिवं प्रत्यासीदामि तथा तथा हृदयोत्कम्पकारिणा साध्वसेन न प्रभवामि स्वाङ्गानाम्, परित्यक्तोऽस्मि कस्मात्तुल्यावलेपेन ? न शक्नोमि चास्य पुरस्तादनवनतमुत्तमाङ्गमुद्वोढुम्, किं बहुना एष प्रणतोऽस्मि।

ल—कथमार्योऽप्यहमिव परमवशत्वमापादितः। ( उभौ प्रणमतः )

रा—न खलु भवद्भ्यां मर्यादालङ्घनमनुष्ठेयम्। कथं प्रणतावेव, कष्टं ब्रह्मशिरसा नतोऽस्मि। ( विषादं नाटयति )

वि—भो तुवं किं विसण्णो ? एदेहिं पउत्तो पणामो ण पडिगहीदो, एत्थ ण तुमं परिहीयसि। [क]

रा—सम्यगुपलक्षितं कौशिकेन। आर्यावतिदाक्षिण्यपेशलौ, श्रूयताम्—

---

[क] भो त्वं किं विषण्णः ? एताभ्यां प्रयुक्तः प्रणामो न प्रतिगृहीतः, अत्र न त्वं परिहीयसे।

---

भूतमास्ते साम्प्रतमिति भावः। तुल्यावलेपेनेति—राज्ञोऽवलेपो राजपदनिमित्तः, कुशस्य तु कुलक्रमागतोऽपि विशेषेण बाल्यनिमित्त इति विवेकः। स्वदेशे पूज्यते राजा'—इति मनुः। किञ्च,

वित्तं बन्धुर्वयः कर्म विद्या भवति पञ्चमी।
एतानि मानस्थानानि गरीयो यद्यदुत्तरम्॥ इति

सर्वथैव सम्मान्यो महाराजः। न शक्नोमि···उद्वोढुमिति—सर्वाभिभावि अलौकिकं तेजो रामस्य, तस्मिन् सन्निहिते महतां पर्शुरामादीनामपि तेजो विलीनं किमु कुशस्येति प्रणाम एव स्वास्थ्यकरस्तेनोपाश्रयणीयः। यथाह मनुः—

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते॥ इति।

मर्यादालङ्घनमिति—तपोधनेन क्षत्रियो न प्रणन्तव्य इति हि शास्त्रस्यादेशः, स एव मर्यादा नियमः, तस्य लङ्घनं व्युत्क्रमः, भङ्ग इति यावत्।

प्रतिगृहीतः स्वीकृतः कनिष्ठेन ज्येष्ठः प्रणम्यते—अभिवादये देवदत्तोऽहम्भोः—इति, ज्येष्ठेनापि—आयुष्मानेधि देवदत्त भो······इति वदता तत्प्रणामः स्वीकार्यः, स च विह्वलतया रामेणाद्यापि न स्वीकृत इति विदूषकेन चोद्यते तदर्थम्। परिहीयसे हीनो भवसि, न कापि तव हानिर्जायते इति तात्पर्यम्।

उपलक्षितं ज्ञातम्। अतिदाक्षिण्यपेशलौ वैदग्ध्यातिशयेन दक्षौ। तत्र 'दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम्'—इति। 'चारौ दक्षे च पेशलः'—इत्यमरः।

अयमिति—

अयं अतिसम्भ्रमेण भवद्भ्यां मयि शिरसा प्रयुक्तः प्रणामः मदनुज्ञयैव इदानीं

अयं भवद्भ्यामतिसम्भ्रमेण मयि प्रयुक्तः शिरसा प्रणामः।
भवत्विदानीं मदनुज्ञयैव युष्मद्गुरूणां चरणोपहारः ॥ ११ ॥

वि—अप्पडिहदसासणो पिअवअस्सो । एस पणामस्स परिणामोत्ति । (क)

कुशलवौ—( उत्थाय ) अपि कुशलं महाराजस्य ?

रा—युष्मद्दर्शनात्कुशलमिव । भवतोः किं वयमत्र कुशलप्रश्नस्य भाजनम्, न पुनरतिथिभाजनस्य समुचितस्य कण्ठग्रहस्य ? ( परिष्वज्य ) अहो हृदयग्राही स्पर्शः । ( विचिन्त्य ) अनभिज्ञोऽहं तनयपरिष्वङ्गसौख्यस्य, यद्यपि तां तुलामारोहे । स्थाने खलु परिक्रामन्ति तपोवनपराङ्मुखा गृहमेधिनः ।

(क) अप्रतिहतशासनः प्रियवयस्यः—एष प्रणामस्य परिणामः—इति ।

युष्मद्गुरूणां चरणोपहारः भवतु—इति योजना ।

अयं अतिसम्भ्रमेण अतित्वरया अविचार्य झटित्येव भवद्भ्यां मयि रामे शिरसा मस्तकेन प्रयुक्तः विहितः प्रणामः नतिः मदनुज्ञया ममादेशेन अनुमत्या वा इदानीं युष्मद्गुरूणां चरणोपहारः चरणयोरुपायनं भवतु । न वयं क्षत्रिया नतमस्तकानां ब्राह्मणानां प्रणतिभाजनानि, बाल्यसुलभेनाविचार्यकारित्वेन तु वयमेव लक्ष्यीकृताः, तस्मादेष प्रणामो भावत्कगुरुनिमित्त एवास्माभिरध्यवसीयते इति तात्पर्यम् ॥ ११ ॥

उत्थायेति—प्रणामानन्तरं समुत्थानं नतमस्तकदशावसाने समुत्थितेन शिरसाऽवस्थानं तद्विधायेत्यर्थः । युष्मद्दर्शनात्कुशलमिवेति—विरहिणः सीताविहीनस्य रामस्य न नाम कुशलम्, तद्विषयिणी जिज्ञासाऽज्ञानवशादुपचाराच्च, नहि पत्नीविरहखेदो रामस्य कुशलवयोर्विदितः, परस्परमेलनावसरे कुशलप्रश्नेन सम्भावनप्रकारश्च दृश्यते लोके । सीताविरहे सर्वमप्याकुलीभूतं न कुशलस्यावकाशस्तथापि युवयो र्दर्शनपथमवतीर्णयोः सान्निध्ये कुशलप्रायमिव सञ्जातम्—अद्य सुखिनमात्मानमाकलयामीति रामस्याशयः । भाजनं पात्रम् । परिष्वज्य समालिङ्ग्य । हृदयग्राही हृदयं गृह्णाति तच्छीलः, हृदयस्पर्शीत्यर्थः । तां तुलामारोहे—इति, नाद्यापि सुतस्पर्शसौख्यलाभो रामेणानुभूतः, इदानीम्पुनः कुशलवपरिष्वङ्गेण तामेव कोटिमारूढः, सुतस्पर्शसौख्यतुल्यसौख्यमेवानुभवन्नास्ते इत्यर्थः । स्थाने इत्यव्ययमौचित्यार्थकम् । 'युक्ते द्वे साम्प्रतं स्थाने'—इत्यमरः । परिक्रामन्ति गच्छन्ति । गृहमेधिनः गृहस्थाः, गृहैर्दारैर्मेधन्ते सङ्गच्छन्ते इति गृहमेधिनः ।

यथाहुः—'न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं हि गृहिणीहीनमरण्यसदृशं मतम् ॥ इति ।

( आसनार्धमुपवेशयति )

उभौ—राजासनं खल्वेतत् न युक्तमध्यासितुम् ।

रा—सव्यवधानं न चारित्रलोपाय, तस्मादङ्कव्यवहितमध्यास्यतां सिंहासनम् ( अङ्कमुपवेशयति )

उभौ—( अनिच्छां नाटयतः ) राजन्, अलमतिदाक्षिण्येन ।

रा—अलमतिशालीनतया ।

भवति शिशुजनो वयोऽनुरोधा—
द्गुणमहतामपि लालनीय एव ।

---

तनयसौख्यमभिलक्ष्याहुः—

'इदं तत्स्नेहसर्वस्वं सममाढ्यदरिद्रयोः ।
अचन्दनमनौशीरं हृदयस्यानुलेपनम्' ॥

'अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते' ॥ इति ।

अध्यासितुं उपवेष्टुम् ।

सव्यवधानं व्यवधानेन सहितम्, अन्तराले स्थापितं वस्त्वन्तरं व्यवधानमुच्यते । चारित्रलोपाय चरित्रमेव चारित्रं तस्य लोपाय विनाशाय । सिंहासनं राज्ञैवारोहणीयं नेतरेणेति नियमः, कुशलवयोः सिंहासनारूढयोर्भवेदेव व्यत्यासः, व्यवहितयोः पुनर्नासौ मर्यादाव्युत्क्रमाशङ्का इति रामेण निजोत्सङ्गे तौ स्थाप्येते । अङ्कः क्रोड उत्सङ्ग इति यावत् । शालीनता अधृष्टता सलज्जतेति यावत् । 'स्यादधृष्टे तु शालीनः'—इत्यमरः । अलमति लज्जया सङ्कोचेन वा ।

भवतीति—

शिशुजनः वयोऽनुरोधात् गुणमहतामपि लालनीय एव भवति । हिमकरोऽपि बालभावात् पशुपतिमस्तककेतकच्छदत्वं व्रजति इत्यन्वयः ।

शिशुजनः शिशुरेव जनः, कर्मधारयसमासः, बालकजातमित्यर्थः । वयोऽनुरोधात् वयसः आयुषः अनुरोधात् निमित्तात् । शैशवत्वादेव कारणादित्यर्थः । गुणमहतां गुणैर्ये महान्तः, गुणानां कृते ये महत्त्वमधिगतगतवन्तः, उच्चैः पदभाज इत्यर्थः, तेषामपि लालनीय एव भवति । तत्र दृष्टान्तमाह व्रजतीति—हिमकरः हिमाः कराः यस्य हिमाः शीतलाः । 'हिमं तुषारमलयोद्भवयोः स्यान्नपुंसकम् । शीतले वाच्यलिङ्गं स्यात्'—इति कोषः । कराः रश्मयः । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः'—इति । चन्द्रोऽपि बालभावात् बाल्याद्धेतोः । पशुपतीति—पशुपतिर्महादेवः तस्य मस्तकं शिरसोऽग्रभागो भालमिति यावत् तत्र यः केतकच्छदः

व्रजति हिमकरोऽपि बालभावा-
त्पशुपतिमस्तककेतकच्छदत्वम् ॥ १२ ॥

( साश्रुरवलोकयन् पुनः परिष्वजते । विदूषकमवलोक्य )
अपि स्मरति भवान् निर्वासितायाः सीतायाः कियन्तः संवत्सरा अतिक्रान्ता इति ।

वि—( विचिन्त्य ) सुमरामि मंदभाओ ( हस्ताङ्गुलिप्रमाणसङ्ख्यां विगणय्य उपरिष्ठात्पदाङ्गुलित्रयमपि निर्दिश्य ) किं वहुणा गणिदेण, सव्वहा अज्ज दसमो संवच्चरो देवीए सीदाए सहत्थेण परिप्पेसिदाए । (क)

रा—( कुमारौ निर्वर्ण्य ) यदि स्वस्तिना गर्भमपि निर्वर्तयेत् यदि कश्चिदवगाहेत तदपत्यमियता कालेनेदृशीमवस्थाम् ।

वि—हन्त ! तंभिदो म्हि मन्दभाओ एदाए अण्णादविप्पउत्ततणअसंकहाए । (ख)

[ रोदिति ]

---

(क) स्मरामि मन्दभाग्यः ( — ) किं वहुना गणितेन, सर्वथाद्य दशमः संवत्सरो देव्याः सीतायाः स्वहस्तेन परिप्रेषितायाः ।

(ख) हन्त ! स्तम्भितोऽस्मि मन्दभाग्य एतया अज्ञातविप्रयुक्ततनयसंकथया ।

---

केतकस्य छदः पत्रम् । 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्'—इत्यमरः । केतकं पुनः केतक्याः कुसुमम्, 'केवड़ा' इति भाषायाम् ।

'स कौतुकी तत्र ददर्श केतकम्'–इति नैषधीये । केतकदलं हि मृदुलं धवलञ्च तद्रूपतां व्रजति गच्छति बालचन्द्रमाः शिवशिरसि स्थितः । तथा च—

पिनाकफणिबालेन्दुभस्ममन्दाकिनीयुता ।
पवर्गरचिता मूर्तिरपवर्गप्रदास्तु वः ॥ इति ।

अत एव च चन्द्रमौलिरिति व्यपदिश्यते भगवानुमाजानिः ॥ १२ ॥

यदि स्वस्तिना......अवस्थामिति—क्रव्यादैर्भक्षिता चेत् सीता तर्हि समाप्तैव सर्वा कथा । न भक्षिता चेत् तदापि शोकभराक्रान्ताया भ्रूणहानिप्रसङ्गः सम्भवी । स्वस्तिना कल्याणेन तु निर्विघ्नं सञ्जाते गर्भविमोचने समुचितावश्यकपदार्थजाताभावे कान्तारे म्रियेतैवापत्यम् । यदि तदपि जीवतु इयन्तं कालं च विधृतं तिष्ठतु तदा तदिमामवस्थां कुशलवावस्थासमामवगाहेत भजेतैवेति तात्पर्यम् । वाक्यं तु पुनरित्थं योजनीयम्—यदि स्वस्तिना गर्भमपि निर्वर्तयेत् ( सम्पादयेत् सीतेत्यर्थः ) यदि

---

१ उपरिष्ठान्'—इति न समीचीनं मूलपुस्तके।

रा—अहमप्येतौ तापसकुमारावलोकयन्नसह्यवेदनामवस्थामवतीर्णो-ऽस्मि ।

यां यामवस्थामवगाहमानमुत्प्रेक्षते स्वं तनयं प्रवासी ।
विलोक्य तां ताञ्च गतं कुमारं जातानुकम्पो द्रवतामुपैति ॥१३॥

(परिष्वज्य रोदिति)

---

कश्चित् ( स्यादित्यध्याहार्यम् ) अवगाहेत ( प्राप्नुयादित्यर्थः ) तदपत्यं (सीताया) इयता कालेन ईदृशीमवस्थाम् । 'यदि कश्चिदि'ति पदद्वयेऽपनीते तु भवेदेव वाक्यं चारु, स्पष्टार्थकञ्च ।

स्तम्भितः स्तब्धगात्रः । अज्ञातेति—अज्ञात एव विप्रयुक्तः ( पित्रा ) यस्तनयः सीतापत्यरूपः तस्य संकथया वार्त्तया । पित्रा यो न दृष्टः सर्वथा च विप्रयुक्तो यस्तनयः स कथं शोकं न जनयेत् ? सर्वथा पितरस्तनयदर्शनं वाञ्छन्ति । जातः पुनर्गच्छति काले यदि दर्शनपथमुपेयात्तदापि भद्रं स्यात् । अत्र तु सर्वथा प्रणष्ट इति महद्वैशसमिति भावः ।

असह्येति—असह्या सोढुमशक्या या वेदना व्यथा मानसी पीडेति यावत् यस्यां तामवस्थां दशाम् ।

यामिति—

प्रवासी स्वं तनयं यां यां अवस्थां अवगाहमानं उत्प्रेक्षते
तां तां च गतं कुमारं विलोक्य जातानुकम्पः द्रवतां उपैतीत्यन्वयः ।

प्रवासी गृहाद्दूरवर्ती कश्चित् स्वं तनयं बालं गृहवर्तिनं दूरेऽवस्थितं यां यां अवस्थां अवगाहमानं सेवमानं उत्प्रेक्षते कल्पनाबलात्पश्यति तां तां अवस्थां गतञ्च अन्यं कुमारं विलोक्य परकीयं बालकं स्वबालकसमदशं समीक्ष्येत्यर्थः जातानुकम्पः सवेपथुः सदयश्च सन् स द्रवतां द्रवीभावं आर्द्रतां उद्बाष्पतामिति यावत् उपैति उपागच्छति ।

परकीयान् बालकान् विदेशे समीक्ष्य स्वगृहावस्थितं निजशिशुं परोक्षमपि कल्पनया प्रत्यक्षीकरोति प्रवासी । तथा च स्मारं स्मारं शिशुं प्रसभं रोदिति, तद्वदेव रामोऽपि सीतापत्यस्य स्मरणमात्रकेण भृशमुद्बाष्पतां गतः । प्रवासिना स्वसुतो दृष्टः स्यात्, अदृष्टोऽपि गृहे जनन्या अङ्के लाल्यमानः कुशली किल कुमार इति च तत्प्रत्ययः । रामेण तु तनयो न दृष्टः, जातो नापि जातः पूर्वमेव केनापि निमित्तेन प्रणष्ट इति न निश्चयः । स पुनः स्मर्यमाणो गृहेऽपि वसतः प्रवासिनो रामस्य विशिष्टदुःखनिदानमिति करुणापूरपूर्णमालिखितमेतदज्ञातविप्रयुक्ततनयवृत्तं कविना ॥ १३॥

साकेतनिवासिनामयोध्यापुरीवास्तव्यानाम् । साकेतमिति पुरातनं नाम

वि—[ ससम्भ्रमं ] अविह मुंच, सप्पं, मुंच, जीवदु तवस्सितणओ, ओदरदु सिंहासणादो। [क]

रा—[ ससम्भ्रमं कुमारौ मुञ्चन् ] वयस्य, किमेतत् ?

वि—सुदं मए साकेदणिवासिणं चिरजीविआणं मुहादो—जो किल अराहवो इमं सिंहासणं अदिरोहदि तस्स मुद्धा सदहा सदहा विदलदित्ति। [ख]

रा—[ सावेगं ] अवतीर्यतां शीघ्रम्।

[ उभाववतीर्य भूमावुपविशतः ]

रा—अपि स्वस्थौ भवन्तौ, मूर्ध्नो वा न किञ्चिद्विकारः ?

उभौ—भोः ! स्वस्थावेवावाम्, न किञ्चिन्मूर्ध्नो विकारः।

वि—अहो अच्चरिअं ! अच्चरिअं ! एवं णाम अवरिक्खदपइदित्थसरीरा चिट्ठंति (ग)

---

(क) अविधा मुञ्च, सर्पः, मुञ्च, जीवतु तपस्वितनयः, अवतरतु सिंहासनतः।

(ख) श्रुतं मया साकेतनिवासिनां चिरजीवितानां मुखतः—यः किलाराघवः इमं सिंहासनमधिरोहति तस्य मूर्धा शतधा शतधा विदलेदिति।

(ग) अहो आश्चर्यमाश्चर्यम् ! एवं नाम अपरिक्षतप्रकृतिस्थशरीरौ तिष्ठतः।

---

अयोध्यापुर्याः। स आसीत्कालो यत्र साकेतमित्येव नामासीन्न पुनरयोध्येति पुराविदः। चिरजीवितानामतिचिरं जीवितानाम्, दीर्घायुष्काणां जनानाम्, पुरवृद्धानामिति यावत्।

स्वस्त्ययनेति—स्वस्त्ययनेन परिगृहीतानि। 'स्वस्त्याशीःक्षेमपुण्यादौ'—इत्यमरः, तस्य अयनं स्थानम्।

तथा च कालिदासः—

प्रातर्यथोक्तव्रतपारणान्ते प्रास्थानिकं स्वस्त्ययनं प्रयुज्य।
तौ दम्पती स्वां प्रति राजधानीं प्रस्थापयामास वशी वसिष्ठः॥

इति। स्वस्त्ययनं शुभावहमाशीर्वादमिति च मल्लिनाथः। तेन परिगृहीतानि समुपेतानि।

---

१ अविधा इत्यव्ययं 'अविह'-इति प्राकृतस्य संस्कृतच्छायारूपं मूलपुस्तके नास्ति, अतोऽस्माभिः कल्पितमिह चोपन्यस्तम्।

रा—किमत्राश्चर्यम् ( कुमारौ निर्दिश्य ) स्वस्त्ययनपरिगृहीतानि तपश्शरीराणि। पश्य—

अपि नाम शरा मोघास्तपस्सन्नद्धमूर्तिषु।
वासवस्यापि सुव्यक्तं कुण्ठाः कुलिशकोटयः ॥ १४ ॥

( कुमारावुद्दिश्य )

किं भवद्भ्यामव्यवहिता भूमिरध्यास्यते ?

उभौ—महाराज, प्रथमपरिणी (णा) तोऽयमर्थः।

रा—तथा नाम।

वि—भो राअ, अदिही खु एदे, ता करिदु संकहाहिं आहिहेअं। (क)

रा—एष भवतोः सौन्दर्यावलोकनजनितेन कौतूहलेन प्रतार्यमानः पृच्छामि, कतमो वर्णं आश्रमो वा भवतोर्जन्मदीक्षाभ्यामलङ्क्रियते ?

कु—[ सञ्ज्ञया लवमादिशति ]

---

[क] भो राजन्, अतिथी खल्वेतौ, तत्करोतु संकथाभिरातिथेयम् ( थ्यम् )।

---

अपीति—

तपः सन्नद्धमूर्तिषु शरा अपि नाम मोघाः, वासवस्यापि
कुलिशकोटयः कुण्ठाः ( इति ) सुव्यक्तम्॥

तपसा ब्रह्मचर्यादिना व्रतेन सन्नद्धा वर्मिता व्यूढा वा मूर्तिः शरीरं येषां तेषु। 'सन्नद्धो वर्मिते व्यूढे'—इति मेदिनी। शरा बाणा अपि मोघाः व्यर्थाः अकिञ्चित्कराः इति भावः। वासवस्य इन्द्रस्य कुलिशकोटयः कुलिशस्य कोटयः वज्रस्य धारा अपि कुण्ठाः भग्नतैक्ष्ण्याः भवन्तीति सुव्यक्तम्। यथा लोहादिधातुनिर्मिते कवचे परिणद्धे शरीरं शरैर्न विध्यते व्यथ्यते च तद्वदेव तपस्विनां तपोऽपि वर्मायते इति भावः। अत एव किरातरूपे भगवति शरनिकरान् प्रक्षिपतो व्यर्थप्रयासस्यार्जुनस्य परिदेवनं किरातार्जुनीये दृश्यते। तद्यथा—

'माया स्विदेषा मतिविभ्रमो वा ध्वस्तं नु मे वीर्यमुताहमन्यः।
गाण्डीवमुक्ता हि यथा पुरा मे पराक्रमन्ते न तथा किराते' ॥ इति ॥१४॥

अव्यवहिता व्यवधानरहिता। भूमिः प्रदेशः स्थानमिति यावत्। अध्यास्यते निविश्यते सेव्यते इति वा। किं युवयोर्द्वयोरप्येकत्रैव स्थाने वासः, उत पृथक पृथगिति तात्पर्यम्।

ल—द्वितीयो वर्णः प्रथम आश्रमः।

रा—नैतावग्रजन्मानौ, तदल्पापराधः[1] प्रणामप्रयोगो न्यूनासनपरिग्रहश्च। अथ क्षत्रियकुलपितामहयोः सूर्याचन्द्रमसोः को वा भवतोर्वंशस्य कर्त्ता?

ल—भगवान् सहस्रदीधितिः।

रा—कथमस्मत्समानाभिजनौ संवृत्तौ।

वि—किं दोएणं वि एक्कं एव पडिवअणं (क)

रा—कच्चिदस्ति युवयोर्मिथो यौनः सम्बन्धः?

ल—भ्रातरावावां सोदर्यौ[2]।

रा—संवादी सन्निवेशः, वयसस्तु न किञ्चिदन्तरम्।

ल—आवां यमलौ।

रा—सम्प्रति युज्यते, को भवतोर्ज्यायान्, किं नामधेयम्?

ल—( अञ्जलिना निर्दिश्य ) आर्यस्य पादपूजनायां लव इत्यात्मानं श्रावयामि, आर्योऽपि गुरुचरणवन्दनायां—( अप्रतिपत्तिं नाटयति )

कु—अहमपि कुश इत्यात्मानं श्रावयामि।

रा—अहो उदात्तरम्यः समुदाचारः।

वि—जाणिदं णामहेअं, को जेट्ठोत्ति ण दिएणं पडिवअणं। (ख)

रा—नन्वञ्जलिनिर्देशादनामग्रहणाच्च दत्तमेव प्रतिवचनं कुशो ज्यायानिति।

---

[क] किं द्वयोरप्येकमेव प्रतिवचनम्?

[ख] ज्ञातं नामधेयम्, को ज्येष्ठ इति न दत्तं प्रतिवचनम्।

---

प्रथमेति—प्रथमतो जन्मारभ्यैव परिणतः सम्पन्नः, अयमर्थः एष समानस्थानरूपः पदार्थः। जन्मनः प्रभृति आवामेकत्रैव स्थाने न्युषितवन्तावित्यर्थः।

आतिथेयम्—अतिथौ साधु। 'पथ्यतिथि'—( ४। ४। १०४ ) इति ढञ्। आतिथ्यमिति पाठे अतिथये इदम्। 'अतिथेर्न्यः' ( ५। ४। २६ )। 'क्रमादातिथ्यातिथेये अतिथ्यर्थेऽत्र साधुनि'—इत्यमरः।

वर्णो ब्राह्मणक्षत्रियादिः। आश्रमो ब्रह्मचर्यादिः। द्वितीयो वर्णः क्षत्रियत्वरूपः। प्रथम आश्रमो ब्रह्मचर्यम्। आवां क्षत्रियौ ब्रह्मचारिणौ चेति तात्पर्यम्।

अग्रजन्मानौ ब्राह्मणौ। अग्रे आदौ जन्मास्य। अग्रान्मुखाद्वा जन्मास्य।

---

१ 'तदल्पोऽपराधः'—इति मूलपुस्तकस्थः पाठस्तु चिन्त्य एव।

२ 'सौदर्यौ'—इत्यपपाठो मूलपुस्तके।

वि—साहु जाणिदं संपदं । (क)
रा—किन्नामधेयो भवतोर्गुरुः ?
ल—ननु भगवान् वाल्मीकिः ।
रा—केन सम्बन्धेन ?
ल—उपनयनोपदेशेन ।
रा—अहमत्रभवतोः शरीरस्य धातारं पितरं वेदितुमिच्छामि ।
ल—नहि जानाम्यस्य नामधेयम् न कश्चिदस्मिंस्तपोवने तस्य नाम व्यवहरति ।
रा—अहो माहात्म्यम् ।
कु—जानाम्यस्य नामधेयम् ।
रा—कथ्यताम् ।
कु—निरनुक्रोशो नाम ।
रा—( विदूषकमवलोक्य ) अपूर्वं खलु नामधेयम् ।
वि—( विचिन्त्य ) एव्वं दाव पुच्छिस्सं । णिरणुक्कोसोत्ति को एव्वं भणादि ? (ख)
कु—अम्बा ।
वि—किं कुविदा एव्वं भणादि, आदु पइदित्था ? (ग)

---

[क] साधु ज्ञातं साम्प्रतम् ।
[ख] एवं तावत् पृच्छामि । निरनुक्रोश इति क एवं भणति ?
[ग] किं कुपिता एवं भणति उत प्रकृतिस्था ?

---

'अग्रजन्मा द्विजश्रेष्ठे भ्रातरि ब्रह्मणि स्मृतः'—इति विश्वः । अल्पापराधः अल्पोऽपराधो यस्मिन् सः । प्रणामेति—प्रणामस्य कुशलवकृतस्य रामार्थे नमनस्य प्रयोगो व्यवहारः । न्यूनेति—न्यूनं नितरामूनं अधोवर्ति यदासनं तस्य परिग्रहः स्वीकारः । सहस्रदीधितिः सूर्यः सहस्राणि दीधितयः किरणाः यस्य, सहस्रं वा दीधितीनां यस्य । 'अनन्ता वै सहस्रम्'—इति शतपथब्राह्मणे। दीधितयः किरणाः । तथा चामरः—

'किरणोस्रमयूखांशुगभस्तिघृणिरश्मयः ।
भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम्' ॥ इति ।

समानाभिजनौ समानकुलौ । 'भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे । कुलेऽपि च पुमान्'—इति मेदिनी ।

प्रतिवचनमुत्तरम् ।

मिथः परस्परम् । 'मिथोऽन्योन्यं रहस्यपि'—इत्यमरः ।

कु—यद्यावयोर्बालभावजनितं किञ्चिदविनयं पश्यति तदैवमधिक्षिपति—निरनुक्रोशस्य पुत्रौ मा चापलम्—इति।

वि—एदाणं जदि पिदुणो णिरणुक्कोसोत्ति णामहेअं, एदाणं जणणी तेण अवमाणिदा णिव्वासिदा, तस्स अप्पवहंती एदिणा वअणेण दारअं णिब्भच्छदि। (क)

रा—सम्यगुपलक्षितं कौशिकेन। ( निश्वस्य ) धिङ् मामेवंभूतम्। सा तपस्विनी मत्कृतेनापराधेन स्वापत्यमेवं मन्युगर्भैरक्षरैर्निर्भर्त्सयति ( सबाष्पमवलोकयति ) अपि सन्निहितस्तत्र भवान् निरनुक्रोशो युष्मदाश्रमे ?

ल—न सन्निहितः।

रा—( ससम्भ्रमं ) अपि श्रूयते ?

ल—( कुशमवलोकयति )

कु—न तस्य पादावस्माकं नमस्कृतपूर्वौ। अम्बायाः पुनरेकवेणीसंसूचितानि तस्योच्छ्वासितानि।

रा—किं वा भवन्तौ तेनाघ्रातपूर्वौ ?

कु—तदपि नास्त्येव।

---

[क] एतयोर्यदि पितुर्निरनुक्रोश इति नामधेयम्, एतयोर्जननी तेनावमानिता निर्वासिता, तस्याप्रभवन्ती एतेन वचनेन दारकं निर्भर्त्सयति।

---

यौनः—योनिर्जनिस्थानं तत्सम्बन्धी।

सोदर्यौ—समान उदरे शयितौ। 'समानोदरे शयितः'—[ ४। ४। १०८ ] इति यत्। 'समानोदर्य सोदर्यसगर्भ्य सहजाः समाः' इत्यमरः।

संवादी संवदनशीलः समानाकारः। सन्निवेशोऽवयवानां पर्यवस्थितिः। वयसः आयुषः। अन्तरं भेदः।

यमलौ सहोत्पन्नौ भ्रातरौ।

अप्रतिपत्तिं कुशस्य ज्यायसो नामग्रहणेऽनादरमित्यर्थः।

समुदाचारः व्यवहारः, कनीयसा ज्यायसो नामाग्रहणरूपः।

किंनामधेयः किन्नामा। 'आख्यायामभिधानञ्च नामधेयञ्च नाम च'—इत्यमरः।

उपनयनोपदेशेनेति—उपनयनं यज्ञोपवीतप्रदानपूर्वकं वेदाध्ययनारम्भणाय

रा—अतिदीर्घप्रवासोऽयं दारुणश्च, यदियता कालेन नाम परस्परलोचनगोचरमपि नावतीर्णा यूयम् । ( विदूषकमवलोक्य जनान्तिकम् ) कुतूहलेनाविष्टो मातरमनयोर्नामतो वेदितुमिच्छामि । न युक्तं च मम स्त्रीगतमनुयोक्तुम्, विशेषतस्तपोवने । तत्कोऽत्राभ्युपायः ?

वि—( जनान्तिकं ) अप्पडिहदवअणमहत्तणा हि वह्मणजादी, अहं उण पुच्छिस्सं ( प्रकाशम् ) भो किंणामहेआ तुह्माणं जणणी ? ( क )

ल—तस्या द्वे नामनी ।

वि—कहं विअ ? ( ख )

ल—तपोवनवासिनो देवीतिनामाह्वयन्ति, भगवान् वाल्मीकिर्वधूरिति ।

रा—कतमं क्षत्रियकुलं वाल्मीकिमुनिमुखनिर्गतेन वधूशब्देन वर्धते ?

---

[क] अप्रतिहतवचनमहत्त्वा हि ब्राह्मणजातिः अहं पुनः पृच्छामि।
[ — ] भो किन्नामधेया युवयोर्जननी ?
[ख] कथमिव ?

---

गुरुणा शिष्यस्य समीपावस्थापनम्, तस्मिन् य उपदेशः 'धर्मंचर, स्वाध्यायान्मा प्रमदः'—इत्येवंरूप आदेशः ।

धातारं विधातारं निर्मातारमित्यर्थः । वेदितुं ज्ञातुम् । तथा च भारविः—
'श्रियः कुरूणामधिपस्य पालनीं प्रजासु वृत्तिं यमयुङ्क्त वेदितुम् ।
स वर्णिलिङ्गी विदितः समाययौ युधिष्ठिरं द्वैतवने वनेचरः' ॥ इति ।

निरनुक्रोशः निर्दयः । 'कारुण्यं करुणा घृणा। कृपा दयानुकम्पा स्यादनुक्रोशोऽपि' इत्यमरः ।

भणति प्रोच्चारयति ।

प्रकृतिस्था प्रकृतौ तिष्ठतीति । स्वाभाविकदशायां विकारवर्जितायामवस्थिता ।

अविनयं दौःशील्यम् । अधिक्षिपति तिरस्करोति । बालभावेन तदपि निवेदयतः कुशलवौ यद्धि न निवेदनीयम् । अत एव कविः स्वाभाविकस्थितिनिरूपणे परमनिपुण इति । निरनुक्रोशस्येति—निरनुक्रोशस्य पुत्रौ मा चापलं कुरुतामिति वाक्यं पूरणीयम् । अत्यन्तदुःखिताया आधिखिन्नायाः सीतायाः पुत्रयोश्चापलाद् भृशं खिद्यते मनः, तौ पुनरम्बाया व्यथामजानन्तौ यदा चापलान्न विरमतस्तदा

वि—वित्थिएणं खत्तिअकुलं ति ण जाणीअदि कदमं खत्तिअ-
कुलं ति। (क)

रा—अपि च इतस्तावद्वयस्य, मुहूर्त्तमात्रम्।

वि—[ उपसृत्य ] आणवेदु भवं। [ख]

रा—अपि कुमारयोरनयोरस्माकं च सर्वाकारसंवादी कुटुम्बवृत्तांतः?

वि—कहं विअ? [ग]

रा—पश्य, एतयोः सीतागर्भस्य च तुल्यः कालातिपातः, एतावपि
क्षत्रियौ सूर्यान्वयौ, अजातप्रोषितौ च निर्विकारौ राजास-
नारोहणे, पितरि चानयोर्दारुणत्वसूचनो निरनुक्रोशशब्दः,
मातुश्च माहात्म्यविभावनो देवीशब्दः। सर्वथाहमनेन सादृश्य-
बाहुल्येन पर्याकुलोऽस्मि मन्दभाग्यः।

[ वैक्लव्यं नाटयति ]

वि—किं तव ईरिसो अहिप्पाओ सीदागब्भगदा एदे दारआ त्ति? [घ]

रा—मामैवम्। कथं हन्त! तपोवनवासिनि जने सम्बन्धमीदृश-
मध्यारोपयामि। किन्तु—

---

(क) विस्तीर्णं क्षत्रियकुलमिति न ज्ञायते कतमं क्षत्रियकुलमिति।
(ख) आज्ञापयतु भवान्।
(ग) कथमिव?
(घ) किं तवेदृशोऽभिप्रायः, सीतागर्भगतावेतौ दारकाविति?

---

तावपि निर्दयावेव। कारणगुणपूर्वकाः कार्यगुणा इति च काणादसिद्धान्तश्चारि-
तार्थ्यं व्रजतीति भावः।

न नमस्कृतपूर्वौ पूर्वं नमस्कृतौ नमस्कृतपूर्वौ, निष्ठेति पूर्वनिपातः। आवाभ्यां
तातो नाद्यापि साक्षात्कृत इत्यभिप्रायः। एकवेणीति—एका वेणी एकवेणी तया
संसूचितानि ज्ञापितानि। 'वेणी सेतुप्रवाहयोः। देवताले केशबन्धे'—इति हैमः।
केशबन्ध इह प्रोषितभर्तृकाधार्यः केशरचनाविशेषः। तस्य निरनुक्रोशस्य। उच्छ्वा-
सितानि सीताया ये विप्रवासमूला दीर्घदीर्घा उच्छ्वासास्ते निरनुक्रोशस्यैव कृते, स
एव तेषां निदानम्, तत्प्रयोजितत्वाण्णिचः प्रयोगः।

आघ्रातपूर्वौ पूर्वं आघ्रातौ, चुम्बितौ।

दारुणः कठोरः, अतिदुःखदः। परस्पर······यूयमिति, युवयोस्तातेन नाद्यापि
युवां दृष्टावित्यर्थः।

जनान्तिकमिति—

एतत्कुमारयुगलं वयसान्वयेन
श्यामोन्नतेन वपुषा विपदानया च ।
तां मैथिलीं तनयसम्भविनीमवस्था-
मादाय मामतितरां तरलीकरोति ॥ १५ ॥

[ चिन्ताशोकं नाटयति ]

( नेपथ्ये )

भो भोः कोऽत्रसन्निहितस्तत्रभवतोरिक्ष्वाकुकुलकुमारयोः कुश-लवयोः ?

उभौ—( आकर्ण्य ) द्वावप्यावां सन्निहितौ ।

---

त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम्' ॥ इति दर्पणः ।

स्त्रीगतं स्त्रीविषये । अनुयोक्तुं प्रष्टुम् । तपोवने नैमिषाख्येऽरण्ये ।

अप्रतिहतेति—न प्रतिहतं यद्वचनं तेन महत्त्वं यस्याः सा, ब्राह्मणानां वाचः सत्यवसरे प्रसरन्ति न सङ्कोचेन प्रतिहन्यन्ते ।

द्वे नामनीति—सीतां नामग्राहं न कश्चन सम्भाषते इति तस्याः सत्कृतिः, 'देवी'ति 'बधू' इति च नाम्नी निर्दिशतोः कुशलवयोः शैशवसुलभा सरलता च समीचीनतया व्यज्यते ।

महात्म्यविभावनः माहात्म्यं गौरवं विभावयति बोधयतीति । एतदिति—

एतत् कुमारयुगलं ( कर्तृ ) वयसा अन्वयेन श्यामोन्नतेन वपुषा अनया विपदा च तां मैथिलीं तनयसम्भविनीमवस्थां आदाय अतितरां मां तरलीकरोति ॥

एतत् कुमारयुगलं कुमारयुग्मं कुशलवरूपं वयसा आयुषा हायनैरित्यर्थः, सीतापरित्यागादिदानीं यावत् संवत्सरेष्वमीषु तदपत्यमपि अस्मिन् वयसि स्यादिति तात्पर्यम् । अन्वयेन वंशेन सौरेण श्यामोन्नतेन श्यामेन तप्तकाञ्चनवर्णाभेन उन्नतेन उच्छ्रायवता च वपुषा शरीरेण, तत्र श्यामता सीताशरीरजा, उच्छ्रायश्च रामगात्रजः स्यात् । अनया च विपदा विपत्त्या निरनुक्रोशपुत्रत्वे सति जनकादर्शनरूपा महती विपद् बालयोः कुशलवयोः । तां मैथिलीं जानकीं तनयसम्भविनीं तनयस्य बालकस्य सम्भवोऽस्यामस्तीति तनयसम्भविनी ताम्, अवस्थां दशां आदाय प्राप-य्य, अन्तर्वत्नीदशायां तां सीतां मम मानसचक्षुर्गोचरमानीयेत्यर्थः, मामतितरां भृशं तरलीकरोति चञ्चलयति चापल्ययुक्तं करोति, मम धैर्यं विनाशयतीत्यर्थः । सीता तदानीमन्तर्वत्नी अभूत्, एतौ च कुमारौ वयसा वंशेन वपुर्महिम्ना च सर्वथा सीतापत्यत्वप्रत्ययं जनयतः, किं सत्यमेव प्रिया मे जीवति, किञ्चाहं सुतयोरनयोस्तात इति हर्षो मम धृतिसेतुं समुल्लङ्घ्य प्रवर्तते इति तात्पर्यम् ॥ १५ ॥

नेपथ्यगतस्योपाध्यायदूतस्याशयः कुशलवयोः सन्निधौ कोऽत्रस्थितः, न तावे-

( पुनर्नेपथ्ये )

किमितीयतीं वेलां नियोगः प्रत्युदास्यते ?

वाल्मीकिना मुनिवरेण महारथस्य
याऽसौ पुराणपुरुषस्य कथा निबद्धा।
सा राघवश्रुतिपथातिथितां च नेया
कालश्च मध्यसवनस्य न लङ्घनीयः ॥ १६ ॥

उभौ—राजन्, उपाध्यायदूतोऽस्मान् त्वरयति।

रा—मयापि सम्भावनीय एव महार्थसंविधायी मुनिनियोगः।

तथाहि—

भवन्तौ गायन्तौ कविरपि पुराणो व्रतनिधि-
र्गिरां सन्दर्भोऽयं प्रथममवतीर्णो वसुमतीम्।

---

काकिनौ, सति सान्निध्येऽपि कः पुनर्जनो यः समीपेऽवतिष्ठते इति। उदात्तवंशस्य करीरयोः कुशलवयोः संरक्षणाव्यग्रस्य वचनमिदम्। 'द्वावप्यावां सन्निहितौ'—इति प्रत्युत्तरयतोः कुशलवयोः पुनराशयस्तु न आवां भवत्तो दूरस्थौ, अपि तु समीपस्थौ, अथचावामपि परस्परमवियुक्तौ तिष्ठावः, न वियुक्ताविति। नियोगोऽनुज्ञा रामायणीकथाश्रावणरूपो गुरोरादेशः, स प्रत्युदास्यते उपेक्ष्यते। अद्यापि किमिति सङ्गीतकप्रारम्भो भवद्भ्यां न व्यधायीति प्रश्नरहस्यम्। वाल्मीकिनेति—

वाल्मीकिना मुनिवरेण महारथस्य पुराणपुरुषस्य याऽसौ कथा निबद्धा सा राघवश्रुतिपथातिथितां च नेया मध्यसवनस्य कालश्च न लङ्घनीयः इति योजना। वाल्मीकिना मुनिवरेण मुनिवर्येण, मुनीनां श्रेष्ठेन—

'दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थिरधीर्मुनिरुच्यते' ॥ इति

तादृशानां मुनीनामपि मूर्धन्यो वाल्मीकिः, तेन महारथस्य महान् रथो यस्य, यद्वा योधप्रवरस्य पुराणपुरुषस्य रामाभिधस्य विष्णोः याऽसौ तपोधनेषु प्रसिद्धा कथा रामायणरूपा निबद्धा समुद्ग्रथिता सा राघवेति—राघवस्य रामस्य श्रुतिपथस्य कर्णविवरस्य अतिथितां अतिथिभावं नेया नेतव्या रामस्य श्रावणीयेति। मध्यसवनस्य माध्याह्निकस्नानस्य च कालः न लङ्घनीयो यापनीयः ॥ १६ ॥

सम्भावनीयः सत्करणीयः, अनुष्ठानेन सत्कर्त्तव्यः। महार्थसंविधायी महतामर्थानां संविधानशीलः, उदात्तवर्णनापरः यद्वा भाविसीतासमागमविधायक इति निगूढार्थः कविमनसि स्थितः। मुनिनियोगः मुनेर्वाल्मीकेः नियोगः आदेशः कथाश्रवणरूपः कुशलवाभ्यां श्रावणीया रम्या रामायणी कथा, रामेण तु श्रोतव्येति पक्षद्वयात्मको वाल्मीकिनियोगः।

भवन्ताविति—

कथा चेयं श्लाघ्या सरसिरुहनाभस्य नियतं
पुनाति श्रोतारं रमयति च सोऽयं परिकरः ॥ १७ ॥

वयस्य, अपूर्वोऽयं मानवानां सरस्वत्यवतारः, तदहं सुहृज्जन-साधारणं श्रोतुमिच्छामि । संनिधीयन्तां सभासदः, प्रेष्यतामस्मदन्तिकं सौमित्रिः, अहमप्येतयोश्चिरासनपरिखेदं पादविहरणेनापहरामि ।

( इति निष्क्रान्ताः सर्वे )

पञ्चमोऽङ्कः ।

---

भवन्तौ गायन्तौ, कविरपि पुराणः व्रतनिधिः, अयं गिरां सन्दर्भः वसुमतीं प्रथमं अवतीर्णः, सरसिरुहनाभस्य इयं कथा च नियतं श्लाघ्या, अयं परिकरः श्रोतारं पुनाति रमयति चेत्यन्वयः ॥

भवन्तौ मनोहराकारौ हृद्यवाग्विलासौ च गायन्तौ गानपरौ, कविरपि कथा-ग्रथननिदानं पुराणः पुरातनः पद्यनिर्माणे प्ररूढाभ्यास इति गम्यते । व्रतनिधिः स्वाध्यायादिव्रतानां शेवधिः । सततं व्यापृतस्य दीर्घाभ्यासिनो नैपुण्यं कविकर्मणि सर्वथैव सङ्गतम् । अयं च गिरां वाणीनां सन्दर्भः प्रबन्धो रचनेति यावत्, वसुमतीं पृथ्वीं प्रथमं अवतीर्णः । नवे वस्तुनि सर्वस्याप्यनुरागः । पृथ्वी वसुमतीत्युक्ता वसूनि रत्नानि सन्त्यस्यामिति । अयञ्च गिरां सन्दर्भोऽपि वसुरूपः । 'वसु तोये धने मणौ'—इति वैजयंती । सरसिरुहेति—सरसि रुहं कमलं नाभौ यस्य यतो ब्रह्मा समजनि, स विष्णुः तस्य कथा नियतं निश्चयेन श्लाघ्या प्रशस्या । सोऽयं परिकरः सामग्री श्रोतारं पुनाति रमयति च । मुरारिरप्येवमर्थकमाह—

'मद्वर्ग्या रसपाठगीतिगतिषु प्रत्येकमुत्कर्षिणो
मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां व्यूतयः ।
धीरोदात्तगुणोत्तरो रघुपतिः काव्यार्थबीजं मुनि-
र्वाल्मीकिः प्रथति स्म यस्य चरितस्तोत्राय दिव्या गिरः ॥ इति ।

अयञ्च गिरां सन्दर्भो वाल्मीकिं मध्येकृत्य भुवमवतीर्णः । सम्भोगसुखव्यापृतयोः क्रौञ्चयोर्मध्यादेकं व्याधशरविद्धं वीक्ष्य करुणाप्लुतमनसो वाल्मीकेर्मुखात्पद्यरूपा सरस्वती निश्चक्राम—तत्पद्यञ्चेदम्—

'मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्' ॥ इति ।

विस्तरस्तु चम्पूरामायणटीकायां द्रष्टव्यः । कालिदासोऽपि—

निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः, इत्याह स्म ॥१७॥

सुहृज्जनेति—सुहृज्जनेन साधारणं समानं यथा तथेति क्रियाविशेषणम् ।

प्रथमं भारत्या अवतारं पद्यरूपेण सर्वैः सुहृद्भिः सममेव श्रोतुमिच्छामीति । संनिधीयन्तां मत्समीपमानीयन्ताम् । अन्तिकं समीपम् । पादविहरणेन पादाभ्यां यद् विहरणं परिभ्रमणं तेन । अपहरामि अपनयामि ।

इति श्रीपण्डितबाशीरामतनूजस्य वजीराबादपत्तनवास्तव्यस्य जयचन्द्रस्य कृतौ सञ्जीवन्यां कुन्दमालाटीकायां पञ्चमोऽङ्कः पर्यवसितः । शुभं भवतु ।

# अथ षष्ठोऽङ्कः

( ततः प्रविशति कञ्चुकी )

क०—सम्पादितकौशिकमुखसङ्क्रान्तपार्थिवाज्ञोऽहमत्र स्थितं स्वामिनमवलोकयामि ( विलोक्य ) एष प्राप्त एव स्वामी—

महाशीलैस्त्रिभिः सार्धमित एवाभिवर्तते ।
परिष्कृतस्त्रिभिर्वेदैरश्वमेध इवाध्वरः ॥ १ ॥

(ततः प्रविशति कुशलवाभ्यामनुगम्यमानो रामभद्रो लक्ष्मणश्च)

सर्वे—( परिक्रामन्ति )

क०—( उपसृत्य ) जयत्वार्यः, एतत्सज्जमास्थानमण्टपम्, एतदासनं च । ( सर्वे उपविशन्ति )

क०—इतस्तावदवलोकयतु देवः, एते राघवाः पौरजानपदाश्च देवं सम्भावयन्ति ।

---

सम्पादिता कौशिकस्यमुखे सङ्क्रान्ता पार्थिवस्याज्ञा येन स, पार्थिवस्यादेशः कञ्चुकिनं प्रति, स चादेशो विदूषकम्प्रति प्रापयितव्यः, प्रापितश्चासाविति निर्वृतमनाः कञ्चुकी ।

महाशीलैरिति—

त्रिभिः महाशीलैः सार्धं इत एवाभिवर्तते, त्रिभिः वेदैः परिष्कृतः अश्वमेधः अध्वर इवेत्यन्वयः ।

त्रिभिः लक्ष्मणकुशलवैः, महाशीलैः महत् शीलं येषां तैः सुवृत्तैरित्यर्थः । 'शीलं स्वभावे सद्वृत्ते'—इत्यमरः । सार्धं समम् । 'साकं सत्रा समं सह । सार्धम्—इत्यमरः । इत एव अस्यामेव दिशि अभिवर्तते विद्यमानो भवतीत्यर्थः । त्रिभिः वेदैः ऋग्यजुस्सामभिः परिष्कृतः समुद्भासितः अश्वमेधः अध्वरः याग इव । अश्वमेधयज्ञस्यानुष्ठीयमानत्वात्तस्यैव पर्युपस्थितिः प्राथम्येन मनसि । यद्यपि अथर्वसहिताश्चत्वारो वेदास्तथापि गद्यपद्यगीतिभेदेन ऋचां त्रैविध्यमिति वेदत्रयी त्रयी विद्येति च व्यवहार इति सत्यव्रतः सामश्रमी । पुरातना आर्याणां त्रय एव वेदाश्चतुर्थस्य तु वेदपदलाभोऽर्वाचीन इति पुराविदः ॥ १ ॥

सज्जं प्रस्तुतं सर्वथा समुपयोगार्हम् । आस्थानमण्टपं आस्थानमण्डपमिति प्रचुरतया प्रयुज्यते; प्रान्तीयमुच्चारणं स्यात्, सभामण्डपमित्यर्थः । आस्थाननिकेतनामिति भारविः तथाहि—

'अनेकराजन्यरथाश्वसङ्कुलं तदीयमास्थाननिकेतनाजिरम् ।
नयत्ययुग्मच्छदगन्धिरार्द्रतां भृशं नृपोपायनदन्तिनां मदः' ॥ इति ।

रा—( दृष्ट्वा ) किमिदमपरमस्मदन्तिकाद्यवनिकया तिरोधीयते ?

क—एतास्तिस्रो महादेव्यः कौसल्याद्या महीपतेः।

एतद्भरतशत्रुघ्नलक्ष्मणानां वधूत्रयम् ॥ २ ॥

ल—( कञ्चुकिनमुद्दिश्य ) आर्य; वैदेही च न देवीषु सङ्ख्यायते, न वधूषु च।

रा—( निश्वस्य ) कञ्चुकिन्, गच्छ त्वं स्वभूमिमध्यास्व।

क—यदाह ( इति निष्क्रान्तः )

रा—आर्यौ, प्रस्तूयताम्।

कुशलवौ—

उपयेमे ततस्तिस्रो धर्मपत्नीर्महीपतिः।

कौसल्यामथ कैकेयीं सुमित्रां च सुमध्यमाम् ॥ ३ ॥

रामलक्ष्मणौ—( सहर्षम् ) तात एव कथानायकतामुपनीतः कविना ( उभौ नमस्कृत्यासनादवतरतः )

---

'आस्थाननिकेतनाजिरं सभामण्डपाङ्गणमि'ति च तत्र मल्लिनाथः।उपविशन्ति निषीदन्ति।

पौरेति—पौराः जानपदाश्च। तत्र पौरा राजधानीवास्तव्या जनाः। जानपदाश्च जनपदेषु ये वसन्ति, यागमहोत्सवकाले च राजधान्यां राजसन्निधौ वा ये पर्युपतिष्ठन्ते। सम्भावयन्ति पर्युपस्थानेन नमस्कारादिना च सत्कुर्वन्ति।

अस्मदन्तिकात् अस्मत्सकाशात्, मत्तः इत्यर्थः। यवनिकया जवनिकया प्रतिसीरेणेति यावत्। यवनैरद्यापि स्वकीया महिलास्तिरोधीयन्ते, दिङ्नागकालेऽपि तथा। स्त्रीणां तिरोधायकं वस्त्रं यवनिकेति ब्रुवन् यवनेभ्य एव तस्य प्रचारो भारते वर्षे समजनीति प्रतिपादितमेव। तिरोधीयते निगूह्यते अपवार्यते। एता इति—

एतास्तिस्रः कौसल्याद्याः कौसल्या आद्या यासां ताः महीपतेः दशरथस्य सम्बन्धिन्यः महादेव्यः कौसल्या-सुमित्रा-कैकेयीरूपाः, इदानीं तु राजमातरः। एतद् भरतशत्रुघ्नलक्ष्मणां भरतलक्ष्मणशत्रुघ्नानामिति वक्तव्ये भरतशत्रुघ्नलक्ष्मणानामिति वचनं छन्दोऽनुरोधेन। तथा च रामायणे—

'अथ लक्ष्मणशत्रुघ्नौ सुमित्राजनयत्सुतौ'। इति लक्ष्मणस्यैवाग्रजत्वापूर्वनिर्देशः। वधूत्रयं वधूनां त्रयं त्रितयम्, तिस्रो वध्वो जायाः।

ततः महीपतिः दशरथः तिस्रः धर्मपत्नीः उपयेमे उदूढवान्। 'उपाद्यमः स्वकरणे'—( १। ३। ५६ ) इत्यात्मनेपदम्। एतदेव प्रपञ्चयति कौसल्याम्, सुमध्यमां सुमित्रां, कैकेयीञ्च। सुमध्यमा शोभनो मध्यो यस्यास्ताम् ॥ ३ ॥

नमस्कृत्येति—दशरथस्य नामश्रवणसमकालमेव भक्तिप्रकर्षोदयस्तेन तन्निमित्तो नमस्कारः। आसनादवतरणमपि पितृभक्तिसूचकम्।

**कुशलवौ**—कौसल्या सुषुवे रामं—

**ल**—( प्रणमति )

**कुशलवौ**—कैकेयी भरतं ततः।

सुमित्रा जनयामास यमौ शत्रुघ्नलक्ष्मणौ ॥ ४ ॥

**रा**—( लक्ष्मणमालिङ्गति )

**कुशलवौ**—उपयेमे ततः सीतां रामः सौमित्रिरूर्मिलाम्।

तथा भरतशत्रुघ्नौ कुशध्वजसुते उभे ॥ ५ ॥

---

कौसल्येति—

कौसल्या कोसलानामधिपस्य कोसलस्य राज्ञो दुहिता दशरथस्य महिषी रामं सुषुवे जनयामास। ततः तदनन्तरं कैकेयी भरतं सुषुवे। ततः इत्यध्याहार्यम्। सुमित्रा शत्रुघ्नलक्ष्मणौ, एतदपि छन्दोऽनुरोधेन, ज्येष्ठत्वात् लक्ष्मणशत्रुघ्नाविति लक्ष्मणस्य पूर्वनिपातो युक्तः। यमौ यमलौ जनयामास ॥ ४ ॥

ततः रामः सीतां जनकस्य दुहितरं उपयेमे, सौमित्रिः सुमित्रानन्दनो लक्ष्मणः ऊर्मिलां सीताभगिनीं तदाख्यां उपयेमे। तथा भरतशत्रुघ्नौ कुशध्वजस्य जनकस्य भ्रातुः सुते दुहितरौ उभे माण्डवीश्रुतकीर्त्यौ उपयेमाते।

तथा च रामायणे—

'ततः सीतां समानीय सर्वाभरणभूषिताम्।
समक्षमग्नेः संस्थाप्य राघवाभिमुखे तदा ॥
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम्।
इयं सीता मम सुता सहधर्मचरी तव ॥
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना।
पतिव्रता महाभागा छायेवानुगता सदा ॥
एवं दत्त्वा सुतां सीतां मन्त्रोदकपुरस्कृताम् ॥
अब्रवीज्जनको राजा हर्षेणाभिपरिप्लुतः।
लक्ष्मणागच्छ भद्रं ते ऊर्मिलामुद्यतां मया ॥
प्रतीच्छ पाणिं गृह्णीष्व माभूत्कालस्य पर्ययः।
तमेवमुक्त्वा जनको भरतं चाभ्यभाषत ॥
गृहाण पाणिं माण्डव्या पाणिना रघुनन्दन।
शत्रुघ्नञ्चापि धर्मात्मा अब्रवीन्मिथिलेश्वरः।
श्रुतकीर्तेर्महाबाहो पाणिं गृह्णीष्व पाणिना।
सर्वे भवन्तः सौम्याश्च सर्वे सुचरितव्रताः ॥
पत्नीभिः सन्तु काकुत्स्था माभूत्कालस्य पर्ययः'। इति ॥

बाल्ययौवनयोर्मध्ये वर्तमाना नृपात्मजाः ।
नवयोत्कण्ठया चैव कलत्रे दुःस्थितां ययुः ॥ ६ ॥

ल—रमणीयः ।

रा—अलं कालातिपातेन, गीयताम् ।

जरसा पलितस्तातः काकपक्षधरा वयम् ।
जानुदघ्नास्तदा तेऽपि साकेतोद्यानपादपाः ॥ ७ ॥

कुशलवौ—अथाभिषेकसम्भारे रामस्य समुपस्थिते ।

भरते मातुलं द्रष्टुं मातामहपुरं गते ॥ ८ ॥

रा—( आत्मगतम् ) नियतं मध्यमाम्बा निन्द्यते । ( प्रकाशम् )

---

नृपात्मजाः नृपस्य दशरथस्य आत्मजाः आत्मजन्मानः आत्मनो जायन्ते इति । वस्तुतस्तु आत्मरूपा एव । तथा च श्रुतिः—

अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदां शतम् ॥ इति ।

रामभरतलक्ष्मणशत्रुघ्नाः इत्यर्थः । बाल्ययौवनयोर्मध्ये वर्तमानाः शैशवस्य यौवनस्य च वयस्सन्धौ स्थिताः, कलत्रे निजदारासु, स्वस्वपत्नीमुद्दिश्येति यावत्, नवया नूतनया सद्यः प्रादुर्भूतया उत्कण्ठया उत्कलिकया दुःस्थितां दुःस्थितिं स्वाभाविकीं मानसीं दशां विहाय यौवनसुलभां विकारविषमां दशामिति भावः । ययुः प्रापुः ॥ ६ ॥

जरसा जरया बार्धक्येन ततः पिता दशरथः पलितः 'आसीदि'ति शेषः । परिपक्वकेशोऽभूत् । 'पलितं शैलजे तापे केशपाके च कर्दमे'—इति मेदिनी । तथा चानर्घराघवे दशरथो वसिष्ठमुद्दिश्य—

'तस्याज्ञयैव परिपालयतः प्रजां मे कर्णोपकण्ठपलितङ्करणी जरेयम् ।
यद्गर्भरूपमिव मामनुशास्ति सर्वमद्यापि तन्मयि गुरुर्गुरुपक्षपातः' ॥ इति ।

वयञ्च चत्वारोऽपि भ्रातरः काकपक्षधराः बाला इत्यर्थः, तदानीमपि शिखण्डकाः शिरसि स्थिता अभूवन्निति । तेऽपि साकेतोद्यानपादपाः, रामस्य नैमिषारण्ये स्थितत्वा 'त्त' इति पदेन पादपानां दूरेऽवस्थितिर्बोध्यते । साकेतस्य अयोध्याया यदुद्यानं उपवनं तत्सम्बन्धिनः पादपाः, तदा जानुदघ्नाः जानुपरिमाणा अभूवन् । इदानीं ये महान्तस्तरवस्तेऽपि तदानीं क्षुद्राः पादपा एवासन्नित्यभिप्रायः ॥७॥

अथ विवाहानन्तरमित्यर्थः रामस्य अभिषेकसम्भारे अभिषेको यौवराज्यकालोचितस्नानादिक्रियाकलापः तस्य सम्भारे उपकरणनिचये समुपस्थिते सम्भृते सति, भरते च मातुलं द्रष्टुं साक्षात्कर्तुं मातामहपुरं मातामहस्य अश्वपतेः पुरं गते प्राप्ते सति—॥ ८ ॥

तमुद्देशमुल्लङ्घ्य सीतापहरणात्प्रभृति गीयताम्।

कुशलवौ—कालेन रूपसौन्दर्यं श्रुत्वा शूर्पणखामुखात्।

जहार देहं सीताया न चारित्रं दशाननः ॥ ९ ॥

ल—( राममवलोकयति )

कुशलवौ—ततो बध्वार्णवे सेतुं निहत्य युधि रावणम्।

सीतामादाय रामोऽपि साकेतं पुनरागतः ॥ १० ॥

रा—अहो संक्षेपः।

कुशलवौ—प्राप्तराज्यस्ततो रामो जनवादेन चोदितः।

---

मध्यमाम्बा कैकेयी। उद्देशं स्थलम्। उल्लङ्घ्य अतिक्रम्य मध्यस्थलं वर्जयित्वेत्यर्थः। कालेनेति—

कालेन गच्छता समयेन शूर्पणखा रावणभगिनी, जनस्थाने निवसन्त्या तया जानकी साक्षात्कृता, तस्या मुखात् सीतायाः रूपसौन्दर्यं श्रुत्वा दशाननः दशमुखो रावणः सीताया देहं जहार अपहृतवान् न चारित्रं शीलम्। चारित्रं हर्तुं महति यत्ने कृतेऽपि स दुरात्मा न शशाक तद्धर्तुम्। कथम्पुनरेतत्सम्भवति। परवशङ्गता सीता रावणगृहे स्थिता नीरक्षका कथं चारित्ररक्षणं कर्तुमपारयत्? यत्किमपि जातं बलात्कारेण तन्न भावरसेनेति केचित्। वेदवतीशापत्रस्तो रावणः सीतानुमति-लाभमपेक्षते स्मेति शापेष्वास्थावन्तः परे। देहार्पणमनिवार्यमिति विदेशीयाः ह्वालबाय ह्वीलरप्रभृतयः, भारतीयाश्च केचन। रामार्थे यद्यपि सीता जीवति परं बलात्कारा-वसरे समुपस्थिते सर्वथा मरणार्थमुद्युङ्क्ते स्म मारयितुञ्च बलात्कारपरं रावणम्। नह्यनिच्छन्तीं योषितं कश्चिदेको जनो दूषयितुं समर्थ इत्याधुनिकाः न्यायधारा-निर्मातारः। कलहे वृद्धिं गते प्रत्युपस्थितानां जनानां यत्ना भवन्त्येव विघातकाः। असिना सीतां हन्तुमुद्यतो निराशो रावणो मन्दोदर्यादिभिरपवाहित इति प्रसिद्धमेव रामायणे। राक्षसविवाहमाद्रियमाणा राक्षसाः परकीयां नारीमाहृत्य एकवर्षं यावत्तां न सङ्गच्छन्ते इति वैद्यमहोदयः। अद्यापि सीता जीवतीत्ययमेव तस्याः शुद्धौ मुख्यतमो हेतुरन्यथा सा चिरायात्मानं व्यापादयेदिति वयम्। तस्मात्सीतासंशुद्धौ परमास्थावन्तः तस्या दुःखे दुःखमुद्वहन्तः स्वचारित्र्यसंरक्षणनिमित्तं महद्धैर्यस्य साहसस्य मानसबलस्य च कृते सवर्था सीतां प्रशंसामः ॥ ९ ॥

सीतासंशुद्धौ वाल्मीकेरपि साक्ष्यं विदित्वा भृशं तुष्टमनाः लक्ष्मणो राममुख-मीक्षते, तद्धृदयगतञ्च मुखतः परिज्ञातुमिच्छति। तत इति—

ततः सीतापहारानन्तरं अर्णवे समुद्रे सेतुं बध्वा युधि सङ्ग्रामे रावणं सबान्धवंससैन्यं निहत्य मारयित्वा सीतां आदाय लङ्कातः रामोऽपि पुनः साकेतं अयोध्यां आगतः सम्प्राप्तः १०

प्राप्तेति—ततः साकेतागमनानन्तरं प्राप्तराज्यः अधिगतराज्यः राज्यधुरं

आहूय लक्ष्मणं प्राह सीता निर्वास्यतामिति ॥ ११ ॥
बाष्पपर्याकुलमुखीमनाथां शोकविक्लवाम् ।
उद्वहन्तीं च गर्भेण पुण्यां राघवसन्ततिम् ॥ १२ ॥
सीतां निर्जनसम्पाते चण्डश्वापदसङ्कुले ।
परित्यज्य महारण्ये लक्ष्मणोऽपि न्यवर्तत ॥ ३ ॥

ल—अहो ! अयशोभागी लक्ष्मणः ।

रा—कस्तवात्रापराधः, रामपराक्रमाः खल्वेते गृह्यन्ते । ततः ।

कुशलवौ—एतावती गीतिः ।

रा—( सोद्वेगम् ) सौमित्रे, कष्टमापतितम्—

उभौ—ततः प्राणैः परित्यक्ता निराशा जनकात्मजा ।
अप्रियाख्यानभीतेन कविना संहृता कथा ॥ १४ ॥

---

स्वहस्ते गृहीत्वेत्यर्थः, रामः जनवादेन लोकापवादेन चोदितः प्रणुन्नः सन् लक्ष्मणमाहूय प्राह उवाच सीता निर्वास्यतामिति ॥ ११ ॥

बाष्पेति—बाष्पेण ऊष्माश्रुभरेण पर्याकुलं परितः आकुलं व्याप्तं मुखं यस्यास्तां अनाथां दीनदीनां शोकविक्लवां शोकेन विक्लवां व्याकुलां गर्भेण च पुण्यां पावनीं राघवसन्ततिं रामसन्तानं उद्वहन्तीं धारयन्तीम् ॥ १२ ॥

सीतामिति—निर्जनसम्पाते जनसम्पातशून्ये जनसञ्चाररहिते, चण्डश्वापदसङ्कुले चण्डैः अत्यन्तकोपनैः रौद्रैः श्वापदैः हिंस्रजन्तुभिः सिंहादिभिः सङ्कुले व्याप्ते, महारण्ये महावने गङ्गातीरोपान्तवर्तिनि महति कान्तारे सीतां परित्यज्य विहाय लक्ष्मणोऽपि न्यवर्तत साकेतं पुनरुपागमत् ॥ १३ ॥

अयशोभागीति—अयशः अपयशः भजते तच्छीलः । न यशसि भागो यस्य वा । अयशसि यस्य भागो वा । रामपराक्रमाः रामस्य पराक्रमसूचकानि कार्याणि । गृह्यन्ते प्रोच्यन्ते इह तु गीयन्ते कुशलवाभ्यां कविना चोद्ग्रथ्यन्ते ।

कष्टमापतितमिति—जीवन्त्यां सीतायां न स्यादिह कथाविच्छेदः, अत्रैवोपसंह्रियमाणा पुनः सीतायाः परित्ययं व्यनक्तीति सम्प्रधार्य रामस्य वचनम् ।

ततः प्राणैरिति - ततः निराशा जनकात्मजा प्राणैः परित्यक्ता । आशालतिकायां प्ररूढायां प्राणा ध्रियन्ते नैराश्ये तु पलायन्ते, मरणमेव च शरणं भवति । एषा पुनर्योजना पद्यांशस्य रामानुरोधेन । वस्तुतस्तु ततः परित्यक्ता ( लक्ष्मणेन ) जनकात्मजा प्राणैः निराशा प्राणनविषये निराशा संवृत्तेति शेषः । न सा गभीरे कान्तारे श्वापदेभ्यः स्वं रक्षितुं प्रभविष्यतीति सा स्वजीविते निराशाऽभूदित्यर्थः । अप्रियाख्यानभीतेन अप्रियस्य यदाख्यानं कथनं तस्माद्भीतेन कविना कथा संहृता समापिता ॥ १४ ॥

कुश—( अपवार्य ) महाभागावेतौ सीतासंकथायामत्यन्तविषादिनौ तस्मादनुयोक्ष्ये । ( लक्ष्मणमुद्दिश्य ) अपि भवन्तौ रामायणकथानायकौ रामलक्ष्मणौ ?

लक्ष्म—तौ क्लेशभागिनौ ।

कुश—किं नीता त्वया सीता ?

ल—( सलज्जम् ) मया मन्दभाग्येन ।

कुश—किं सीता रामस्य धर्मपत्नी ?

ल—अथ किम् ?

कुश—अथ सीतायास्तद्गर्भस्य वा विदितः कश्चिद् वृत्तान्तः ?

ल—विदितो युष्मत्सङ्गीतेन ।

रा—किमितः पुनः कल्याणमावेदयति ? ( विचिन्त्य ) एवं तावदनुयोक्ष्ये । आर्यौ, किमेष युवयोरागमावधिः, आहोस्वित्सन्दर्भावधिः ?

कुश—न वयं जानीमः ।

---

अत्यन्तविषादिनाविति—अत्यन्तं विषादवन्तौ नितरां खिन्नमनसौ । रामायणेति-रामायणस्य कथा रामायणे वर्णितं वस्तु इतिवृत्तं तस्या नायकौ नेतारौ । 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि'—इति विश्वः ।

विदितो युष्मत्सङ्गीतेनेति—विपन्ना सा विपिने तपस्विनी तया समं गर्भोऽपि विपन्न इति सुव्यक्तो गीत्याशय इति भावः ।

इतः पुनः पक्षान्तरादित्यर्थः । अयमाशयः—एतावती गीतिरित्युक्तं कुशलवाभ्याम् । सीताविरमात्कथाविरम इत्येकः पक्षः, कुशलवाभ्यामेतावती कथैव ज्ञायते नातोऽधिका, यद्यपि सीतायां भ्रियमाणायां सा कथाऽग्रेऽपि प्रवर्त्तते एवेति पक्षान्तरम् । द्वितीयःकल्पः सर्वथाऽभिमतः, तस्यैव भवेत्सम्भव इति पुनरपि विविच्य प्रष्टुं यतते—'आर्यावि'ति ।

आगमावधिः आगमस्य परिज्ञानस्य शिक्षायाः अवधिः सीमा । आहोस्वित् उत । सन्दर्भावधिः सन्दर्भस्य प्रबन्धस्य कविकर्मणः अवधिः परिसमाप्तिः । किम्पुनः फलितम् ? यद्यागमस्यावधिर्न सन्दर्भस्य तर्हि कथावस्तुनि प्रवर्त्तमाने भव-

---

१ 'कौ'—इत्यपि पाठान्तरं मूलपुस्तके परं न तत्समीचीनमिति तत्रत्यं कोष्ठकगतं ( तौ ) इति पाठान्तरमनादृतप्रायमेवाद्रियते ।

रा—कण्वोऽनुयोक्तव्यः। सौमित्रे, कण्वमाह्वय।

ल—( निष्क्रम्य कण्वेन सह पुनः प्रविष्टः )

कण्व—( विलोक्य )

स एष रामो नयनाभिरामः सीतासुताभ्यां समुपास्यमानः।
यदृच्छया तिष्यपुनर्वसुभ्यां पार्श्वस्थिताभ्यामिव शीतरश्मिः ॥१५॥

ल—कण्वोऽयमार्य, सम्प्राप्तः।

रा—( प्रणम्य ) इदमासनमास्यताम्।

कण्व—( उपविश्य ) यदि रामायणश्रवणकौतुकं कथ्यतां कुत्रा-वधिरभिहितः कुशलवाभ्यामिति।

ल—"सीतां निर्जनसम्पाते" ( इति पठित्वा ) एष कुशलवयो गीतसीमा।

कण्व—श्रूयतां ततः परम्।

---

देव सीता विद्यमाना। सन्दर्भावधौ तु कथावस्तुनः समाप्तिर्नायिकासमाप्तिं वेदयते।

स इति—

स एष रामः सीतासुताभ्यां समुपास्यमानः तिष्यपुनर्वसुभ्यां यदृच्छया पार्श्व-स्थिताभ्यां शीतरश्मिरिव नयनाभिरामः—इत्यन्वयः।

स एष पुरोवर्त्ती रामः सीतासुताभ्यां कुशलवाभ्यां समुपास्यमानः उपसेव्य-मानः सन्निधीयमान इति यावत्, यदृच्छयाऽकस्मात् पार्श्वस्थिताभ्यां पार्श्वे समीपे विद्यमानाभ्यां तिष्यपुनर्वसुभ्यां समुपास्यमानः शीतरश्मिश्चन्द्र इव नयनाभिरामः नयनयोरभिरामः अभिरमणः रमयिता रञ्जक इति यावत्, सम्प्रति दृश्यते इति शेषः। यद्यपि तिष्य एकः पुनर्वसू द्वौ मिलित्वा ते त्रयः, इह तु कुशलवौ द्वावेव, तथापि पुनर्वस्वोरेकीभाव आश्रयणीयः। अथवा तिष्यस्थानी लक्ष्मणः, पुनर्वसू कुशलवाविति कल्पनीयम्।

यथोक्तमधस्तात्—

'महाशीलैस्त्रिभिः सार्धमित एवाभिवर्तते।
परिष्कृतस्त्रिभिर्वेदैरश्वमेध इवाध्वरः॥' इति।

सर्वमनवद्यम् ॥ १५ ॥

कौतुकं कौतूहलम्। कुत्रावधिः कुत्र पर्यन्तम्। अभिहितः उक्तः गीतः रामा-यणे समुपनिबद्धः उदन्तः इति गम्यते।

का गतिः—अवश्यं श्रोतव्यं मया यदपि श्रावयिष्यति शुभं वाऽप्यथवाऽशुभ-मिति तात्पर्यम्।

रा—का गतिः ?

कुशलवौ—रामदाराणां भद्रं गायति।

कण्व—ततः श्रुत्वा स शिष्येभ्यो वाल्मीकिर्मुनिरुत्तमः।

स्वयं सीतां समाश्वास्य निनाय स्वं तपोवनम्॥ १६॥

रा—अनुगृहीतं भगवता रघुकुलम्, अभ्युद्धृतोऽस्मि भगवता।

कुशलवौ—दिष्ट्या कुशलिनो रामदाराः ( सर्वे हर्षं नाटयन्ति )

कुश—अयि वत्स लव, कासौ वाल्मीकितपोवने सीता नाम ?

लव—न काचित्, केवलं गीतिनिबन्धनान्येतानि सीता सीतेत्य-क्षराणि।

रा—ततस्ततः।

---

भद्रं मङ्गलम्। 'भद्रं शिवे खञ्जरीटे वृषभे तु कदम्बके'

करिजातिविशेषे ना क्लीबं मङ्गलमुस्तयोः।

......................इति मेदिनी।

ततः इति—ततः तदनन्तरं लक्ष्मणेन सीतायां परित्यक्तायां शिष्येभ्यः स्नानार्थं गङ्गातटं समुपेत्य पुनर्निवृत्तेभ्यः स्वान्तेवसद्भ्यः श्रुत्वा रुदन्त्याः कस्या अपि गर्भभरखिन्नाया अतिदीनाक्रन्दनपरायाः महिलायाः प्रवृत्तिं निशम्य स उत्तमः श्रेष्ठो मुनिर्वाल्मीकिः सीतां स्वयं समाश्वास्य स्वं तपोवनं आश्रमं निनाय नीतवान्॥१६॥

अनुगृहीतं......रघुकुलम्—सीतायां रक्षितायां रघुकुलमेव रक्षितमन्यथा तु गर्भगतं व्यापन्नं स्यादिति महानयमनुग्रहो मुनेः। अभ्युद्धृतोऽस्मीति—मन्युभराक्रान्तेन यद्यपि तदा न गणितः परिणामः, तथापि तदीयाचरितस्य परिणामः सन्तत्या समं सीताविनाश आसीत्—ततश्च सीताघाती रामः सम्पद्यते। महच्चैतत्किल्बिषम्। तस्मान्मोचयता भगवता वाल्मीकिना नूनं समुद्धृतो रामः पातककूपादिति। कुशलिनः कुशलं अस्ति एषामिति। रामदाराः रामस्त्री सीता। दारा शब्दः पुंल्लिङ्गो नित्यबहुवचन इत्युक्तम्। तथा च गङ्गामुद्दिश्य वेङ्कटाध्वरी विश्वगुणादर्शे—

................................वाराशिदारा इमे'॥ इति।

अयि.........अक्षराणि—कुशलवाभ्यां मातुर्नामापि अद्यावधि न ज्ञातम्। देवीति वधूरिति च द्वे नामनी तौ जानीतो न सीतेति। अत एव कुशलवयोरयं प्रश्नोत्तरप्रकारः। वाल्मीकितपोवनाश्रयाणां तपोधनानां वाचंयमत्वे महदिदं प्रमाणम्। गीतिं गायन्तौ तदर्थञ्च जानन्तौ परं सञ्ज्ञासञ्ज्ञिसम्बन्धमविदन्तौ कुशलवौ यथात्र हर्षविषादावसरेषु जल्पतस्तथा तु करुणाभरेण परिपूर्णमानसानां साश्रुमुखानामपि

कण्व—परिपूर्णे ततः काले द्यौरिवेन्दुदिवाकरौ।
सीतापि जनयामास सा यमौ तनयावुभौ ॥ १७ ॥

लक्ष्म—जयत्वार्यः, दिष्ट्या वर्धतां राघवकुलम्।

कुशलवौ—जयतु महाराजः पुत्रजन्मना।

रा—( स्वगतम् ) अपि नाम कुशलवौ स्याताम्।

कण्व—जातावस्थोचितं कर्म विदधानो यथाक्रमम्।
स चकार तयोर्नाम मुनिः कुशलवाविति ॥ १८ ॥

रा—कथमेतावेव सीतातनयौ ? हा पुत्र कुश ! हा पुत्र लव !

लक्ष्म—इयं सा देवीसम्भवा आर्यस्यात्मसङ्क्रान्तिः।

कुशलवौ—कथमयं सः। हा तात, त्रायस्व। (सर्वे परस्परमालिङ्गय मोहं गच्छन्ति)

कण्व—( सविषादम् ) किमेतत्कष्टमापतितम्।

---

पाठकानां प्रसभं हास्यमापादयत इति परमहृद्या कवेर्दिङ्नागस्य कृतिः ॥

परिपूर्णे इति—

ततः काले परिपूर्णे दशदिनोत्तरेषु नवसु मासेष्वतिक्रान्तेषु सा सीता यमौ यमलौ उभौ तनयौ सुतौ न पुनरेका सुता परश्च सुतः अपि तु द्वावेव सुतौ जनयामास समुत्पादयामास, द्यौः इन्दुदिवाकराविव, इन्दुश्चन्द्रः दिवाकरश्च सूर्यः तौ दिवः पुत्रत्वेन व्यपदिष्टौ ॥ १७ ॥

जयतु..............पुत्रजन्मनेति—कुशलवावेवाजानन्तौ स्वजन्मनः कृते पितरं स्वयं वर्धयन्तौ करुणारसोद्रेकवति प्रकरणेऽस्मिन् हास्यरसं प्रसभं जनयत इति निपुणा किल कवयितुः शैली।

जातावस्थेति—

जातावस्थोचितं कर्म जातकर्मादिसंस्कारजातं यथाक्रमं क्रमेण विदधानः कुर्वन् स मुनिर्वाल्मीकिः तयोर्जातयोः नाम अभिधानं कुशलवाविति कुश इति लव इति च चकार कृतवान् ॥ १८ ॥

मन्दभाग्येन मया भद्रं गायता एकेन हितेन चत्वारो रघुप्रवीराः पातिताः—इत्यन्वयः।

मन्दं भाग्यं यस्य तेन। रघुप्रवीराणामुपकारस्थानेऽपकारमारचयतो नूनं मन्दभाग्यता कण्वस्य। भद्रं मङ्गलं गायता न तु निभृतं प्रहरता नापि किमप्यनिष्टमाचरता विनिपातिता इत्याश्चर्यम्। एकेन चतुर्णां विनिपातनमप्याश्चर्यावहम्। सोऽपि हितः हितैषी न तु द्रोही तथापि तेन निपातिता इत्यहो आश्चर्यम्। यद्वा हितं प्रियं वचः

मया तु मन्दभाग्येन भद्रं तु किल गायता।
रघुप्रवीराश्चत्वारो हितेनैकेन पातिताः ॥ १६ ॥

( निर्वर्ण्य ) दिष्ट्या श्वासोद्गम इव। अहमेतं वृत्तान्तं भगवते देव्यै च निवेदयामि। ( इति निष्क्रान्तः )

( ततः प्रविशति वाल्मीकिः, ससम्भ्रमं सीता च )

वाल्मीकिः—वत्से, त्वरस्व, मा परिलम्बिष्ठाः; अप्रतिक्रियमाणा मूर्छा निष्क्रान्तमापद्यते।

सीता—कहेहि कहेहि परमत्थं, अवि धरन्ति राहवाः ? (क)

वाल्मी—समाश्वसिहि, ध्रियन्ते राघवाः। किमेतान्न पश्यति भवत्युच्छ्वसितान् ?

सीता—दिढं पच्चाइदह्मि तादेण। (ख)

वाल्मी—( अन्वेषणमभिनीय )

(क) कथय कथय परमार्थम्, अपि ध्रियन्ते राघवाः ?
(ख) दृढं प्रत्यायितास्मि तातेन।

कुशलवजनिरूपं सीताजीवनाश्रयञ्च तेन—चत्वारः रघुप्रवीराः रामलक्ष्मणकुशलवरूपाः पातिताः भूतले शायिताः ॥ १६ ॥

मा परिलम्बिष्ठाः विलम्बं न कुरुष्व। दीर्घदीर्घान् पादक्षेपान् कृत्वा झटिति रामादीनां समीपं जिगमिषोर्वाल्मीकेः सीताम्प्रति वचनम्, सा हि विक्लवतयाऽनभ्यासेन स्त्रीभावेन च न सत्वरं पदानि निक्षेप्तुं समर्थेति मन्थरया गत्या पश्चाद्धाविनी संवृत्ता। अप्रतिक्रियमाणा प्रतीकारं विनेत्यर्थः। निष्क्रान्तं गतासुभावम्। आपद्यते प्राप्नोति। अप्रतिरोधं प्रवर्तमाना मूर्छा मृत्यौ परिणमतीति भावः।

परमार्थं सत्यं तत्त्वमिति यावत्। ध्रियन्ते जीवन्ति। भवत्युच्छ्वसितान्—भवती उच्छ्वसितानिति सन्धिच्छेदः। उच्छ्वसितान् श्वासप्रश्वासपरम्परामित्यर्थः।

प्रत्यायितास्मि प्रत्ययं प्रापितास्मि, श्वासप्रश्वासगतिः सर्वथा जीवतामेव सम्भवतीति तेषां चतुर्णामपि जीवनेऽपनुन्नैव शङ्का सीतायाः वाल्मीकिना तां दर्शयता। राघवाणां जीवनविषये निश्चयं प्रापितास्मीति।

मैथिलीति—

मैथिलि, यत्नतः धैर्यमवलम्ब्य लोचने ततः साधु प्रहिणु। त्वत्कथाप्रलयमातरिश्वना निपातितं राघवकुलं पश्येति स्वाभिमतपदानुसारिणी पद्ययोजना ॥

मैथिलि भो जानकि। यत्नतः यत्नेन धैर्यमवलम्ब्य आस्थाय लोचने ततः साधु प्रहिणु तस्मिन् दिग्भागे सम्यक्तया प्रवर्त्तय। त्वदिति—तव कथा त्वत्कथा

मैथिलि प्रहिणु लोचने ततः
साधु धैर्यमवलम्ब्य यत्नतः।
त्वत्कथाप्रलयमातरिश्वना
पश्य राघवकुलं निपातितम् ॥ २० ॥

सीता—(सलज्जम्) भअवं अणणुण्णाददंसणा अहं अज्जउत्तेण (क)

वाल्मीकि—(सावष्टम्भम्) मयि स्थिते को वा अभ्युनुज्ञायाः प्रतिषेधस्य वा। गच्छ, अभ्यनुज्ञातासि वाल्मीकिना मयैतद्दर्शने, उपसर्प निश्शङ्कमुपयन्तारम्।

सी—(विलोक्य) किं एव्वं वट्टदि, सव्वहा हदह्मि मन्दभाआ। (पतित्वा रोदिति) (ख)

वाल्मी—उत्तिष्ठ समाश्वासय, अहमपि रामलक्ष्मणावभ्युपपत्स्ये। वत्स राम, वत्स लक्ष्मण, समाश्वसिहि।

सी—जाद कुस, जाद लव, समस्सस समस्सस। (ग) (एवं सलिलसेकं नाटयति)

राम—(प्रत्यागम्य) आर्य कण्व, अपि भ्रियते वैदेही?

वाल्मी—पुरत एव वर्तते।

रा—(विलोक्य) कथं भगवान् सम्प्राप्तः। (लज्जां नाटयति)

वा—अलं लज्जया, कलत्रविषया खल्वनुकम्पा।

(क) भगवन्, अननुज्ञातदर्शनाहमार्यपुत्रेण।
(ख) किमेवं वर्तते, सर्वथा हतास्मि मन्दभाग्या।
(ग) जात कुश, जात लव, समाश्वसिहि समाश्वसिहि।

सैव प्रलयमातरिश्वा प्रलयमारुतोऽत्यन्तप्रचण्डः प्रलयकालिको वातः। मातरि शेते इति मातरिश्वा वायुः। माता पुनराकाशम्। तथा च श्रुतिः—

'तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नाद्रेतः। रेतसः पुरुषः। स वा एष पुरुषोऽन्नरसमयः—इति। आकाशाज्जातस्तस्मिन्नेव प्रसृतास्तिष्ठति वात इति मातरिश्वोच्यते। तेन निपातितं भूतले राघवकुलं द्रुमनिकरमिवेति व्यज्यते—

'छिन्नमूल इव द्रुमः'—इति च रामायणे भारते च बहुत्र प्रयोगः परैः प्रसह्यविनिपातितान् शूरानुद्दिश्य। पश्य ॥ २० ॥

१ 'पुनः'—इति पाठान्तरम्। २ 'वर्तते'—इति पाठान्तरम्। ३ 'साधु'—इति पाठान्तरम्।

ल--( आश्वस्य ) अपि प्रत्यागतसञ्ज्ञ आर्यः स्यात् ?

रा--प्रत्यागतोऽस्मि मन्दभाग्यः ।

कुशलवौ--( समाश्वस्य ) हा तात, परित्रायस्व ।

( इति पादयोः पतित्वा रुदतः )

रामलक्ष्मणौ--( परिष्वज्य समाश्वासयतः ) वत्सौ, अलमावेगेन ।

वा--हा तातदर्शनदुर्ललितौ, कस्य क रुद्यते, प्रमृज्यतामश्रु ।

कुशलवौ--( वाष्पं प्रमृज्य राममवलोकयन्तौ स्थितौ )

सी--( अपवार्य ) को एसो, जो तुह्मेहिं एव्वं पेक्खिदो ? ( क )

राम--अहो ! औदासीन्यं वैदेह्याः येदियं[1] चिरकालोपनतमस्तत्सन्निधानं मुखविकासेनापि न सम्भावयति ।

वा--( सकोपम् ) हे राजन्, धृतसौहार्द, महाकुलीन, समीक्ष्यकारिन्, किं युक्तं तव प्रतिपादितां जनकेन, गृहीतां दशरथेन, कृतमङ्गलामरुन्धत्या, विशुद्धचारित्रां वाल्मीकिना, भावितशुद्धिं विभावसुना, मातरं कुशलवयोः, दुहितरं भगवत्या विश्वम्भरायाः, देवीं सीतां जनापवादमात्रश्रवणेन निराकर्त्तुम् ?

राम--( वैक्लव्यं नाटयति )

वा--सौमित्रे युक्तमिदम् ? अथवा कस्तवोपालम्भः, नियोज्यस्त्वं कनीयान् । ( राममुद्दिश्य ) अथ दशग्रीववीरवध्यावसाने सीताप्रतिग्रहं प्रति कः प्रमाणीकृतो देवः प्रमाणेन ?

रा--भगवान् वैश्वानरः ।

वा--भोः प्रत्ययनिवृत्तेः किं कारणम् ?

सी--हद्धि हद्धि मम अधण्णाए किदे एव्वं अदिक्खिअदि अज्जउत्तो । ( ख )

---

(क) क एषः, यो युवाभ्यामेवं प्रेक्षितः ?

(ख) हा धिक्, हा धिक्, ममाधन्यायाः कृते एवमधिक्षिप्यते आर्यपुत्रः ।

---

१ यदि या ( यं )--इति मूलपुस्तके ।

( कर्णौ पिदधाति )

वा---कुशलवजननी विशुद्धिसाक्ष्ये
पवनसखा यदि देवता नियुक्ता।

---

उपयन्तारं उद्वोढारम्।

एवं वर्तते—इति, चत्वारोपि राघवास्तथा विसञ्ज्ञाः परस्परसमालिङ्गनपरा भूतले शयानाः सन्तीत्यर्थः। पतित्वा कुशलवनिमित्तं तत्समीपं निपत्य।

अभ्युपपत्स्ये मूर्च्छानिवर्तनार्थमुपसेविष्ये।

अलं............अनुकम्पेति—युक्तेत्यध्याहारः।

आवेगेन वैक्लव्येन।

तातदर्शनदुर्ललितौ तातस्य रामस्य दर्शनेन दुरवस्थां दुःस्थितिं वा प्राप्तौ। रामेणात्यर्थं यल्लालितौ तेन स्वाभाविकीं शान्तिपरां दशां विहाय रोदनपरतामौत्कण्ठ्यञ्च सम्प्राप्ताविति भावः। कस्य क्व रुद्यते—इति, एतत्तु प्रतारणानिमित्तं स्यात्। अपि च येन रामेण ययोर्गर्भगतयोरेव कृतः परित्यागस्तौ कुशलवौ तदर्थमेव रुदतः इत्यसमञ्जसम्। गर्भगतयोर्ययोस्तथा निर्दयं परित्यागस्तयोरेव कथमपि लब्धजन्मनोः प्रवृद्धयोः परिग्रह इत्यसमञ्जसम्। गर्भगतस्य शिशोर्जीवननिर्व्यपेक्षः सन् यो वनं प्रहितवान् तज्जननीं स एवेदानीं जनकतापदमधिगन्तुं यतेतेत्यसमञ्जसम्। अतः सत्यमुच्यते कस्य निमित्तं रुद्यते भोः क्व रुद्यते इति च॥ हर्षचरिते बाणेन—

'मातापितृसहस्राणि पुत्रदारशतानि च।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान्'॥

इति जनकानां नानात्वव्यवस्थापनेन निर्ममत्वोपदेशः कृतः, इह तु जनकोऽपि रामो जनकत्वपदं दूषितवानिति मनसि निधाय वाल्मीकिना कुमारावाधिक्षिप्येते निर्ममौ यथा तौ स्यातामिति।

क एष.........प्रेक्षितः—इति, न कश्चनार्थोऽनेन, नायं युवयोर्बान्धवः, नायमेतावतीं सम्भावनामर्हतीति सीतायाः दूनाया मानिन्याश्चाशयः।

चिरकालोपनतं अतिदीर्घकालानन्तरं जातमित्यर्थः सन्निधानं सहावस्थानम्। मुखविकासेन हर्षेण। दशाधिकहायनानन्तरमपि सम्मेलने सति सीताया हर्षलवोऽपि नास्तीति महदौदासीन्यम्।

धृतसौहार्द धृतं धारितं मनसि सौहार्दं प्रेम येन तत्सम्बोधनम्। सर्वमेतत्सोल्लुण्ठनवचनं रामो येन विहितस्य दुरन्तस्य दुष्कृतस्य सीतापरित्यागस्य निमित्तमपत्रपेत। प्रतिपादितां दत्ताम्। विभावसुना वन्हिना। विश्वम्भरायाः पृथिव्याः। निराकर्तुं दूरमपसारयितुम्।

कथमिव भवतो निरङ्कुशोऽयं
हृदि निहितो नु पृथग्जनापवादः ॥ २१ ॥

राम—आयुज्यमानमिव।

वाल्मी—कथं वीरहस्तेन मामतिवाहयति।

---

नियोज्यः वशवर्ती। दशग्रीवेति—दशग्रीवो रावणः स एव वीरः, तस्य वा वीराः, तस्य तेषां वा या वध्या वधः कदनं विशसनमिति यावत् तस्या अवसाने समाप्तौ। सीताप्रतिग्रहं सीतायाः पुनः स्वीकारम्। प्रमाणीकृतः प्रमाणत्वेनाश्रितः। वैश्वानरः अग्निः। एतच्चाग्निपरीक्षामुद्दिश्य। तथा च रामायणे—

चितां मे कुरु सौमित्रे व्यसनस्यास्य भेषजम्।
मिथ्यापवादोपहता नाहं जीवितुमुत्सहे ॥
एवमुक्त्वा तु वैदेही परिक्रम्य हुताशनम्।
विवेश ज्वलनं दीप्तं निश्शङ्केनान्तरात्मना ॥ इति।

ज्वलेन पतिता सीता न भस्मसादभूत्, तेन तस्याः सतीत्वं सिद्धमिति रामायणे। सतीत्वख्यापनाय निश्शङ्कं प्रवेशोत्साहो हुताशने तत्साधनायालं स्याद्विशेषेण तु न किमपि जानीमः।

प्रत्ययनिवृत्तेः अविश्वासस्य।

कुशेति—

कुशलवजननी सीता तस्या विशुद्धिसाध्ये विशुद्ध्यर्थं यत्साध्यं प्रमाणं तत्र पवनसखा पवनो वायुः सखा सुहृत् सहायो यस्य स वह्निरित्यर्थः, देवता देवः, यदि नियुक्ता अयं निरङ्कुशोऽव्याहतप्रसर इत्यर्थः, पृथग्जनापवादः पृथग्जनानामपवादः प्राकृतजनैः प्रोच्यमानः सीतानिन्दापरः शब्दराशिः भवतो हृदि कथं नु निहितः, किमर्थं सामान्यजनवादमादृतवानसीत्यभिप्रायः।

देवसाध्येऽश्रद्धा पृथग्जनवचनेभ्यो विभीतिरित्युभयं सर्वथाऽसमञ्जसमिति तात्पर्यम् ॥ २१ ॥

आयुज्यमानमिति क्रियाविशेषणम्। आ ईषदर्थे। युज्यमानं स्पृश्यमानम्। हस्तेन मुनिं परामृशन्निवेत्यर्थः। अयं स्पर्शो मुनेरपवाहनार्थः स्यात्। पौरजानपदेषु समवेतेषु सर्वसमक्षं मुनिकृतं भर्त्सनं रामस्य नेष्टम्। रहसि तु सर्वथापीष्टं स्यादिति तन्निराकरणाय रामो यतते। कश्चिदन्यो मुनिं न वारितवानिति तस्य सम्मानं सुस्थिरं व्यापकञ्च। मुनिरपि प्रजानामेवान्यतम इति मर्यादां व्युत्क्रममाणं तं राजसंसदो बहिर्गमयन् रामो नापराध्यति। काले गुरवो माननीयाः। राजपरिषदि तु राजैव सर्वस्य माननीय इति कवेरभिप्रायः स्यात्।

अनुकृतिसरले पृथग्जनानां
निवसति चेतसि संश्रितोऽनुरागः ।
नरपतिहृदयेन जातमाल्यं ( ? )
नहि पुलिनेषु तिलस्य सम्भवोऽस्ति ॥ २२ ॥

वत्स, किमनेन कण्डूयनेन, गृहाण कुशलवौ, गच्छामः स्वमाश्रमपदम् । [ इति परिक्रामति ]

रामलक्ष्मणौ—प्रसीदतु गच्छतु भगवान् ।

वाल्मी—[ प्रतिनिवृत्त्य ] वैदेहि, तपोवनगतानामपि दण्डं समाज्ञापयति, तत्परिशोध्यतामात्मा ।

---

वीरहस्तेन वीरो वीर्यवान् बलवान् यो हस्तस्तेन । वीरो वीरयतेः, वीरयत्यमित्रानिति यास्कः । नानाप्रकारं मारयति—इति च तत्र दुर्गः ।

अनुकृतीति—

अनुकृतिसरले पृथग्जनानां चेतसि संश्रितः अनुरागः निवसति । नरपतिहृदयेन जातमाल्यम्, पुलिनेषु तिलस्य सम्भवो नास्ति हि ।

अनुकृतौ अनुकरणे सरले, अनुकृत्या वा सरले, अनुकृतिः सरला वा यस्मिन्, तस्मिन्, सदैव परेषामनुकरणप्रवणे पृथग्जनानां प्राकृतजनानां चेतसि चित्ते संश्रितः समाश्रितः अनुरागः प्रीतिः निवसति नैरन्तर्येण प्रतिष्ठिता भवति । नरपतिहृदयेन जातमाल्यं माल्यरूपेणावस्थितं यथा स्यात्तथा अनुरागः संश्रितो भवति । यथा हि माल्यं सौरभ्यभरितं क्रमेण म्लानतामुपैति तद्वद् नरपतिहृदयवर्त्ती अनुरागोऽपि म्लानो जायते । अत एवोच्यते मनीषिभिः—

अहं हि सम्मतो राज्ञो य एवं मन्यते कुधीः ।
वृषभः स तु विज्ञेयो शृङ्गपुच्छविवर्जितः ॥ इति ।

यद्वा नरपतिहृदये इत्यपि सप्तम्यन्तं यथा चेतसि । तत्र जातमाल्यं न, माल्यं हि हृदयोपरि तिष्ठति, अनुरागः पुनर्नरपतिहृदये प्रतिष्ठां न विन्दतीति व्याख्येयम् । पुलिनेषु जलादचिरनिर्गततटेषु तिलस्य सम्भवो नास्ति हि । नहि सद्यो निर्गते तटप्रदेशे तिलस्य सम्भवः जन्म सत्ता वा भवति ॥ २२ ॥

कण्डूयनेन कण्डूयया गात्रविघर्षणेनेति यावत् । लज्जावेशेन किङ्कर्त्तव्यताविमूढो नरः कण्डूमारभते । समययापनाय चित्तस्वास्थ्यलाभाय च । गृहाण स्वीकुरु पुत्रत्वेन तावङ्गीकुरु ।

प्रसीदतु, गच्छतु भगवान्—इति वचनं मुनिप्रसादव्यपेक्षां शासकपदावलेपलवञ्च बोधयति ।

दण्डं समाज्ञापयति—यद्यप्यहं तपोधनस्तथापि मत्सन्निधिं परिहर्तुमिच्छन्

सीता—अहं किं परिसोधेमि । [ क ]

वा—अपापा भवसि ।

सी—( सलज्जम् ) जणमज्झगदा एव्वं भणामि—मन्दभाइणी विदेहराअतनआ अहिण्णचारित्तेत्ति । [ ख ]

वा—समुद्घुष्यतां विकारानुरूपः प्रतिकार इति ।

सी—पहवदि गुरुणिओओ [अञ्जलिं बध्वा दिशो विलोक्य] सुणंतु भवन्तो लोअपाला गअणमज्झचारिणो देवदाओ गन्धव्वसिद्धविज्झाधरा जो अ प्पवाहपच्चक्खीकिदसव्वलोअरहस्सा वम्मीइविस्समित्तवसिट्ठप्पमुहा महेसिणो एसो सअललोअसुहासुहकम्मसक्खी भअवं राहवउलपिदामहो सहस्सरस्सि अ सीदा चारित्तसुद्धिं अन्तरेण एव्वं सच्चावणदि । [ग]

---

( क ) अहं किं परिशोधयामि ।

( ख ) जनमध्यगता एवं भणामि—मन्दभागिनी विदेहराजतनया अभिन्नचारित्रेति ।

( ग ) प्रभवति गुरुनियोगः । (—) शृण्वन्तु भवन्तो लोकपाला गगनमध्यचारिणो देवता गन्धर्वसिद्धविद्याधरा ये च प्रभावप्रत्यक्षीकृतसर्वलोकरहस्या वाल्मीकिविश्वामित्रवसिष्ठप्रमुखा महर्षयः, एष सकललोकशुभाशुभकर्मसाक्षी भगवान् राघवकुलपितामहः सहस्ररश्मिश्च सीता चारित्रशुद्धिमन्तरेणं एवं सत्यापयति ।

---

रामो मामितो गन्तुं चोदयतीति रामो मां दण्डयत्येव । तपोधनानां विशेषेण वाल्मीकिसदृशानां तादृशो निकारो न दण्डादूनः ।

अहं किं परिशोधयामीति—अहं पुराप्यात्मानं शोधितवती वह्निपरीक्षाद्वारा, नच तत्परिशोधनं सफलमभूदिति भूयोऽपि शोधनप्रयासः केवलमायासायेति भावः । नाहं पातकिनी यदर्थं शोधनं स्यादपेक्षितमिति वा । परिशोधनकर्मारम्भः केवलं मदाचरितः विफल एव स्यात्, अवश्यं तु भगवता वाल्मीकिना तथा प्रयतितव्यं यथा जनो मां निष्पापामूरीकुर्यादिति वा ।

अपापा भवसीति—एवं तूष्णीं स्थितां त्वां सर्वोऽपि कल्मषभराक्रान्तां मंस्यते । आत्मानं निरागसं प्रतिपादयन्ती पुनरर्भवेरेव अपापात्वेन स्वीकृता जनतया । अपापैवासि किमिति निश्शङ्कं तथात्वेनात्मानं न प्रतिपादयसि जनतासम्मुखमिति वा ।

---

१ 'परिबोधेमि'—इति मूलपुस्तके ।

वा—पश्यन्तु भवन्तः महाप्रभावाकृष्टमपि सीतामाहात्म्यसम्भृत-माश्चर्यम् ।

सर्वे—[ सविस्मयम् ] आश्चर्यमाश्चर्यम् । एष हि देवीवचनस्य समनन्तरं दत्तावधान इव निःशब्दप्रशान्तो निवृत्तसर्वारम्भः कृत्स्न एव स्थावरजङ्गमो लोकः संप्रवृत्तः । तथाहि—

उदन्वन्तः शान्ताः स्तिमिततरकल्लोलवलया
निरारम्भो व्योम्नि प्रकृतिचपलोऽप्येष पवनः ।

---

विदेहराजतनयेति—विदेहराजतनयात्वमपि किल्बिषराहित्ये बीजम् । जनकस्य गुणाः सुतायां सङ्क्रामन्ति, तस्माद्विदेहराजस्य जनकस्य दुहिता न भवति किल्बिष-भागित्याशयः ।

अभिन्नचारित्रेति—अभिन्नं चारित्रं यस्याः सा । रामसन्निधौ यथा सद्वृत्ता सीताऽभूत्तथैव बलाद्विरहमापादितापीति ।

समुद्घुष्यतां प्रोच्चैरुच्यतां यथा सर्वेऽपि समवेता जनाः शृणुयुः । विकारानु-रूपः विक्रियानुकूलः । प्रतिकारः प्रतीकारः । यदि मया दुश्शीलता जातु समादृता भवेत्तदा भवेदीदृशं ममानिष्टमित्येवं रूपो विनिमयः ।

गन्धर्वसिद्धविद्याधराः देवयोनयः स्वीकृताः भारतीयैर्देवमालायाम् । पुरातनाः जातिविशेषा हिमाचलवर्तिनः इत्याधुनिकाः पुराविदः ।

राघवकुलपितामहः सहस्ररश्मिः वंशस्यास्यादिप्रवर्त्तकत्वात्तथाभिधानम् । तथा च मुरारिः—

"अस्मद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रवि-
र्यज्वानो वयमद्य ते भगवती भूरद्य राजन्वती ।
अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो
येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः" ॥ इति ।

अन्तरेण विना । 'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने'—इत्यमरः । सत्यापयति—सत्यताप्रतिपादनपुरस्सरं व्यवस्थापयति ।

सम्भृतमुपानीतम् ।

आरम्भः कर्मकलापः, आरभ्यते इति । कृत्स्नः समग्रः ।

उदन्वन्त इति—

उदन्वन्तः स्तिमिततरकल्लोलवलयाः शान्ताः, प्रकृतिचपलोऽप्येष पवनः व्योम्नि निरारम्भः, गजघटा एतस्मिन् [ काले ] निभृततरकर्णा प्रवृत्ता, जनकतनयोक्तौ कृत्स्नं जगत् अवहितं जातम्—

उदन्वन्तः उदधयः समुद्राः शान्ताः शान्तियुक्ताः अत एव स्तिमिततरकल्लोल-

प्रवृत्ता एतस्मिन्निभृततरकर्णा गजघटा
जगत् कृत्स्नं जातं जनकतनयोक्तावचहितम् ॥ २३ ॥

सीता—जदि मए सअललोअमहत्थप्पच्चआपूरिदगुरुसासणं उम्मुक्खिअमहामहीहरसहस्सविरइदसेदुवन्धविभत्तमहासमुद्दं सुरासुरभुवणेक्कधणुद्धरं राहवकुलणंदणं तुमं उज्झिअ पइव्वदाविरुद्धेण भावेण अण्णो को वि णअणेहिं णिव्वण्णिदो, वअणेण आलविदो, हिअएण वा चिंतिदो एदिणा सच्चवअणेण सअललोअपच्चक्खदीसमाणदिव्वरूपधारिणी भअवदी महप्पहावा चित्तशुद्धिं मे लोअस्स पआसीकरोदु । (पअडीकरोदु ] । [क]

( सर्वे सम्भ्रमं नाटयन्ति )

वाल्मी—किमेतदव्यक्तभीषणं लोकस्य रसान्तरमाविर्भूतम् ।

(क) यदि मया सकललोकमहार्थप्रत्ययापूरितगुरुशासनं उन्मूलितमहामहीधरसहस्रविरचितसेतुवन्धविभक्तमहासमुद्रं सुरासुरभुवनैकधनुर्धरं राघवकुलनन्दनं त्वामुज्झित्वा पतिव्रताविरुद्धेन भावेनान्यः कोपि नयनाभ्यां निर्वर्णितः, वचनेनालपितः, हृदयेन वा चिन्तितः, एतेन सत्यवचनेन सकललोकप्रत्यक्षदृश्यमानदिव्यरूपधारिणी भगवती महाप्रभावा चित्तशुद्धिं मे लोकस्य प्रकाशीकरोतु ( प्रकटीकरोतु ) ।

वलयाः स्तिमिततरा विशेषेण निस्तब्धाः निश्चलाः कल्लोलानां वलयाः समूहा येषां तादृशा 'जाताः' इति शेषः । एष पवनो वायुः प्रकृतिचपलोऽपि प्रकृत्या चञ्चलोऽपि गतिमानिति यावत्, अत एव सदागतिरित्युच्यते । व्योम्नि आकाशे निरारम्भः स्पन्दरहितः संवृत्तः । एतस्मिन् काले गजघटा गजपङ्क्तिः । तथा च विशाखदत्तः—

'यत्रैषा मेघनीला चरति गजघटा राक्षसस्तत्र याया, दिति, निभृततरकर्णा निभृततरा विशेषेण निस्तब्धभावं प्राप्ताः कर्णाः यस्यास्तादृशी सम्प्रवृत्ता सञ्जाता । जनकतनयोक्तौ सीतायां वक्तुं प्रवृत्तायामित्यर्थः कृत्स्नं सकलमपि जगत् अवहितं दत्तावधानं जातमिति सर्वमवदातम् ॥ २३ ॥

सकलेति—सकले लोके महार्थप्रत्ययेन आपूरितं गुरुशासनं येन तम्, महार्थः महान् अर्थः तस्य प्रत्ययः प्रतीतिः, गुरोः पितुः शासनमादेशः । राज्ञा दशरथेन चतुर्दशवर्षावधिदण्डकारण्यसेवनार्थमनुक्तोऽपि कैकेय्या आदेशं तस्यैवादेशं मत्वा

१ मूलपुस्तकेऽस्यानुल्लेखनं प्रामादिकमेव ।

नादः पातालमूलात्प्रभवति तुमुलं पूरयन् व्योमरन्ध्रं
पातक्लिष्टा इवैते दिशि दिशि गिरयो मन्दमन्दाश्चरन्ति।
बद्धानन्दाः समन्ताल्लवणजलधयो मथ्यमाना इवासन्
सीमामुल्लंघ्य वेगादुदनिधिसलिलैः स्वानि वेलावनानि ॥२४॥

---

वनगमनं यदङ्गीचकार रामः तेन पितुः शासनस्य महार्थताप्रतीतिः कारितैव रामेण सकलेऽपि लोके। गुरुशासनं यादृशं तादृशं भवतु, अवश्यं तु तन्मानयितव्यमित्येष प्रत्ययो महार्थताबीजम्। अन्यथा तु दोषमाह भारविः। यथा——

'स वंशस्यावदातस्य शशाङ्कस्येव लाञ्छनम्।
कृच्छ्रेषु व्यर्थया यत्र भूयते भर्तुराज्ञया'॥ इति।

उन्मूलितेति——उन्मूलिता उत्पाटिताः महान्तो ये महीधराः पर्वताः तेषां सहस्रेण विरचितः यः सेतुबन्धः तेन विभक्तो द्विधाकृतो महान् समुद्रो येन तम्।

सुरेति——सुरैर्देवैरसुरैर्दानवैश्च सहितं यद्भुवनं लोकः तस्य एकः प्रधानो धनुर्धरस्तम्, सुरासुरमानवेषु कोऽपि यत्समो धानुष्को नास्त्येवेति भावः। निर्वर्णितः दृष्टः। सकलेति——सकलैर्लोकैः जनैः प्रत्यक्षं दृश्यमानं यद् दिव्यं रूपं तस्य धारिणी भगवती पृथ्वी। शैलकान्तारनदीसमुद्रगह्वरसमतलयुतं दिव्यं रूपं सर्वेण प्रत्यक्षीक्रियते पृथिव्याः।

अव्यक्तभीषणमिति——सुस्पष्टतयाऽपरिलक्ष्यं भयानकञ्च। रसान्तरमिति——अन्या रसा रसान्तरम्। रसा पृथ्वी। यथा विश्वगुणादर्शे——

सदावदातनिम्नगातटीकुटीरवासिनी कटिस्फुटीभवत्करा किटीश्वरी पटीयसी।
रसारसादिहोदिता रसालसालसंवृते वनेऽवनेषु दीक्षिता मदीक्षिताधिदेवता'॥ इति

यद्वा अन्यो रसो रसान्तरम्। रौद्रबीभत्सभयानकादिप्रसिद्धनवरसव्यतिरिक्तम्। नादः इति——

व्योमरन्ध्रं तुमुलं पूरयन् पातालमूलात् नादः प्रभवति, एते गिरयः पातक्लिष्टा इव दिशि दिशि मन्दमन्दाश्चरन्ति। बद्धानन्दाः लवणजलधयः वेगात् सीमामुल्लङ्घ्य उदनिधिसलिलैः स्वानि वेलावनानि मथ्यमानाः इव आसन्——इति योजना।

व्योमैव नभएव रन्ध्रलं छिद्रं तत् तुमुलं यथा तथा पूरयन् सर्वदिग्व्यापीत्यर्थः। नादः ध्वानः पातालमूलात् पातालस्य मूलात् प्रभवति प्रकर्षेण जायते। प्रबले भूकम्पे भवत्येवास्य नादस्य परिचयः। पातेन पतनेन क्लिष्टाः खिन्नाः इव एते गिरयः पर्वताः दिशिदिशि सर्वासु दिक्षु मन्दमन्दाश्चरन्ति चलन्ति। बद्धानन्दाः अत्यर्थमानन्दयुताः उल्लासोपेताः लवणजलधयः लवणसहिताः सागराः वेगात्

---

१ 'ककुभः'——इति पाठान्तरम्।
२ 'सीता'——इति पाठो मूलपुस्तके प्रामादिकः।

सीते, त्वामुद्दिश्य प्रादुर्भूतानि सर्वलक्षणानि पुनरप्यावर्ततां सत्यम् ।

सी—( "जइ मए सअललोअ" इत्यादि पठति ]

[ नेपथ्ये ]

स्वस्ति गोभ्यः, स्वस्ति ब्राह्मणेभ्यः, स्वस्ति राघवकुलाय ।

आकृष्टा मिथिलाधिराजतनया सत्येन पातालत-
स्तोयान्मज्जनलीलया तनुमिमां हित्वात्मनः स्थावराम् ।
साक्षाल्लक्षितदिव्यमूर्तिमहिमायोगेन विश्वम्भरा
लोकं मध्यममम्बुराशिरशना देवी समारोहति ॥ २५ ॥

सर्वे—( आकर्ण्य विस्मयं नाटयन्ति )

वा—कथमदृष्टपूर्वा अश्रुतपूर्वा इयमाश्चर्यपरम्परावृत्तिः ।

---

सीमां मर्यादां उल्लङ्घ्य व्युत्क्रम्य उदनिधिसलिलैः स्वीयैः सलिलभरैः स्वानि वेलावनानि वेलायां यानि वनानि । वेला तीरम् । 'वेला तत्तीरनीरयोः'--इति कोषः । तानि तीरस्थानि वनानि मथ्यमाना इव आलोड्यमाना इव आसन् अभूवन् भूतलान्तरे महानादः पर्वतानामुत्कम्पो जलधीनाञ्च सीमातिक्रमणं सर्वमपि प्रबलं भूकम्पस्यैव चिह्नजातमुदीरितम् । द्विजेन्द्रलाल रायेणापि प्रबलभूकम्पे जाते धरातले प्रस्फुटिते सीताया भुवि समावेशो निलयनञ्च प्रतिपादितम् ॥ २४ ॥

आवर्ततां सत्यम्—'भवती'—इत्यध्याहार्यम् । सत्यस्य पुनरावृत्तिं करोतु भवतीत्यर्थः ।

आकृष्टेति—

अम्बुराशिरशना विश्वम्भरा देवी मिथिलाधिराजतनयासत्येन पातालतः आकृष्टा तोयात् मज्जनलीलया इमां स्थावरां आत्मनः तनुं हित्वा साक्षाल्लक्षित-दिव्यमूर्तिमहिमायोगेन मध्यमं लोकं समारोहति—इति योजना ।

अम्बुराशिः समुद्रः एव रशना काञ्ची यस्याः सा विश्वम्भरा पृथ्वी देवी मिथिलाधिराजस्य जनकस्य राज्ञो मैथिलेश्वरस्य तनयायाः सीतायाः सत्येन पातालतः पातालदेशात् आकृष्टा सती इमां सर्वलोकदृश्यां स्थावरां आत्मनः स्वस्य तनुं तनूं शैलकाननकलापोपेतां मूर्तिम्, हित्वा त्यक्त्वा, साक्षात् प्रत्यक्षं लक्षिता दृग्गोचरीकृता दिव्या या मूर्तिस्तस्याः यो महिमा तस्य आसमन्ताद् योगेन तेन महिम्ना समुपेतेत्यर्थः मध्यमं लोकं भूलोकं समारोहति । उपरि स्वर्लोकः, अधस्ताद् भुवर्लोकः, मध्ये भूलोकः । भुवर्लोकस्यैव पातालसञ्ज्ञेह । निम्नप्रदेशादुपरिष्ठात् स्थितं मध्यमं लोकं समारोहन्ती पृथिव्या अधिष्ठात्री देवी सर्वैरङ्गस्थैः समीक्ष्यते इति ॥ २५ ॥

एतज्ज्योतिरुदेति नागभवनात्संवासयन्तश्चिरा-
न्माल्यैः शीतलपद्मगन्धिसुभगाः पातालवाता दिशः।
एषाविर्भवति क्रमेण वसुधा राजन् दधानाञ्जलिं
सौमित्रे प्रणमादरात् कुशलवौ पुष्पाञ्जलिः कीर्यताम् ॥२६॥

सर्वे—( यथोक्तं नाटयन्ती )

( ततः प्रविशति पातालोद्भेदं नाटयन्ती पुष्पवर्षाभिर्नारीभिः सह समानोदात्तोज्ज्वलवेषाभिश्च पृथ्वी )

सर्वे—[ कृताञ्जलयः ]

त्वं बिभर्षि जगत् कृत्स्नं शेषमूर्ध्ना त्वमुह्यसे।

---

वृत्तिः वर्तनम्। एतदिति—

नागभवनात् एतत् ज्योतिः उदेति, माल्यैः शीतलपद्मगन्धिसुभगाः पातालवाताः चिरात् दिशः संवासयन्तः, राजन्, अञ्जलिं दधाना एषा वसुधा क्रमेण आविर्भवति, सौमित्रे आदरात्प्रणम, कुशलवौ पुष्पाञ्जलिः कीर्यताम्—इत्यन्वयः।

नागभवनं नागानां सर्पाणां वसतिः पातालं तस्मात् एतत् पुरो दृश्यमानं ज्योतिः तेजः उदेति आक्रमते। दूरस्थत्वेन सम्यग् विविच्यानालक्षणात् तेजोरूपतया प्रतीतिः। यथा नारदीये वर्णने माघः—

चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥ इति।

माल्यैः दामभिर्हेतुभिः शीतलपद्मगन्धिनः सुभगाश्च। शीतलानां पद्मानां गन्धो विद्यते येषां तादृशाः अतएव च सुभगाः सौभाग्यशालिनः, पातालकुसुमसौरभसम्पृक्तत्वात्सौभाग्यातिशयः। पातालवाताः चिरात् दिशः संवासयन्तः सौरभयुक्ताः कुर्वन्तः, 'प्रवहन्ती'त्यध्याहार्यम्। राजन् अञ्जलिं दधाना धारयन्ती विरचयन्ती साञ्जलिरिति यावत् एषा वसुधा पृथ्वी क्रमेण आविर्भवति पृथ्वीत्वेन सम्यगालक्ष्यते इत्यर्थः। राजा पृथिव्याः प्रभुरिति साञ्जलिः प्रह्वा पृथ्वी देवी समुपतिष्ठते। सौमित्रे लक्ष्मण, आदरात्सम्मानात् प्रणम नमस्कुरु, भो कुशलवौ, पुष्पाञ्जलिः कीर्यतां क्षिप्यताम्। पुष्पवर्षं कुरुतामित्यर्थः।

कथं पुनः सौमित्रिः प्रणमतु न कुशलवौ प्रणमताम्? तौ सद्य एव पृथिव्याः परिवृढौ भविष्यतः, न तु लक्ष्मणः इति समाधानम्॥ २६॥

उद्भेदः प्रस्फोटः। पुष्पवर्षाभिः सहिता पृथ्वी। नारीभिश्च समुपास्यमाना। समानरूपतया उदात्तः उदारः, उज्ज्वलो दीप्रो भासमानश्च वेषो यासां ताभिः।

त्वं कृत्स्नं सकलं जगत् बिभर्षि पालयसि, आश्रयस्य अन्नस्य च दानेन। शेषः फणीन्द्रः तस्य मूर्ध्ना शिरसा त्वं उह्यसे ऊढा भवसि। पुरा गतेषु युगेषु देवाः विद्वांसः अभिमतान् काम्यान् त्वामेव दुदुहुः। दुहेर्द्विकर्मकत्त्वम्। तथा च वैयाकरणाः—

काम्यानभिमतान् देवास्त्वामेव दुदुहुः पुरा ॥ २७ ॥
उन्नतौ विन्ध्यकैलासौ तव देवि पयोधरौ ।
जाह्नवी हारयष्टिस्ते समुद्रा रत्नमेखलाः ॥ २८ ॥
यज्ञाङ्गानां समुत्पत्त्यै वासवस्त्वां प्रवर्षति ।
रत्नानामोषधीनां च त्वां प्रसूतिं प्रचक्षते ॥ २९ ॥

नमो भगवत्यै विश्वम्भरायै । [ प्रणमन्ति ]

पृथ्वी--[ दिशो विलोक्य ] अहो ! अनतिक्रमणीयं शासनं प्रतिनिवृत्तानां पतिव्रतानाम् ।

व्याप्य द्यावापृथिव्यौ प्रतिहतगतयो यत्र भानोर्मयूखाः
गाम्भीर्यात्क्षीणवेगो नियमयति गतिं यच्च वोढुं गरुत्मान् ।

---

'दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना' ॥ इति ।

अभिमतान् अभीष्टान्, काम्यान् आवश्यकान् पदार्थान् त्वामेव दुदुहुः दुग्धवन्तः, त्वत्सकाशादेव प्राप्तवन्त इत्यर्थः । तथा च कालिदासः कुमारसम्भवे--

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधींश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥ इति ॥२७॥

उन्नतौ प्रोच्छ्रितौ विन्ध्यकैलासौ विन्ध्यः प्रसिद्धः कैलासस्तु हिमालयैकदेशत्वादवयवग्रहणेऽवयविग्रहणमिति न्यायात् हिमालयः । तौ देवि ! तव पयोधरौ वक्षोजौ । जान्हवी गंगा ते हारयष्टिः स्रग् । समुद्राः सर्वतो वर्तमानाः रत्नमेखलाः रत्नैर्जटिताः काञ्च्यः ॥ २८ ॥

यज्ञस्याङ्गानि साधनभूतानि महौषधीनि तेषां समुत्पत्त्यै जननाय वासवः इन्द्रः त्वां प्रवर्षति । स्वातौ वृष्टः शुक्तिकायां पतितः बिन्दुर्मौक्तिकायते इति कविसमयः । रत्नानां ओषधीनां च त्वां वसुन्धरां प्रसूतिं जनयित्रीं प्रचक्षते कथयन्ति ॥ २९ ॥

अनतिक्रमणीयं अनुल्लङ्घनीयम् । शासनमादेशः । प्रतिनिवृत्तानां गृहाणि प्रति पुनः परापतितानाम् । व्याप्येति--

द्यावापृथिव्यौ व्याप्य भानोः मयूखाः यत्र प्रतिहतगतयः, गाम्भीर्यात्क्षीणवेगो गरुत्मान् यच्च वोढुं गतिं नियमयति, परिमिततपसां योगिनामपि यत् स्थानं विप्रकर्षात् अगम्यम्, तस्मादाकृष्य जनकतनयया सा अहं दूरमारोपिता अस्मि ॥

द्यौश्च पृथिवी च द्यावापृथिव्यौ रोदसी व्याप्य भानोः सूर्यस्य मयूखाः कराः यत्र प्रतिहतगतयः संरुद्धगतयो भवन्ति, यत्र स्थाने विवस्वतो रश्मिनिकरस्यापि सञ्चारो न सम्भवीत्यर्थः । गाम्भीर्येण अक्षीणो वेगो यस्य सः, गरुत्मान् गरुडः, गरुतः पक्षाः सन्त्यस्य । 'गरुत्मान् गरुडस्तार्क्ष्यो वैनतेयः खगेश्वरः'--इत्यमरः,

यत् स्थानं विप्रकर्षात् परिमिततपसां योगिनामप्यगम्यं
तस्मादाकृष्य साहं जनकतनयया दूरमारोपितास्मि ॥ ३० ॥

तत्तामेवाभिभाषिष्ये। वत्से, मैथिलि, कर्त्तव्यतां केनार्थयसि ?

सीता—( सविस्मयं विलोक्य ) भअवदि, का तुमं ? (क)

पृथ्वी—किं न मां वेत्ति भवती ?

मामामनन्ति मुनयः प्रणवद्वितीयां
मत्तः प्रसूतिरखिलस्य चराचरस्य।
मय्येव सिध्यति तपोऽवनिदेवतां त्वं
जानीहि जानकि तवान्तिकमागतां माम् ॥ ३१ ॥

अपि च, वत्से, ज्ञायतामिदमपि।

अभ्युद्धृतिश्च सहसा ममैवेयमनुष्ठिता।
पुरा महावराहेण त्वत्प्रभावेन साम्प्रतम् ॥ ३२ ॥

---

(क) भगवति ! का त्वम् ?

---

यच्च स्थानं वोढुं गतिं नियमयति, भाराधिक्येन गतिह्रासोऽवश्यकर्त्तव्यो भवति बलवता विष्णुवाहनभूतेन तार्क्ष्येणापि । परिमिततपसां परिमितं स्वल्पं तपः येषां तेषां योगिनामपि, किमु वक्तव्यमितरेषां तपोहीनानाम्, विप्रकर्षाद्धेतोः सुदूरतायाः कृते यत् स्थानं अगम्यं गन्तुमनर्हम्। तस्मात्स्थानात् आकृष्य बलादाकर्षणं कृत्वा साहं पृथिवीदेवता जनकतनयया जानक्या दूरमारोपितास्मि, सुदूरमिहानीतास्मि। अहो महान् प्रभावो मैथिल्याः पतिव्रतानां धुरि पर्यवस्थितायाः॥ ३०॥

कर्त्तव्यतां······अर्थयसि—इति, केन तव कर्त्तव्यमस्ति, कर्त्तव्यं प्रयोजनम्।

मुनयः मां प्रणवद्वितीयां प्रणवः ओङ्कारः द्वितीयः सहचरः यस्याः ताम्। आमनन्ति वदन्ति। अखिलस्य चराचरस्य स्थावरजङ्गमात्मकस्य सकलस्य जगतः मत्तः मत्सकाशादेव प्रसूतिः जनिः प्रादुर्भावः। तपस्विनां तपः मयि एव सिध्यति सम्पन्नं भवति। जानकि ! तव अन्तिकं समीपं आगतां प्राप्तां मां अवनिदेवतां पृथिव्या अधिष्ठात्रीं देवीं त्वं जानीहि ॥ ३१ ॥

इयं च सहसा झगिति मम अभ्युद्धृतिः अभ्युद्धरणं पुरा पूर्वस्मिन् काले महावराहेण साम्प्रतं त्वत्प्रभावेन च अनुष्ठिता सम्पादिता। पुरा कैटभेन दानवेन्द्रेण सकला मही समुद्रे नीता, वराहरूपेण विष्णुना सा समुद्धृतेति पौराणिकी कथा । तथा हि—

नमस्तस्मै वराहाय हेलयोद्धरते महीम्।

किञ्च !

मुक्तैर्यास्यति कुत्रचिद्वसुमती दंष्ट्राङ्कुरस्थेयसी
कुक्षौ क्षोभमवाप्स्यति त्रिभुवनं रुद्धैरमीभिः क्रमात्।

सीता—( अञ्जलिं बध्वा ) भअवदि, अणुकम्पं अज्झासिअ जह तुए एव्वं चारित्ताविकलत्तेणेए अहिलक्खिदा तह लोअस्स पआसीअदु । (क)

पृथ्वी—तथास्तु । ( समन्तादवलोक्य )

ऋषयो दानवाः सिद्धा यक्षगन्धर्वकिन्नराः ।
मानवा लोकपालाश्च भवन्त्ववहिताः क्षणम् ॥ ३३ ॥

रामं दाशरथिं मुक्त्वा न जातु पुरुषान्तरम् ।
मनसापि गता सीतेत्येवं विदितमस्तु वः ॥ ३४ ॥

( आकाशात्पुष्पवृष्टिः दुन्दुभिध्वनयश्च )

सर्वे—( सहर्षम् ) अहो । विस्मयः । वसुन्धरासम्पादितशुद्धिमनुवर्तयन्ति बहुविधान्येतानि प्रादुर्भवन्ति—

आशामुखे त्रिदशदुन्दुभयो ध्वनन्ति
व्योम्नः पतन्ति कुसुमानि निरन्तराणि ।
आकस्मिकोऽप्युपरि धार्यत एव देव्याः
केनाप्यवध्यवितते गगने वितानः ॥ ३५ ॥

(क) भगवति ! अनुकम्पां अध्यास्य यथा त्वयैवं चारित्राविकलत्वेनाभिलक्षिता तथा लोकस्य प्रकाश्यताम् ।

इत्यस्वल्पविकल्पमीलितमतेः कण्ठे लुठन्तो मुहुः
क्रोडाकारधरस्य कैटभजितः श्वासानिलाः पान्तु वः ॥ इति ।

वराहः सूर्यः स च जलमग्नां पृथिवीं जलविशोषणपुरस्सरं समुद्धृतवानिति वैदिकाः आचार्यदयानन्दप्रभृतयः । ॥ ३२ ॥

अनुकम्पां दयाम् । अध्यास्य आस्थाय । चारित्राविकलत्वेन चारित्रस्य अविकलत्वं अक्षुण्णत्वं तेन । अभिलक्षिता विज्ञाता अहमिति शेषः ।

अवहिता दत्तावधानाः । क्षणं यावत् ॥ ३३ ॥

जातु कदापि । पुरुषान्तरं अन्यं पुरुषम् । मनसापीति—किमु वक्तव्यं कायेन वाचा वा मनसापि सीता जातु न व्यभिचरितवती ॥ ३४ ॥

अनुवर्तयन्ति अनुसारीणि । शत्रन्तरूपं क्लीबे प्रथमा बहुवचने ।

आशेति—आशानां दिशां मुखे सर्वासु दिक्षु त्रिदशदुन्दुभयः त्रिदशानां देवानां भेर्यः ध्वनन्ति शब्दायन्ते । व्योम्नः आकाशात् निरन्तराणि कुसुमानि पतन्ति । आकस्मिकोऽपि अकस्माज्जातः वितान उल्लोचः अवध्यविततें अबध्यं अप्रतिहतं विततं व्यापकत्वं यस्य तस्मिन् गगने आकाशे देव्याः उपरि केनापि धार्यते ॥ ३५ ॥

( नेपथ्ये )

जयति दशरथः स सत्यसन्धो जयति तथैकधनुर्धरश्च रामः ।
जयति रघुकुलं कलङ्कमुक्तं जयति चरित्रगुणोन्नता च देवी॥३६॥

पृथ्वी—अपि शुद्धिमती वैदेही ?

सर्वे—[ कृताञ्जलयः ]

या स्वयं प्रकृतिनिर्मला सती छाद्यतेऽन्यजनवादवारिदैः ।
जानकी भगवति त्वयाद्य सा चन्द्रिकेव शरदा विशोधिता॥३७॥

( प्रणमन्ति ) अपि नाम आश्चर्यं मिथुनं भूयः संयुज्यते !

वाल्मी—भो भोः कौसल्यामातः, सम्भाव्यतां सीता परिशुद्धि-परिग्रहेण ।

राम—यदाज्ञापयन्ति गुरवः । वत्स, लक्ष्मण, क्रियतां पादप्रणामः ।

सीता—[ अञ्जलिं बध्वा सहर्षम् ] जेदु अज्जउत्तो [क]

वाल्मी—अहो ! उदात्तशालीनः प्रतिग्रहप्रकारः ।

लक्ष्म—[सहर्षं सलज्जं च] आर्ये, वध्यः पातकी लक्ष्मणः प्रणमति ।

सीता—कसि तुए अप्पा णिंदिअदि, एव्वं अप्पगुरुणिओअवट्टी चिरं जीव । [ख]

वाल्मी—वत्स राम, अनेन गृहीता वैदेही । स्वयमाभाष्य पाणिना पाणौ सङ्गृह्य नियुज्यतां यज्ञाधिकारे ।

---

[क] जयतु आर्यपुत्रः ।

[ख] कुतस्त्वया आत्मा निन्द्यते, एवमात्मगुरुनियोगवर्ती चिरं जीव ।

---

सत्यसन्धः सत्यप्रतिज्ञः । 'सन्धा प्रतिज्ञा मर्यादा'—इत्यमरः ॥ ३६ ॥

प्रकृतिनिर्मला प्रकृत्या स्वभावेन मलरहिता, सती विशुद्धचारित्रा या स्वयं स्वतः, सा अन्यजनानां पृथग्जनानां वादरूपैः वारिदैः मेघैः छाद्यते आव्रियते । सा जानकी अद्य भगवति वसुन्धरे, त्वया शरदा चन्द्रिका इव विशोधिता, शरदि चन्द्रिका मेघानां रेणूनां तुषाराणाञ्चाभावेन स्वयं विशुद्धाऽपि तथा प्रतीयते ॥३७॥

मिथुनं सीतारामयोर्युगलम् ।

कौसल्यामातः रामेति सम्बोधनम्, कौसल्या माता यस्य ।

वध्यो हन्तुमुचितः सीतापरित्यागे सहायत्वात् ।

समाचारो व्यवहारः प्रथेति यावत् ।

राम—[लज्जां नाटयति ]

वाल्मी—अलं लज्जया, यज्ञाङ्गं विना किं वा अपूर्वं दाशरथेः सर्व-साक्षिकं पाणिग्रहणमिति ?

राम—समाचारोऽयं गुरुनियोगश्च [ सीतां पाणौ गृहीत्वा ] भद्रे वैदेहि।

अपत्यमिष्टं च वदन्ति देवाः फलद्वयं दारपरिग्रहस्य।
पूर्वं तयोस्त्वय्युदपादि हृद्यं वहस्व वासे भवने द्वितीयम् ॥३८॥ ?

सीता—जं अज्जउत्तो आणवेदि। उच्छ्वसिओ मे अप्पा। पच्छागदा मे पाणा। [क]

पृथ्वी—अविघ्नमस्तु यज्ञानां काले वर्षतु वासवः।
निरातङ्काः प्रजाः सन्तु सीतारामसमागमात् ॥ ३९ ॥
( अन्तर्धानं नाटयन्ती निष्क्रान्ता )

राम—कथमन्तर्भूता वसुमती !

वाल्मी—अनतिदीर्घसन्निधाना हि देवताः।

---

[क] यदार्यपुत्र आज्ञापयति उच्छ्वसितो मे आत्मा। प्रत्यागता मे प्राणाः।

---

अपत्यमिति—

देवाः अपत्यं इष्टं च दारपरिग्रहस्य फलद्वयं वदन्ति, तयोः पूर्वं त्वयि हृद्यं उदपादि, भवने वासे द्वितीयं वहस्वेत्यन्वयः।

देवाः विद्वांसः अपत्यं सन्तानम्, 'प्रजायै गृहमेधिनाम्'—इत्युक्तेः। इष्टं यागः इज्या चेति फलद्वयं द्वे फले दारपरिग्रहस्य दाराणां स्त्रियाः परिग्रहस्य ग्रहणस्य स्वीकारस्य वदन्ति। विवाहो ऽपत्यलाभाय यागार्थश्चेति फलितोऽर्थः। तयोः पूर्वं अपत्यमित्यर्थः हृद्यं मनोरमं कुशलवरूपं त्वयि उदपादि समुत्पादितम्, भवने वासे सति त्वयि मया साकं भवने वसन्त्यां द्वितीयं यागरूपं फलं वहस्व धारय ॥ ३८ ॥

उच्छ्वसितः प्राणितः। प्रत्यागताः पुनरागताः।

अविघ्नमिति—

यज्ञानां यागानां अविघ्नमस्तु, निष्प्रत्यूहं यज्ञाः प्रवर्तन्तामित्यर्थः। काले उचितेष्ववसरेषु वासवः इन्द्रः पर्जन्य इति यावत् वर्षतु वर्षणं करोतु। सीता-रामयोः समागमात् पुनः सहवासात् प्रजाः निरातङ्काः आतङ्करहिताः निर्भयाः सन्तु ॥ ३९ ॥

राम—भगवताहमप्यनुज्ञातो लक्ष्मणमभिषेक्तुमिच्छामि।[1]

लक्ष्म—(अञ्जलिं बध्वा] यदि प्रसन्नमार्येण, तेन तनयसङ्क्रामिणा युवराजशब्देन विभज्यतां चिरकालानुचरः सौमित्रिः।

वाल्मी—इक्ष्वाकुकुलसदृशमभिहितम्।

राम—का गतिः, अनतिक्रान्तैव रामेण लक्ष्मणप्रार्थना। अवश्यं चेदिदं कर्म वत्सस्य, तदहमेव तत्प्रतिपत्स्ये। सौमित्रे, आनीयताममभिषेकसम्भारः।

लक्ष्म—आर्य, सम्पादितं सर्वमभिषेकसमयोचितं व्यग्रहस्ताभिर्देवताभिः। पश्य—

एतच्छत्रं[2] वहति भगवान् वासवश्चन्द्रगौरं
देवी वालव्यजनयुगलं जह्नुकन्या[3] शची च।
अम्भोगर्भान् कनककलशान् धारयन्ति प्रजौघा-
श्चित्रं नैतत् प्रणयसुलभाः सम्पदस्तद्विधानाम्॥ ४०॥

---

अन्तर्भूता तिरोहिता।

अनतिदीर्घेति—न अतिदीर्घं सन्निधानं समीपावस्थानं येषां ते। अचिरायैव देवतानां सन्निधिर्महतः पुण्यनिचयस्य फलम्।

अवश्यं चेदिति—अवश्यं चेदिदं कर्म वत्सस्य (लक्ष्मणस्य) कर्त्तव्यमिति शेषः, तदहमेव तत् (कर्म) प्रतिपत्स्ये करिष्ये। अयमाशयः—यदि भवता लक्ष्मणेन राज्यभारः सीतातनये सङ्क्रामयितव्यः, न स्वयं वोढव्यः, तर्हि तदेवाहमपि करोमि। अभिषेकसम्भारः—अभिषेको राजपदग्रहणकालोचितं स्नानम्, तदर्थं यः सम्भारः सम्भृतान्युपकरणानि।

एतच्छत्रमिति—

भगवान् वासवः एतत् चन्द्रगौरं छत्रं वहति। देवी जह्नुकन्या (देवी) च शची वालव्यजनयुगलं वहति। प्रजौघाः अम्भोगर्भान् कनककलशान् धारयन्ति। तद्विधानां प्रणयसुलभाः सम्पदः (इति) नैतत् चित्रम्॥

भगवान् वासवः इन्द्रः शचीपतिः एतत् चन्द्रगौरं चन्द्र इव गौरस्तत् छत्रं आतपत्रं वहति धारयति। देवी जह्नुकन्या जाह्नवी गङ्गा शची पौलोमी च वाल-

---

१ 'अभिषेक्तुमि'त्यपपाठो मूलपुस्तके।

२ एषच्छत्रमि'ति मूलपुस्तके पाठः। नहि तुगागमः सम्भवति, संहिताया अभावात्। असति तु तुकि यतिभङ्गः स्यात्, तस्मात् 'एतच्छत्रमिति कल्पितः पाठोऽस्माभिः।

३ ज ॰ कन्येत्यपपाठो मूलपुस्तके।

राम—आवयोस्तर्हि वेत्राधिकारः ।

लक्ष्म—अनुगृहीताभियोगः संविभागः ।

राम—लक्ष्मण, वेत्रं धारय । ( वाल्मीकिमुद्दिश्य ) भगवन्नभिषिच्यतां नप्ता ।

वाल्मी—( कलशमादायोपसर्पन् ) भो भोः साकेतनिवासिनः पौराः, नानादिगन्तवासिनो राजानः विभीषणसुग्रीवहनुमत्प्रभृतयो महारथाः, शृण्वन्तु भवन्तः—

मैथिलीतनयः श्रेष्ठः कुशो नाम महारथः ।
अभिषिक्तोऽद्य साम्राज्ये मान्यतामस्य शासनम् ॥ ४१ ॥
पुरन्दरस्य यत् स्वर्गे पाताले यच्च वासुकेः ।
पृथिव्यां यच्च मान्धातुस्तदस्तु तव मङ्गलम् ॥ ४२ ॥

( नेपथ्ये कलकलः )

जय जय महाराज ।

सीता—पिअं मे दिट्ठिआ संउत्तं । [क]

---

[क] प्रियं मे दिष्ट्या संवृत्तम् ।

---

व्यजनयुगलं चामरद्वयं वहति । प्रजौघाः प्रजानां ओघाः समूहाः बहवो जनाः इत्यर्थः, अम्भोगर्भान् अम्भः उदकं गर्भे मध्ये येषां जलयुक्तानित्यर्थः, कनककलशान् कनकस्य सुवर्णस्य कलशान् घटान् धारयन्ति । तद्विधानां तत्प्रकाराणां कुशलवसदृशानां महाभागानां सम्पदः श्रियः, ईदृशाः सम्भाराः, देवता अपि यत्र समविभागा व्यापारेषु । प्रणयसुलभाः प्रेम्णावर्जिताः देवताः संयुज्यन्ते कर्मसु न केनाऽप्यधिकृताः नियुक्ता वा । नैतत् चित्रं आश्चर्यम् ॥ ४० ॥

वेत्राधिकारः वेत्रेऽधिकारः । आवां वेत्रधारकौ ।'द्वाः स्थितो वेत्रधारकः'—इति त्रिकाण्डशेषः । द्वारपालौ भवावः ।

अनुगृहीताभियोगः संविभागः—इति, अभियोगोऽभिग्रहः । अनुगृहीतोऽभियोगो यस्मिन् तादृशः संविभागः । योऽयं वेत्रेधिकारः स्वयं प्रतिपन्नः मम च प्रतिपादितः सोऽयं संविभागः । तत्र आत्मना सह मामपि नियुञ्जानेन तत्रभवता आत्मसमपदप्रदानेन परमनुगृहीतोऽहमिति तात्पर्यम् ।

नप्ता दुहितुः सुतः कुशः । सीता वाल्मीकेः सुता, 'नान्यस्तवायमबले श्वशुरः पिता च'—इत्युक्तत्वात् ।

पुरन्दरस्य इन्द्रस्य । वासुकेः सर्पराजस्य । मान्धाता सूर्यवंश्यो नृपः परमप्रसिद्धः । तथा चोक्तम्—'मान्धाता च महीपतिः कृतयुगेऽलङ्कारभूतो गतः'—इति ॥ ४२ ॥

रामः—पूर्णास्ते लक्ष्मणस्य मनोरथाः।

सर्वे—[ हर्षं नाटयन्ति ]

राम—[ कुशमुद्दिश्य ] राजन्, त्वयाऽहमभ्यनुज्ञातो यौवराज्ये लवमभिषेक्तुमिच्छामि।

कुश—यदाज्ञापयति देवस्तातः।

राम—प्रकामम् [ कलशमानीय ]

महाराजकुशस्यायं लवो नाम प्रियानुजः।
मया तद्वचनादेव यौवराज्येऽभिषिच्यते ॥ ४३ ॥

सर्वे—[ यथोचितं हर्षं नाटयन्ति ]

वाल्मी—किं ते भूयः प्रियमुपहरामि।

रामः—त्वद्दर्शनेन विधिना परिशुद्धवृत्ति-
जाता महाध्वरसखी मम सैव पत्नी।
न्यस्तं च सूनुयुगलं भुवनाधिकारे
किं स्यादतः प्रियतमं गुरुणाभिधेयम् ॥ ४४ ॥

उपहरामि सम्पादयामि।

वाल्मी—तथापीदमस्तु—

स्थाणुर्वेधास्त्रिधामा मकरवसतयः पावको मातरिश्वा
पातालं भूर्भुवस्स्वश्चतुरुदधिसमाः साममन्त्राश्च वेदाः।

---

कलकलः कोलाहलः।

ते इति षष्ठ्येकवचनम्, प्रथमाबहुवचनं वा। प्रियानुजः प्रियः अनुजः इति कर्मधारयः तद्वचनात् महाराजकुशवचनात् ॥ ४३ ॥

त्वद्दर्शनेन विधिना दैवेन, यद्दर्शनं दैवेन मम जातम्, यद्वा यद्दर्शनं दैवरूपम्। परिशुद्धवृत्तिः परिशुद्धा वृत्तिर्यस्याः सा, या सर्वैः परिशुद्धतया स्वीकृता। सैव मम पत्नी न तु तत्प्रतिकृतिः, महाध्वरसखी महाध्वरस्य सखी सहधर्मिणी जाता संवृत्ता। सूनुयुगलं च कुशलवरूपं पुत्रद्वयम्। 'सूनुः पुत्रेऽनुजे रवौ—इति विश्वः। भुवनाधिकारे प्रजापालने न्यस्तं नियुक्तम्। अतः प्रियतमं किं स्यात् इति गुरुणा तत्रभवताऽभिधेयं वक्तव्यम् ॥ ४४ ॥

स्थाणुः शिवः, वेधाः ब्रह्मा, त्रिधामा त्रीणि धामानि यस्य स विष्णुः, मकरवसतयः मकराणामावासाः जलनिधयः समुद्राः, पावको वह्निः, मातरिश्वा वायुः, पातालम्, भूर्भुवः स्वः भूलोकः, भुवर्लोकः, स्वर्लोकश्च, चतुरुदधिसमाः साममन्त्रैः सहिताश्चत्वारोऽपि वेदाः, सम्यक् संसिद्धिविद्याः इति सन्धिच्छेदोऽपि सम्भवी।

सम्यक्संसिद्धिविद्यापरिणततपसः पीठिनस्तापसाश्च
श्रेयांस्यस्मिन्नरेन्द्रे विदधतु सकलं वर्धतां गोकुलं च ॥४५॥

( इति निष्क्रान्ताः सर्वे )

षष्ठोऽङ्कः ।

कुन्दमाला समाप्ता ।

---

सम्यक् संसिद्धिमती विद्या येषां ते । अथवा कर्मधारयः सम्यक्संसिद्धिविद्याश्च ते परिणततपसः परिणतं परिपक्वं तपो येषां ते । दीर्घतपसो महाप्रभावास्तपस्विनः । पीठिनः पीठवन्तः पीठमासनम्, कुलपतय इत्यर्थः । तापसाश्च तपोधनाः, अस्मिन् नरेन्द्रे कुशरूपे श्रेयांसि कल्याणानि विदधतु, सकलं गोकुलं च गवां कुलं वर्धतां वृद्धिं गच्छतु ॥ ४५ ॥

इति श्रीपण्डितवाशीरामतनुजनुषो वज़ीराबादपत्तनवास्तव्यस्य
जयचन्द्रस्य कृतौ सञ्जीवन्यां कुन्दमालाटीकायां
षष्ठोऽङ्कः पर्यवसितः ।

शुभं भवतु ।

## ग्रन्थान्तरेभ्यः कथांशोऽयं समुद्ध्रियते ।

### १—रामायणे ।

### उत्तरकाण्डे त्रिचत्वारिंशः सर्गः—

तत्रोपविष्टं राजानमुपासन्ते विचक्षणाः ।
कथानां बहुरूपाणां हास्यकाराः समन्ततः ॥ १ ॥
विजयो मधुमत्तश्च काश्यपो मङ्गलः कुलः ।
सुराजिः कालियो भद्रो दन्तवक्रः सुमागधः ॥ २ ॥
एते कथा बहुविधाः परिहाससमन्विताः ।
कथयन्ति स्म संहृष्टा राघवस्य महात्मनः ॥ ३ ॥
ततः कथायां कस्याञ्चिद्राघवः समभाषत ।
काः कथा नगरे भद्र वर्तन्ते विषयेषु च ॥ ४ ॥
मामाश्रितानि कान्याहुः पौरजानपदा जनाः ।
किं च सीतां समाश्रित्य भरतं किं च लक्ष्मणम् ॥ ५ ॥
... ... ... ...

राघवेणैवमुक्तस्तु भद्रः सुरुचिरं वचः ।
प्रत्युवाच महाबाहुं प्राञ्जलिः सुसमाहितः ॥ १२ ॥
शृणु राजन्यथा पौराः कथयन्ति शुभाशुभम् ।
चत्वरापणरथ्यासु वनेषूपवनेषु च ॥ १३ ॥
दुष्करं कृतवान् रामः समुद्रे सेतुबन्धनम् ।
अश्रुतं पूर्वकैः कैश्चिद् देवैरपि सदानवैः ॥ १४ ॥
रावणश्च दुराधर्षो हतः सबलवाहनः ।
वानराश्च वशं नीता ऋक्षाश्च सह राक्षसैः ॥ १५ ॥
हत्वा च रावणं संख्ये सीतामाहृत्य राघवः ।
अमर्षं पृष्ठतः कृत्वा स्ववेश्म पुनरानयत् ॥ १६ ॥
कीदृशं हृदये तस्य सीतासम्भोगजं सुखम् ।
अङ्कमारोप्य तु पुरा रावणेन बलाद्धृताम् ॥ १७ ॥
लङ्कामपि पुरानीतामशोकवनिकां गताम् ।
रक्षसां वशमापन्नां कथं रामो न कुत्स्यति ॥ १८ ॥
अस्माकमपि दारेषु सहनीयं भविष्यति ।
यथा हि कुरुते राजा प्रजास्तमनुवर्तते ॥ १९ ॥
एवं बहुविधा वाचो वदन्ति पुरवासिनः ।

नगरेषु च सर्वेषु राजञ्जनपदेषु च ॥ २० ॥
तस्यैवं भाषितं श्रुत्वा राघवः परमार्तवत् ।
उवाच सुहृदः सर्वान् कथमेतद्वदन्तु माम् ॥ २१ ॥
सर्वे तु शिरसा भूमावभिवाद्य प्रणम्य च ।
प्रत्यूचूराघवं दीनमेवमेतन्न संशयः ॥ २२ ॥
श्रुत्वा तु वाक्यं काकुत्स्थः सर्वेषां समुदीरितम्
विसर्जयामास तदा वयस्याञ्छत्रुसूदनः ॥ २३ ॥

## चतुश्चत्वारिंशः सर्गः ।

विसृज्य तु सुहृद्वर्गं बुद्‌ध्या निश्चित्य राघवः ।
समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ॥ १ ॥
शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् ।
भरतं च महाभागं शत्रुघ्नमपराजितम् ॥ २ ॥
रामस्य वचनं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः ।
लक्ष्मणस्य गृहे गत्वा प्रविवेशानिवारितः ॥ ३ ॥
उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः ।
द्रष्टुमिच्छति राजा त्वां गम्यतां तत्र माचिरम् ॥ ४ ॥
बाढमित्येव सौमित्रिः कृत्वा राघवशासनम् ।
प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥ ५ ॥
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात् ।
उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥ ६ ॥
विनयावनतो भूत्वा राजा त्वां द्रष्टुमिच्छति ।
भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ॥ ७ ॥
उत्पपातासनात्तूर्णं पद्भ्यामेव महाबलः ।
दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ॥ ८ ॥
शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह ।
एह्यागच्छ रघुश्रेष्ठ राजा त्वां द्रष्टुमिच्छति ॥ ९ ॥
गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः ।
श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ॥ १० ॥
शिरसा वन्द्य धरणीं प्रययौ यत्र राघवः ।
द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ॥ ११ ॥
निवेदयामास तथा भ्रातॄन् स्वान् समुपस्थितान् ।
कुमारानागताञ्छ्रुत्वा चिन्ताव्याकुलितेन्द्रियः ॥ १२ ॥
अवाङ्मुखो दीनमनाः द्वाःस्थं वचनमब्रवीत् ।

प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ॥ १३ ॥
एतेषु जीवितं मह्यमेते प्राणाः प्रिया मम ।
आज्ञप्तास्तु नरेन्द्रेण कुमाराः शुक्लवाससः ॥ १४ ॥
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः ।
ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ॥ १५ ॥
सन्ध्यागतमिवादित्यं प्रभया परिवर्जितम् ।
वाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ॥
हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते ॥ १६ ॥
ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः ।
तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्तयत् ॥ १७ ॥
तान् परिष्वज्य वाहुभ्यामुत्थाप्य च महावलः ।
आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह ॥ १८ ॥
भवन्तो मम सर्वस्वं भवन्तो जीवितं मम ।
भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः ॥ १९ ॥
भवन्तः कृतशास्त्रार्था वुध्या च परिनिष्ठिताः ।
सम्भूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः ॥ २० ॥
तथा वदति काकुत्स्थे अवधानपरायणाः ।
उद्विग्नमनसः सर्वे किं नु राजाभिधास्यति ॥ २१ ॥

## पञ्चचत्वारिंशः सर्गः ।

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् ।
उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥ १ ॥
सर्वे शृणुत भद्रं वो मा कुरुध्वं मनोऽन्यथा ।
पौराणां मम सीतायां यादृशी वर्तते कथा ॥ २ ॥
पौरापवादः सुमहांस्तथा जनपदस्य च ।
वर्तते मयि वीभत्सा सा मे मर्माणि कृन्तति ॥ ३ ॥
अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् ।
सीतापि सत्कुले जाता जनकानां महात्मनाम् ॥ ४ ॥
जानासि त्वं यथा सौम्य दण्डके विजने वने ।
रावणेन हृता सीता स च विध्वंसितो मया ॥ ५ ॥
तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति ।
अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ॥ ६ ॥
प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा ।
प्रत्यक्षं तव सौमित्रे देवानां हव्यवाहनः ॥ ७ ॥

अपापां मैथिलीमाह वायुश्चाकाशगोचरः ।
चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा ॥ ८ ॥
ऋषीणाञ्चैव सर्वेषामपापां जनकात्मजाम् ।
एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ ॥ ९ ॥
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेदिता ।
अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ॥ १० ॥
ततो गृहीत्वा वैदेहीमयोध्यामहमागतः ।
अयं तु मे महान् वादः शोकश्च हृदि वर्तते ॥ ११ ॥
पौरापवादः सुमहांस्तथा जनपदस्य च ।
अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ॥ १२ ॥
पतत्येवाधमाँल्लोकान्यावच्छब्दः प्रकीर्त्यते ।
अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते ॥ १३ ॥
कीर्त्यर्थं तु समारम्भः सर्वेषां सुमहात्मनाम् ।
अप्यहं जीवितं जह्यां युष्मान् वा पुरुषर्षभाः ॥ १४ ॥
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ।
तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे ॥ १५ ॥
नहि पश्याम्यहं भूतं किञ्चिद् दुःखमतोऽधिकम् ।
श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ॥ १६ ॥
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ।
गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः ॥ १७ ॥
आश्रमो दिव्यसंकाशस्तमसातीरमाश्रितः ।
तत्रैतां विजने देशे विसृज्य रघुनन्दन ॥ १८ ॥
शीघ्रमागच्छ सौमित्रे कुरुष्व वचनं मम ।
न चास्मि प्रतिवक्तव्यः सीतां प्रति कथंचन ॥ १९ ॥
तस्मात्त्वं गच्छ सौमित्रे नात्र कार्या विचारणा ।
अप्रीतिर्हि परा मह्यं त्वय्येतत् प्रतिवारिते ॥ २० ॥
शापिता हि मया यूयं पादाभ्यां जीवितेन च ।
ये मां वाक्यान्तरे ब्रूयुरनुनेतुं कथञ्चन ॥
अहिता नाम ते नित्यं मदभीष्टविघातनात् ॥ २१ ॥
मानयन्तु भवन्तो मां यदि मच्छासने स्थिताः ।
इतोऽद्य नीयतां सीता कुरुष्व वचनं मम ॥ २२ ॥
पूर्वमुक्तोऽहमनया गङ्गातीरेऽहमाश्रमान् ।
पश्येयमिति तस्याश्च कामः संवर्त्यतामयम् ॥ २३ ॥

एवमुक्त्वा तु काकुत्स्थो बाष्पेण पिहितेक्षणः।
संविवेश स धर्मात्मा भ्रातृभिः परिवारितः॥
शोकसंविग्नहृदयो निशश्वास यथा द्विपः॥ २४॥

## षट्चत्वारिंशः सर्गः।

ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः।
सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता॥ १॥
सारथे तुरगान् शीघ्रान् योजयस्व रथोत्तमे।
स्वास्तीर्णं राजवचनात्सीतायाश्चासनं शुभम्॥ २॥
सीता हि राजवचनादाश्रमं पुण्यकर्मणाम्।
मया नेया महर्षीणां शीघ्रमानीयतां रथः॥ ३॥
सुमन्त्रस्तु तथेत्युक्त्वा युक्तं परमवाजिभिः।
रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया॥ ४॥
आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम्।
रथोऽयं समनुप्राप्तो यत्कार्यं क्रियतां प्रभो॥ ५॥
एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः।
प्रविश्य सीतामासाद्य व्याजहार नरर्षभः॥ ६॥
त्वया किलैष नृपतिर्वरं वै याचितः प्रभुः।
नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति॥ ७॥
गङ्गातीरे मया देवि ऋषीणामाश्रमाञ्शुभान्।
शीघ्रं गत्वा तु वैदेहि शासनात्पार्थिवस्य नः॥ ८॥
अरण्ये मुनिभिर्जुष्टे अवनेया भविष्यसि।
एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना॥ ९॥
प्रहर्षमतुलं लेभे गमनं चाप्यरोचयत्।
वासांसि च महार्हाणि रत्नानि विविधानि च॥ १०॥
गृहीत्वा तानि वैदेही गमनायोपचक्रमे।
इमानि मुनिपत्नीनां दास्याम्याभरणान्यहम्॥ ११॥
वस्त्राणि च महार्हाणि धनानि विविधानि च।
सौमित्रिस्तु तथेत्युक्त्वा रथमारोप्य मैथिलीम्॥ १२॥
प्रययौ शीघ्रतुरगं रामस्याज्ञामनुस्मरन्।
अब्रवीच्च तदा सीता लक्ष्मणं लक्ष्मिवर्धनम्॥ १३॥
अशुभानि बहून्येव पश्यामि रघुनन्दन।
नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते॥ १४॥
हृदयं चैव सौमित्रे अस्वस्थमिव लक्षये।

औत्सुक्यं परमं चापि अधृतिश्च परा मम ॥ १५ ॥
शून्यामेव च पश्यामि पृथिवीं पृथुलोचन ।
अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल ॥ १६ ॥
श्वश्रूणां चैव मे वीर सर्वासामविशेषतः ।
पुरे जनपदे चैव कुशलं प्राणिनामपि ॥ १७ ॥
इत्यञ्जलिकृता सीता देवता अभ्ययाचत ।
लक्ष्मणोऽर्थं ततः श्रुत्वा शिरसा वन्द्य मैथिलीम् ॥ १८ ॥
शिवमित्यब्रवीद्धृष्टो हृदयेन विशुष्यता ।
ततो वासमुपागम्य गोमतीतीर आश्रमे ॥ १९ ॥
प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत् ।
योजयस्व रथं शीघ्रमद्य भागीरथीजलम् ॥ २० ॥
शिरसा धारयिष्यामि त्रियम्बक इवौजसा ।
सोऽश्वान् विचारयित्वा तु रथे युक्तान् मनोजवान् ॥ २१ ॥
आरोहस्वेति वैदेहीं सूतः प्राञ्जलिरब्रवीत् ।
सा तु सूतस्य वचनादारुरोह रथोत्तमम् ॥ २२ ॥
सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता ।
आससाद विशालाक्षी गङ्गां पापविनाशिनीम् ॥ २३ ॥
अथार्धदिवसं गत्वा भागीरथ्या जलाशयम् ।
निरीक्ष्य लक्ष्मणो दीनः प्ररुरोद महास्वनः ॥ २४ ॥
सीता तु परमायत्ता दृष्ट्वा लक्ष्मणमातुरम् ।
उवाच वाक्यं धर्मज्ञा किमिदं रुद्यते त्वया ॥ २५ ॥
जाह्नवीतीरमासाद्य चिराभिलषितं मम ।
हर्षकाले किमर्थं मां विषादयसि लक्ष्मण ॥ २६ ॥
नित्यं त्वं रामपार्श्वेषु वर्तसे पुरुषर्षभ ।
कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः ॥ २७ ॥
ममापि दयितो रामो जीवितादपि लक्ष्मण ।
न चाहमेवं शोचामि मैवं त्वं बालिशो भव ॥ २८ ॥
तारयस्व च मां गङ्गां दर्शयस्व च तापसान् ।
ततो मुनिभ्यो वासांसि दास्याम्याभरणानि च ॥ २९ ॥
ततः कृत्वा महर्षीणां यथार्हमभिवादनम् ।
तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ॥ ३० ॥
ममापि पद्मपत्राक्षं सिंहोरस्कं कृशोदरम् ।
त्वरते हि मनो द्रष्टुं रामं रमयतां वरम् ॥ ३१ ॥

तस्यास्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे ।
नाविकानाह्वयामास लक्ष्मणः परवीरहा ॥
इयं च सज्जा नौश्चेति दाशाः प्राञ्जलयोऽब्रुवन् ॥ ३२ ॥
तितीर्षुर्लक्ष्मणो गङ्गां शुभां नावमुपारुहत् ।
गङ्गां संतारयामास लक्ष्मणस्तां समाहितः ॥ ३३ ॥

## सप्तचत्वारिंशः सर्गः ।

अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः ।
आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम् ॥ १ ॥
सुमन्त्रं चैव सरथं स्थीयतामिति लक्ष्मणः ।
उवाच शोकसंतप्तः प्रयाहीति च नाविकम् ॥ २ ॥
ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः ।
उवाच मैथिलीं वाक्यं प्राञ्जलि र्बाष्पसंवृतः ॥ ३ ॥
हृद्गतं मे महच्छल्यं यस्मादार्येण धीमता ।
अस्मिन्निमित्ते वैदेहि लोकस्य वचनीकृतः ॥ ४ ॥
श्रेयो हि मरणं मेऽद्य मृत्युर्वा यत्परं भवेत् ।
नचास्मिन्नीदृशे कार्ये नियोज्यो लोकनिन्दिते ॥ ५ ॥
प्रसीद च न मे पापं कर्त्तुमर्हसि शोभने ।
इत्यञ्जलिकृतो भूमौ निपपात स लक्ष्मणः ॥ ६ ॥
रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः ।
मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥ ७ ॥
किमिदं नावगच्छामि ब्रूहि तत्त्वेन लक्ष्मण ।
पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ॥ ८ ॥
शापितोऽसि नरेन्द्रेण यत्त्वं सन्तापमागतः ।
तद्ब्रूयाः सन्निधौ मह्यमहमाज्ञापयामि ते ॥ ९ ॥
वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनचेतनः ।
अवाङ्मुखो बाष्पगलो वाक्यमेतदुवाच ह ॥ १० ॥
श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे ॥ ११ ॥
रामः संतप्तहृदयो मां निवेद्य गृहं गतः ।
न तानि वचनीयानि मया देवि तवाग्रतः ॥ १२ ॥
यानि राज्ञा हृदि न्यस्तान्यमर्षात् पृष्ठतः कृतः ।
सा त्वं त्यक्ता नृपतिना निर्दोषा मम सन्निधौ ॥ १३ ॥

पौरापवादभीतेन ग्राह्यं देवि न तेऽन्यथा ।
आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि ॥ १४ ॥
राज्ञः शासनमादाय तथैव किल दौर्हृदम् ।
तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ॥ १५ ॥
पुण्यं च रमणीयं च मा विषादं कृथाः शुभे ।
राज्ञो दशरथस्यैव पितुर्मे मुनिपुङ्गवः ॥ १६ ॥
सखा परमको विप्रो वाल्मीकिः सुमहायशाः ।
पादच्छायामुपागम्य सुखमस्य महात्मनः ।
उपवासपरैकाग्रा वस त्वं जनकात्मजे ॥ १७ ॥
पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि ।
श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति ॥ १८ ॥
लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ।
परं विषादमागम्य वैदेही निपपात ह ॥ १ ॥
सा मुहूर्त्तमिवासंज्ञा वाष्पपर्याकुलेक्षणा ।
लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥ २ ॥
मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण ।
धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ॥ ३ ॥
किं नु पापं कृतं पूर्वं को वा दारैर्वियोजितः ।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥ ४ ॥
पुराहमाश्रमे वासं रामपादानुवर्तिनी ।
अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी ॥ ५ ॥
सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता ।
आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥ ६ ॥
किं नु वक्ष्यामि मुनिषु कर्म चासत्कृतं प्रभो ।
कस्मिन् वा कारणे त्यक्ता राघवेण महात्मना ॥ ७ ॥
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले ।
त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥ ८ ॥
यथाज्ञं कुरु सौमित्रे त्यज्य मां दुःखभागिनीम् ।
निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥ ९ ॥
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ।
शिरसा वन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ॥ १० ॥
शिरसाभिनतो ब्रूयाः सर्वासामेव लक्ष्मण ।
वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ॥ ११ ॥

जानासि च यथा शुद्धा सीता तत्त्वेन राघव ।
भक्त्या च परया युक्ता हिता च तव नित्यशः ॥ १२ ॥
अहं त्यक्ता च ते वीर अयशोभीरुणा जने ।
यच्च ते वचनीयं स्यादपवादः समुत्थितः ॥ १३ ॥
मया च परिहर्तव्यं त्वं हि मे परमा गतिः ।
वक्तव्यश्चैव नृपतिर्धर्मेण सुसमाहितः ॥ १४ ॥
यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा ।
परमो ह्येष धर्मस्ते तस्मात्कीर्तिरनुत्तमा ॥ १५ ॥
यत्तु पौरजने राजन् धर्मेण समवाप्नुयात् ।
अहं तु नानुशोचामि स्वशरीरं नरर्षभ ॥ १६ ॥
यथापवादः पौराणां तथैव रघुनन्दन ।
पतिर्हि देवता नार्यः पतिर्बन्धुः पतिर्गुरुः ॥ १७ ॥
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः ।
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः ॥ १८ ॥
निरीक्ष्य माद्य गच्छ त्वमृतुकालातिवर्तिनीम् ।
एवं ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः ॥ १९ ॥
शिरसा वन्द्य धरणीं व्याहर्तुं न शशाक ह ।
प्रदक्षिणं च तां कृत्वा रुदन्नेव महास्वनः ॥ २० ॥
ध्यात्वा मुहूर्त्तं तामाह किं मां वक्ष्यसि शोभने ।
दृष्टपूर्वं न ते रूपं पादौ दृष्टौ तवानघे ॥ २१ ॥
कथमत्र हि पश्यामि रामेण रहितां वने ।
इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् ॥ २२ ॥
आरुरोह पुनर्नावं नाविकं चाभ्यचोदयत् ।
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ॥ २३ ॥
संमूढ इव दुःखेन रथमध्यारुहद्द्रुतम् ।
मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ॥ २४ ॥
चेष्टन्तीं परतीरस्थां लक्ष्मणः प्रययावथ ।
दूरस्थं रथमालोक्य लक्ष्मणं च मुहुर्मुहुः ॥
निरीक्षमाणां तूद्विग्नां सीतां शोकः समाविशत् ॥ २५ ॥
सा दुःखभारावनता यशस्विनी यशोधरा नाथमपश्यती सती ।
रुरोद सा बर्हिणनादिते वने महास्वनं दुःखपरायणा सती ॥२६॥

## एकोनपञ्चाशः सर्गः ।

सीतां तु रुदतीं दृष्ट्वा ते तत्र मुनिदारकाः ।

प्राद्रवन्यत्र भगवानास्ते वाल्मीकिरुग्रधीः ॥ १ ॥
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये ।
सर्वं निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥ २ ॥
अदृष्टपूर्वा भगवन् कस्याप्येषा महात्मनः ।
पत्नी श्रीरिव संमोहाद्विरौति विकृतानना ॥ ३ ॥
भगवन् साधु पश्येस्त्वं देवतामिव खाच्च्युताम् ।
नद्यास्तु तीरे भगवन् वरस्त्री कापि दुःखिता ॥ ४ ॥
दृष्टास्माभिः प्ररुदिता दृढं शोकपरायणा ।
अनर्हा दुःखशोकाभ्यामेका दीना अनाथवत् ॥ ५ ॥
तां सीतां शोकभारार्तां वाल्मीकिर्मुनिपुङ्गवः ।
उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ॥ ६ ॥
स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ।
जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ॥ ७ ॥
आयान्ती चासि विज्ञाता मया धर्मसमाधिना ।
कारणं चैव सर्वं मे हृदयेनोपलक्षितम् ॥ ८ ॥
तव चैव महाभागे विदितं मम तत्त्वतः ।
सर्वं च विदितं मह्यं त्रैलोक्ये यद्धि वर्तते ॥ ९ ॥
अपापां वेद्मि सीते ते तपोलब्धेन चक्षुषा ।
विस्रब्धा भव वैदेहि साम्प्रतं मयि वर्तसे ॥ १० ॥
आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिताः ।
तास्त्वां वत्से यथा वत्सं पालयिष्यन्ति नित्यशः ॥ ११ ॥
इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा ।
यथा स्वगृहमभ्येत्य विषादं चैव मा कृथाः ॥ १२ ॥
श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम् ।
शिरसा वन्द्य चरणौ तथेत्याह कृताञ्जलिः ॥ १३ ॥
तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात् ।
तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः ।
उपाजग्मुर्मुदा युक्ता वचनं चेदमब्रुवन् ॥ १४ ॥
स्वागतं ते मुनिश्रेष्ठ चिरस्यागमनं च ते ।
अभिवादयामस्त्वां सर्वा उच्यतां किं च कुर्महे ॥ १५ ॥
तासां तद्वचनं श्रुत्वा वाल्मीकिरिदमब्रवीत् ।
सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ॥ १६ ॥
स्नुषा दशरथस्यैषा जनकस्य सुता सती ।
अपापा पतिना त्यक्ता परिपाल्या मया सदा ॥ १७ ॥

इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि ।
गौरवान्मम वाक्याच्च पूज्या वोऽस्तु विशेषतः ॥ १८ ॥
मुहुर्मुहुश्च वैदेहीं परिदाय महायशाः ।
स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥ १९ ॥

त्रिनवतितमः सर्गः ।

वर्तमाने तथाभूते यज्ञे च परमाद्भुते ।
सशिष्य आजगामाशु वाल्मीकिर्भगवानृषिः ॥ १ ॥
...... ...... ......
स शिष्यावब्रवीद्हृष्टौ युवां गत्वा समाहितौ ।
कृत्स्नं रामायणं काव्यं गायतां परया मुदा ॥ ४ ॥
दिवसे विंशतिः सर्गा गेया मधुरया गिरा ।
प्रमाणैर्बहुभिस्तत्र यथोद्दिष्टं मया पुरा ॥ १० ॥
यदि पृच्छेत्स काकुत्स्थो युवां कस्येति दारकौ ।
वाल्मीकेरथ शिष्यौ द्वौ ब्रूतमेवं नराधिपम् ॥ १२ ॥
सन्दिष्टौ मुनिना तेन तावुभौ मैथिलीसुतौ ।
तथैव करवावेति निर्जग्मतुररिन्दमौ ॥ १३ ॥

चतुर्नवतितमः सर्गः ।

तौ रजन्यां प्रभातायां स्नातौ हुतहुताशनौ ।
यथोक्तमृषिणा पूर्वं सर्वं तत्रोपगायताम् ॥ १ ॥
गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ।
न च तृप्तिं ययुः सर्वे श्रोतारो गेयसम्पदा ॥ २ ॥
तथा तयोः प्रब्रुवतोः कौतूहलसमन्विताः ।
श्रोतारश्चैव रामश्च सर्व एव सुविस्मिताः ॥ ३ ॥

पञ्चनवतितमः सर्गः ।

तस्मिन् गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥ १ ॥
दूताञ्शुद्धसमाचारानाहूयात्ममनीषया ।
मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिके ॥ २ ॥
यदि शुद्धसमाचारा यदि वा वीतकल्मषा ।
करोत्विहात्मनःशुद्धिमनुमान्य महामुनिम् ॥ ३ ॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ।
प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥ ४ ॥

श्वःप्रभाते तु शपथं मैथिली जनकात्मजा ।
करोतु परिषन्मध्ये शोधनार्थं ममैव च ॥ ५ ॥
तेषां तद्भाषितं श्रुत्वा रामस्य च मनोगतम् ।
विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥ ६ ॥
एवं भवतु भद्रं वो यथा वदति राघवः ।
तथा करिष्यते सीता दैवतं हि पतिः स्त्रियाः ॥ ७ ॥

## षण्णवतितमः सर्गः ।

तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ।
कृताञ्जलिर्बाष्पकला कृत्वा रामं मनोगतम् ॥ १ ॥
तां दृष्ट्वा श्रुतिमायान्तीं ब्रह्माणमनुगामिनीम् ।
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥ २ ॥
ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ।
सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥ ३ ॥
इयं दाशरथे सीता सुव्रता धर्मचारिणी ।
अपवादात्परित्यक्ता ममाश्रमसमीपतः ॥ ४ ॥
लोकापवादभीतस्य तव राम महाव्रत ।
प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि ॥ ५ ॥
इमौ तु जानकीपुत्रावुभौ च यमजातकौ ।
सुतौ तवैव दुर्धर्षौ सत्यमेतद् ब्रवीमि ते ॥ ६ ॥

## सप्तनवतितमः सर्गः ।

वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ।
प्राञ्जलिर्जगतो मध्ये दृष्ट्वा तां वरवर्णिनीम् ॥ १ ॥
एवमेतन्महाभाग यथा वदसि धर्मवित् ।
प्रत्ययस्तु मम ब्रह्मन् तव वाक्यैरकल्मषैः ॥ २ ॥
प्रत्ययश्च पुरा वृत्तो वैदेह्याः सुरसन्निधौ ।
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥ ३ ॥
लोकापवादो बलवान् येन त्यक्ता हि मैथिली ।
सेयं लोकभयाद्ब्रह्मन्नपापेत्यभिजानता ॥
परित्यक्ता मया सीता तद्भवान् क्षन्तुमर्हति ॥ ४ ॥
जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ।
शुद्धायां जगतो मध्ये मैथिल्यां प्रीतिरस्तु मे ॥ ५ ॥
सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अब्रवीत्प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥ ६ ॥

यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥ ७ ॥
तथा शपन्त्यां वैदेह्यां प्रादुरासीत्तदद्भुतम् ।
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥ ८ ॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम् ।
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥ ९ ॥
तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥ १० ॥

अष्टनवतितमः सर्गः ।

रसातलं प्रविष्टायां वैदेह्यां सर्ववानराः ।
चुक्रुशुः साधु साध्वीति मुनयो रामसन्निधौ ॥ १ ॥
दण्डकाष्ठमवष्टभ्य बाष्पव्याकुलितेन्द्रियः ।
अवाक्शिरा दीनमना रामो ह्यासी त्सुदुःखितः ॥ २ ॥
स रुदित्वा चिरं कालं बहुशो बाष्पमुत्सृजन् ।
क्रोधशोकसमाविष्टो रामो वचनमब्रवीत् ॥ ३ ॥
अभूतपूर्वं शोकं मे मनः स्प्रष्टुमिवेच्छति ।
पश्यतो मे यथा नष्टा सीता श्रीरिव रूपिणी ॥ ४ ॥
वसुधे देवि भवति सीता निर्यात्यतां मम ।
दर्शयिष्यामि वा रोषं यथा मामवगच्छसि ॥ ५ ॥
एवं ब्रुवाणे काकुत्स्थे क्रोधशोकसमन्विते ।
ब्रह्मा सुरगणैः सार्धमुवाच रघुनन्दनम् ॥ ६ ॥
राम राम न सन्तापं कर्त्तुमर्हसि सुव्रत ।
स्वर्गे ते सङ्गमो भूयो भविष्यति न संशयः ॥ ७ ॥

२ महाभारते ।

वनपर्वणि द्विनवत्यधिकद्विशततमोऽध्यायः ।

ततः सीतां पुरस्कृत्य रामः सौमित्रिणा सह ।
सुग्रीवप्रमुखैश्चैव सहितः सर्ववानरैः ॥ १ ॥
विधाय रक्षां लङ्कायां बिभीषणपुरस्कृतः ।
संततार पुनस्तेन सेतुना मकरालयम् ॥ २ ॥
सुग्रीवसहितो रामः किष्किन्धां पुनरागमत् ।
अङ्गदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ॥ ३ ॥
अयोध्यां स समासाद्य पुरीं राष्ट्रपतिस्ततः ।

भरताय हनूमन्तं दूतं प्रास्थापयद् द्रुतम् ॥ ४ ॥
ततो भरतशत्रुघ्नौ समेतौ गुरुणा तदा ।
वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः ॥ ५ ॥
तस्मै तद्भरतो राज्यमागतायाति सत्कृतम् ।
न्यासं निर्यातयामास युक्तः परमया मुदा ॥ ६ ॥
सोऽभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम् ।
विभीषणं च पौलस्त्यमन्वजानाद् गृहान् प्रति ॥ ७ ॥
ततो देवर्षिसहितः सरितं गोमतीमनु ।
शताश्वमेधानाजह्रे जारूथ्यान् स निरर्गलान् ॥ ८ ॥

३ रघुवंशे ।

चतुर्दशः सर्गः ।

स पौरकार्याणि समीक्ष्य काले रेमे विदेहाधिपतेर्दुहित्रा ।
उपस्थितश्चारुवपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥ २४ ॥
तामङ्कमारोप्य कृशाङ्गयष्टिं वर्णान्तराक्रान्तपयोधराग्राम् ।
विलज्जमानां रहसि प्रतीतः पप्रच्छ रामां रमणोऽभिलाषम् ॥ २७ ॥
सा दष्टनीवारबलीनि हिंस्रैः सम्बद्धवैखानसकन्यकानि ।
इयेष भूयः कुशवन्ति गन्तुं भागीरथीतीरतपोवनानि ॥ २८ ॥
तस्यै प्रतिश्रुत्य रघुप्रवीरस्तदीप्सितं पार्श्वचरानुयातः ।
आलोकयिष्यन्मुदितामयोध्यां प्रासादमभ्रंलिहमारुरोह ॥ २९ ॥
स किंवदन्तीं वदतां पुरोगः स्ववृत्तमुद्दिश्य विशुद्धवृत्तः ।
सर्वाधिराजोपभुजोऽपसर्पं पप्रच्छ भद्रं विजितारिभद्रः ॥ ३१ ॥
निर्बन्धपृष्टः स जगाद सर्वं स्तुवन्ति पौराश्चरितं त्वदीयम् ।
अन्यत्र रक्षोभवनोषितायाः परिग्रहान्मानवदेव देव्याः ॥ ३२ ॥
कलत्रनिन्दागुरुणा किलैवमभ्याहतं कीर्तिविपर्ययेण ।
अयोघनेनाय इवाभितप्तं वैदेहिबन्धोर्हृदयं विदद्रे ॥ ३३ ॥
किमात्मनिर्वादकथामुपेक्षे जायामदोषामुत संत्यजामि ।
इत्येकपक्षाश्रयविक्लवत्वादासीत्स दोलाचलचित्तवृत्तिः ॥ ३४ ॥
निश्चित्य चानन्यनिवृत्ति वाच्यं त्यागेन पत्न्याः परिमार्ष्टुमैच्छत् ।
अपि स्वदेहात् किमुतेन्द्रियार्थाद्यशोधनानां हि यशो गरीयः ॥३५॥
स सन्निपात्यावरजान् हतौजास्तद्विक्रियादर्शनलुप्तहर्षान् ।
कौलीनमात्माश्रयमाचचक्षे तेभ्यः पुनश्चेदमुवाच वाक्यम् ॥ ३६ ॥
राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम् ।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य ॥ ३७ ॥

पौरेषु सोऽहं बहुलीभवन्तमपां तरङ्गेष्विव तैलबिन्दुम् ।
सोढुं न तत्पूर्वमवर्णमीशे आलानिकं स्थाणुमिव द्विपेन्द्रः ॥ ३८ ॥
तस्यापनोदाय फलप्रवृत्तावुपस्थितायामपि निर्व्यपेक्षः ।
त्यक्ष्यामि वैदेहसुतां पुरस्तात्समुद्रनेमिं पितुराज्ञयेव ॥ ३९ ॥
अवैमि चैनामनघेति किन्तु लोकापवादो बलवान्मतो मे ।
छाया हि भूमेः शशिनो मलत्वेनारोपिता शुद्धिमतः प्रजाभिः ॥ ४० ॥
रक्षोवधान्तो न च मे प्रयासो व्यर्थः स वैरप्रतिमोचनाय ।
अमर्षणः शोणितकाङ्क्षया किं पदा स्पृशन्तं दशति द्विजिह्वः ॥ ४१ ॥
तदेष सर्गः करुणार्द्रचित्तैर्न मे भवद्भिः प्रतिषेधनीयः ।
यद्यर्थिता निर्हृतवाच्यशल्यान् प्राणान्मया धारयितुं चिरं वः ॥ ४२ ॥
इत्युक्तवन्तं जनकात्मजायां नितान्तरूक्षाभिनिवेशमीशम् ।
न कश्चन भ्रातृषु तेषु शक्तो निषेद्धुमासीदनुमोदितुं वा ॥ ४३ ॥
स लक्ष्मणं लक्ष्मणपूर्वजन्मा विलोक्य लोकत्रयगीतकीर्तिः ।
सौम्येति चाभाष्य यथार्थभाषी स्थितं निदेशे पृथगादिदेश ॥ ४४ ॥
प्रजावती दोहदशंसिनी ते तपोवनेषु स्पृहयालुरेव ।
स त्वं रथी तद्व्यपदेशनेयां प्रापय्य वाल्मीकिपदं त्यजैनाम् ॥ ४५ ॥
स शुश्रुवान्मातरि भार्गवेण पितुर्नियोगात्प्रहृतं द्विषद्वत् ।
प्रत्यग्रहीदग्रजशासनं तदाज्ञा गुरूणां ह्यविचारणीया ॥ ४६ ॥
अथानुकूलश्रवणप्रतीतामत्रस्नुभिर्युक्तधुरं तुरङ्गैः ।
रथं सुमन्त्रप्रतिपन्नरश्मिमारोप्य वैदेहसुतां प्रतस्थे ॥ ४७ ॥
सा नीयमाना रुचिरान्प्रदेशान् प्रियंकरो मे प्रिय इत्यनन्दत् ।
नाबुद्धकल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम् ॥ १० ॥
जुगूह तस्याः पथि लक्ष्मणो यत्सव्येतरेण स्फुरता तदक्ष्णा ।
आख्यातमस्यै गुरुभावि दुःखमत्यन्तलुप्तप्रियदर्शनेन ॥ ११ ॥
सा दुर्निमित्तोपगताद्विषादात्सद्यः परिम्लानमुखारविन्दा ।
राज्ञः शिवं सावरजस्य भूयादित्याशशंसे करणैरबाह्यैः ॥ १२ ॥
गुरोर्नियोगाद्वनितां वनान्ते साध्वीं सुमित्रातनयो विहास्यन् ।
अवार्यतेवोत्थितवीचिहस्तैर्जह्नोर्दुहित्रा स्थितया पुरस्तात् ॥ १३ ॥
रथात्स यन्त्रा निगृहीतवाहात्तां भ्रातृजायां पुलिनेऽवतार्य ।
गंगां निषादाहृतनौविशेषस्ततार संधामिव सत्यसंधः ॥ १४ ॥
अथ व्यवस्थापितवाक् कथंचित्सौमित्रिरन्तर्गतबाष्पकण्ठः ।
औत्पातिकं मेघ इवाश्मवर्षं महीपतेः शासनमुज्जगार ॥ १५ ॥
ततोऽभिषंगानिलविप्रविद्धा प्रभ्रश्यमानाभरणप्रसूना ।

स्वमूर्तिलाभप्रकृतिं धरित्रीं लतेव सीता सहसा जगाम ॥ १६ ॥
सा लुप्तसंज्ञा न विवेद दुःखं प्रत्यागतासुः समतप्यतान्तः ।
तस्याः सुमित्रात्मजयत्नलब्धो मोहादभूत्कष्टतरः प्रबोधः ॥ १७ ॥
न चावदद्भर्तुरवर्णमार्या निराकरिष्णोर्वृजिनादृतेऽपि ।
आत्मानमेव स्थिरदुःखभाजं पुनः पुनर्दुष्कृतिनं निनिन्द ॥ १८ ॥
आश्वास्य रामावरजः सतीं तामाख्यातवाल्मीकिनिकेतमार्गः ।
निघ्नस्य मे भर्तृनिदेशरौक्ष्यं देवि क्षमस्वेति बभूव नम्रः ॥ १६ ॥
सीता तमुत्थाप्य जगाद वाक्यं प्रीतास्मि ते सौम्य चिराय जीव ।
बिडौजसा विष्णुरिवाग्रजेन भ्रात्रा यदित्थं परवानसि त्वम् ॥ २० ॥
श्वश्रूजनं सर्वमनुक्रमेण विज्ञापय प्रापितमत्प्रणामः ।
प्रजानिषेकं मयि वर्तमानं सूनोरनुध्यायत चेतसेति ॥ २१ ॥
वाच्यस्त्वया मद्वचनात्स राजा वह्नौ विशुद्धामपि यत्समक्षम् ।
मां लोकवादश्रवणादहासीः श्रुतस्य किं तत्सदृशं कुलस्य ॥ २२ ॥
कल्याणबुद्धेरथवा तवायं न कामचारो मयि शंकनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥ २३ ॥
उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः ।
तदास्पदं प्राप्य तयातिरोषात्सोढास्मि न त्वद्भवने वसन्ती ॥ २४ ॥
निशाचरोपप्लुतभर्तृकाणां तपस्विनीनां भवतः प्रसादात् ।
भूत्वा शरण्या शरणार्थमन्यं कथं प्रपत्स्ये त्वयि दीप्यमाने ॥ २५ ॥
किं वा तवात्यन्तवियोगमोघे कुर्यामुपेक्षां हतजीवितेऽस्मिन् ।
स्याद्रक्षणीयं यदि मे न तेजस्त्वदीयमन्तर्गतमन्तरायः ॥ २६ ॥
साहं तपः सूर्यनिविष्टदृष्टिरूर्ध्वं प्रसूतेश्चरितुं यतिष्ये ।
भूयो यथा मे जननान्तरेऽपि त्वमेव भर्ता न च विप्रयोगः ॥ २७ ॥
नृपस्य वर्णाश्रमपालनं यत्स एव धर्मो मनुना प्रणीतः ।
निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्यमवेक्षणीया ॥ २८ ॥
तथेति तस्याः प्रतिगृह्य वाचं रामानुजे दृष्टिपथं व्यतीते ।
सा मुक्तकण्ठं व्यसनातिभाराच्चक्रन्द विग्ना कुररीव भूयः ॥ २६ ॥
नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान् विजहुर्हरिण्यः ।
तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि ॥ ३० ॥
तामभ्यगच्छद्रुदितानुसारी मुनिः कुशेध्माहरणाय यातः ।
निषादविद्धाण्डजदर्शनोत्थः श्लोकत्वमापद्यत यस्य शोकः ॥ ३१ ॥
तमश्रुनेत्रावरणं प्रमृज्य सीता विलापाद्विरता ववन्दे ।
तस्यै मुनिर्दोहदलिंगदर्शी दाश्वान् सुपुत्राशिषमित्युवाच ॥ ३२ ॥

जाने विसृष्टां प्रणिधानतस्त्वां मिथ्यापवादक्षुभितेन भर्त्रा ।
तन्मा व्यथिष्ठा विषयान्तरस्थं प्राप्तासि वैदेहि पितुर्निकेतम् ॥ ३३ ॥
उत्खातलोकत्रयकण्टकेऽपि सत्यप्रतिज्ञेऽप्यविकत्थनेऽपि ।
त्वां प्रत्यकस्मात्कलुषप्रवृत्तावस्त्येव मन्युर्भरताग्रजे मे ॥ ३४ ॥
तवोरुकीर्तिः श्वशुरः सखा मे सतांभवोच्छेदकरः पिता ते ।
धुरिस्थिता त्वं पतिदेवतानां किं तन्न येनासि ममानुकम्प्या ॥ ३५ ॥
तपस्विसंसर्गविनीतसत्त्वे तपोवने वीतभया वसास्मिन् ।
इतो भविष्यत्यनघप्रसूतेरपत्यसंस्कारमयो विधिस्ते ॥ ३६ ॥
अनुग्रहप्रत्यभिनन्दिनीं तां वाल्मीकिरादाय दयार्द्रचेताः ।
सायं मृगाध्यासितवेदिपार्श्वं स्वमाश्रमं शान्तमृगं निनाय ॥ ३७ ॥
तत्राभिषेकप्रयता वसन्ती प्रयुक्तपूजाविधिनातिथिभ्यः ।
वन्येन सा वल्कलिनी शरीरं पत्युःप्रजासंततये बभार ॥ ३८ ॥
अपि प्रभुःसानुशयोऽधुना स्यात्किमुत्सुकः शक्रजितोऽपि हन्ता ।
शशंस सीतापरिदेवनान्तंमनुष्ठितं शासनमग्रजाय ॥ ३९ ॥
बभूव रामः सहसा सबाष्पस्तुसारवर्षीव सहस्यचन्द्रः ।
कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः ॥ ४० ॥
निगृह्य शोकं स्वयमेव धीमान् वर्णाश्रमावेक्षणजागरूकरः ।
स भ्रातृसाधारणभोगमृद्धं राज्यं रजोरिक्तमनाः शशास ॥ ४१ ॥

सीतां हित्वा दशमुखरिपुर्नोपयेमे यदन्यां
तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार ।
वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ॥ ४२ ॥

## पञ्चदशः सर्गः ।

सखा दशरथस्यापि जनकस्य च मन्त्रकृत् ।
सञ्चस्कारोभयप्रीत्या मैथिलेयौ यथाविधि ॥ ३१ ॥
स तौ कुशलवोन्मृष्टगर्भक्लेदौ तदाख्यया ।
कविः कुशललवावेव चकार किल नामतः ॥ ३२ ॥
साङ्गं च वेदमध्याप्य किञ्चिदुत्क्रान्तशैशवौ ।
स्वकृतिं गापयामास कविप्रथमपद्धतिम् ॥ ३३ ॥
रामस्य मधुरं वृत्तं गायन्तौ मातुरग्रतः ।
तद्वियोगव्यथां किञ्चिच्छिथिलीचक्रतुः सुतौ ॥ ३४ ॥

...... ...... ...... ......

अथ प्राचेतसोपज्ञं रामायणमितस्ततः ।

मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ ॥ ६३ ॥
वृत्तं रामस्य वाल्मीकेः कृतिस्तौ किन्नरस्वनौ ।
किं तद्येन मनो हर्तुमलं स्यातां न शृण्वताम् ॥ ६४ ॥
रूपे गीते च माधुर्यं तयोस्तज्ज्ञैर्निवेदितम् ।
ददर्श सानुजो रामः शुश्राव च कुतूहली ॥ ६५ ॥
तद्गीतश्रवणैकाग्रा संसदश्रुमुखी बभौ ।
हिमनिष्यन्दिनी प्रातर्निर्वातेव वनस्थली ॥ ६६ ॥
वयोवेषविसंवादि रामस्य च तयोस्तदा ।
जनता प्रेक्ष्य सादृश्यं नाक्षिकम्पं व्यतिष्ठत ॥ ६७ ॥
उभयोर्न तथा लोकः प्रावीण्येन विसिष्मिये ।
नृपतेः प्रीतिदानेषु वीतस्पृहतया यथा ॥ ६८ ॥
गेये को नु विनेता वां कस्य चेयं कृतिः कवेः ।
इति राज्ञा स्वयं पृष्टौ तौ वाल्मीकिमशंसताम् ॥ ६९ ॥
अथ सावरजो रामः प्राचेतसमुपेयिवान् ।
ऊरीकृत्यात्मनो देहं राज्यमस्मै न्यवेदयत् ॥ ७० ॥
स तावाख्याय रामाय मैथिलेयौ तदात्मजौ ।
कविः कारुणिको वव्रे सीतायाः संपरिग्रहम् ॥ ७१ ॥
तात शुद्धा समक्षं नः स्नुषा ते जातवेदसि ।
दौरात्म्याद्रक्षसस्तां तु नात्रत्याः श्रद्दधुः प्रजाः ॥ ७२ ॥
ताः स्वचारित्रमुद्दिश्य प्रत्याययतु मैथिली ।
ततः पुत्रवतीमेनां प्रतिपत्स्ये त्वदाज्ञया ॥ ७३ ॥
इति प्रतिश्रुते राज्ञा जानकीमाश्रमान्मुनिः।
शिष्यैरानाययामास स्वसिद्धिं नियमैरिव ॥ ७४ ॥
अन्येद्युरथ काकुत्स्थः संनिपात्य पुरौकसः ।
कविमाह्वाययामास प्रस्तुतप्रतिपत्तये ॥ ७५ ॥
स्वरसंस्कारवत्यासौ पुत्राभ्यामथ सीतया ।
ऋचेवोदर्चिषं सूर्यं रामं मुनिरुपस्थितः ॥ ७६ ॥
काषायपरिवीतेन स्वपदार्पित चक्षुषा ।
अन्वमीयत शुद्धेति शान्तेन वपुषैव सा ॥ ७७ ॥
जनास्तदालोकपंथात्प्रातिसंहृतचक्षुषः ।
तस्थुस्तेऽवाङ्मुखाः सर्वे फलिता इव शालयः ॥ ७८ ॥
तां दृष्टिविषये भर्तुर्मुनिरास्थितविष्टरः ।
कुरु निःसंशयं वत्से स्ववृत्ते लोकमित्यशात् ॥ ७९ ॥

अथ वाल्मीकि शिष्येण पुण्यमावर्जितं पयः ।
आचम्योदीरयामास सीता सत्यां सरस्वतीम् ॥ ८० ॥
वाङ्मनः कर्मभिः पत्यौ व्यभिचारो यथा न मे ।
तथा विश्वम्भरे देवि मामन्तर्धातुमर्हसि ॥ ८१ ॥
एवमुक्ते तया साध्व्या रन्ध्रः सद्योऽभवाद् भुवः ।
शातह्रदमिव ज्योतिः प्रभामण्डलमुद्ययौ ॥ ८२ ॥
तत्र नागफणोत्क्षिप्तसिंहासन निषेदुषी ।
समुद्ररशना साक्षात्प्रादुरासीद्वसुन्धरा ॥ ८३ ॥
सा सीतामङ्कमारोप्य भर्तृप्रणिहितेक्षणाम् ।
मामेति व्याहरत्येव तस्मिन् पातालमभ्यगात् ॥ ८४ ॥
धरायां तस्य संरम्भं सीताप्रत्यर्पणैषिणः ।
गुरुर्विधिवलापेक्षी शमयामास धन्विनः ॥ ८५ ॥
ऋषीन्विसृज्य यज्ञान्ते सुहृदश्च पुरस्कृतान् ।
रामः सीतागतं स्नेहं विदधे तदपत्ययोः ॥ ८६ ॥

## ४—रामायणमञ्जरी ।

ततः सीतामुखाम्भोजमधुपो रघुनन्दनः ।
निनाय मदनोदग्रसम्भोगसुभगाः क्षपाः ॥ १ ॥
ज्योत्स्नास्मिते हर्म्यतले कानने कुसुमस्मिते ।
हारस्मिते स्तनतटे लेभे स सुकृती रतिम् ॥ २ ॥
... ... ... ...

श्रुत्वैतत्पुष्पके पूर्वं प्रयाते स्वेच्छया दिवम् ।
विवेशाशोकवनिकां राघवो जानकीसखः ॥ ३ ॥
तत्र लावण्यनलिनीं तां फुल्लकमलाननाम् ।
प्रीतिं रामश्चिरं लेभे नलिनीं च विलोकयन् ॥ ४ ॥
स सीतावदनौपम्यप्रीत्या निक्षिप्य लोचने ।
मुहुः शशिनि पद्मेव जगन्मेने प्रियामयम् ॥ ५ ॥
ससम्भोगमुखाम्भोजसनाथीकृतमन्मथः ।
विललास विलासाङ्के शशाङ्कवदनासखः ॥ ६ ॥
स कदाचित्प्रियतमामुवाच प्रेमनिर्भरः ।
पिबन्निव दृशा तस्या वदनं मदनामृतम् ॥ ७ ॥
आपाण्डुरमुखे सुभ्रु सचन्द्रेव विभावरी ।
दृश्यसेऽभिनवारम्भगर्भाविर्भूतलक्षणा ॥ ८ ॥
किमयं ते प्रियं देवि करोतु प्रणयी जनः ।

न दुर्लभं जगत्यस्मिन्यत्र ते रमते मतिः ॥ ९ ॥
इति प्रियेण प्रणयात्पृष्टा जनकनन्दिनी ।
तमुवाच स्मितमुखी सृजन्तीं चन्द्रिका पुरः ॥ १० ॥
पुण्यानि मुनिसेव्यानि काननानि त्वया सह ।
चिरं स्मृतानि मे द्रष्टुं क्षणमुत्कण्ठते मनः ॥ ११ ॥
इति कान्तावचः श्रुत्वा तां तथेत्यभिधाय च ।
अन्तःपुरचरो रामः कामं निर्वृतिमाप्तवान् ॥ १२ ॥
अथ कक्षान्तरं रामो गत्वान्तःपुरमन्दिरम् ।
नानाकथाभिश्चित्राभिश्चिरं तस्थौ सुहृद्वृतः ॥ १३ ॥
विजयो मधुमान् भद्रः कश्यपः पिङ्गलः कुरुः ।
सुराजको वज्रदन्तो मागधश्च मनीषिणः ॥ १४ ॥
नवैते नन्दसुहृदो रामस्य हृदयाप्रियाः ।
परिहासकथाशीलैस्तैः स गोष्ठीरतोऽभवत् ॥ १५ ॥
ततः कथान्ते पप्रच्छ भद्रं राजा यशः प्रिय ।
पुरे जनपदे वास्मिन् प्रवादः कीदृशो मम ॥ १६ ॥
किमाहुर्मे शुभं लोके किमाहुरशुभं जनाः ।
ज्ञात्वा मनोभयं कुर्यान्निर्दोषं गुणसंग्रहम् ॥ १७ ॥
गुणदोषं स्फुटं वाच्यं सुहृद्भिः सर्वथा जनः ।
छन्नदोषं गुणं वक्ति यः स मित्रमुखो रिपुः ॥ १८ ॥
इत्युक्ते रघुनाथेन भद्रः प्राञ्जलिरब्रवीत् ।
राजन्नानाविधो लोकः परनिन्दास्तुतिव्रतः ॥ १९ ॥
शुभाशुभकथां कामं जनः सूर्योऽपि भाषते ।
शक्तिर्दशाननवधे कथमत्यद्भुतं तव ॥ २० ॥
जनः सीतापहारे च शीलशङ्कासहिष्णुताम् ।
अनाश्चर्यद्वयं लोके राघवस्यैव दृश्यते ॥ २१ ॥
क्षमा कलत्रदोषे च सेतुबन्धश्च सागरे ।
वयमप्यधुना सर्वे दारदोषान् सहामहे ॥ २२ ॥
महाजनानुयायिन्यः प्रायेण सततं प्रजाः ।
इति प्रवादो लोकस्य मिथ्यादोषैकदर्शिनः ।
मिथः कथासु रथ्यासु गृहेषूपवनेषु च ॥ २३ ॥
इत्येतदशनिस्पर्शं वचो निपतितं हृदि ।
आकर्ण्य राघवो दुःखाच्चक्रारूढ इवाभवत् ॥ २४ ॥
स तान् विसृज्य सुहृदश्चिन्तासन्तप्तमानसः ।

द्वाःस्थं विसृज्यानुमताननिनाय निजानुजान् ॥ २५ ॥

इति जनापवादः ।

ततो भरतसौमित्रिशत्रुघ्नास्तूर्णमागताः ।
प्रविश्य रामं ददृशुः प्रणामनतशेखराः ॥ २६ ॥
तं वाष्पपूर्णनयनं शोकम्लानमुखाम्बुजम् ।
ते दृष्ट्वा सम्भ्रमोद्भ्रान्ता बभूवुः कम्पिताशयाः ॥ २७ ॥
सहसा हारिते हर्षे वीक्ष्यमाण इवावनौ ।
उपविश्य बभूवुस्ते चिन्ताशान्तमुखत्विषः ॥ २८ ॥
चिरं ध्यात्वाप्यपश्यन्तस्ते भ्रातुः शोककारणम् ।
किं वक्ष्यतीति निष्पन्दं पप्रच्छुः स्वमिवाशयम् ॥ २९ ॥
तानुवाच ततो रामः शोकसन्तप्तमानसः ।
अयं मे हृदये सक्तः शोकशङ्कुरिवापरः ॥ ३० ॥
दारापवादसंजातो यत्काकुत्स्थकुलेन वा ।
धर्मो जानाति वैदेहीमन्तरात्मा ममैव या ॥ ३१ ॥
शीलं न वेत्ति कस्तस्या लोको निर्दोषनिन्दकः ।
अस्मिन् सीतापवादाग्नौ पतितस्य ममाधुना ॥ ३२ ॥
न जाने तापशमनी विद्यते का प्रतिक्रिया ।
श्रूयते पुरुषस्येह यावत्कीर्तिरविप्लुता ॥ ३३ ॥
तावत्स जीवति परः श्वासैरायास्यते जनः ।
अकीर्तिमलिनः पुंसः पुत्रपौत्रास्त्रपातिनी ॥ ३४ ॥
नरकाग्नेः स्थितस्याग्रे धूमलेखेव जायते ।
धिक्तं भ्राम्यति यस्योग्रपापपङ्ककलङ्किता ॥ ३५ ॥
उन्मत्तेव जगत्यस्मिन्नपवादपिशाचिका ।
अपि प्राणाधिका सीता त्यज्यते तृणवन्मया ॥ ३६ ॥
न तु कीर्तिं सहे लोके शतांशेनापि खण्डिताम् ।
दुःखं वो यदि मद्दुःखे भक्तिर्यदि परा मयि ॥ ३७ ॥
तद्भवद्भिर्वचः कार्यं देयं प्रतिवचो न मे ।
ईप्सितं प्रतिषेधाय ब्रूयाद्योऽनुनयं मम ॥ ३८ ॥
शापितः समयैवाग्रे भुजाभ्यां जीवितेन च ।
सुमन्त्राधिष्ठितं प्रातः सौमित्रे यात्रिकं रथम् ॥ ३९ ॥
सीतामरोप्य गंगायाः पारे पारे परित्यज ।
जानकीं विजनेऽरण्ये वाल्मीकेराश्रमे मुनेः ॥ ४० ॥
उत्सृज्य तूर्णमागच्छ यदलङ्घ्यं वचो मम ।
अभिप्रायश्च वैदेह्यास्तपोवनविलोकने ॥ ४१ ॥

तस्मात्त्वाप्रियाख्यानवैक्लव्यं न भविष्यति ।
इत्युक्त्वा राघवो रात्रिं निनायाब्दशतोपमाम् ॥ ४२ ॥
न बाला न प्रकुपितः कुञ्जरेन्द्र इव श्वसन् ।
प्राप्ताः सुमन्त्रसंयुक्तं रथमादाय लक्ष्मणः ॥ ४३ ॥
उवाच सीतामभ्येत्य गूढशोकानलाकुलः ।
अनुजानाति देवस्त्वां तपोवनविलोकने ॥ ४४ ॥
आदेश इव शीघ्रस्ते पत्युः सज्जीकृतो रथः ।
एतदाकर्ण्य वैदेही हर्षनिर्भरमानसा ॥ ४५ ॥
जग्राहाभरणं भूरि प्रदातुं मुनियोषिताम् ।
ततः समारुह्य रथं व्रजन्ती जनकात्मजा ॥ ४६ ॥
अभ्यधादनिमित्तेन व्याप्ता शोकेन लक्ष्मणम् ।
अकस्माद्धिपते चित्तं वामं स्फुरति लोचनम् ॥ ४७ ॥
औत्सुक्यं चाधिकं जातं पतिसन्दर्शने मम ।
शून्यां पश्यामि पृथिवीमरातिर्बाधते परम् ॥ ४८ ॥
सानुजस्य क्षितिपतेः स्वयं शंसन्ति देवताः ।
इत्युक्त्वा लक्ष्मणं सीता रजनीं गोमतीतटे ॥ ४९ ॥
अतिवाह्य पुनः प्रातः प्रतस्थे रथमाश्रितः ( ? ) ।
ततो गङ्गां समुत्तीर्य नावा कल्लोलमालिनीम् ॥ ५० ॥
परं पारं जनकजामवाप्तां लक्ष्मणोऽब्रवीत् ।
अहो ममातिकठिनं जीवितं वज्रनिर्मितम् ॥ ५१ ॥
धन्यास्ते निधनं येषां स्वाधीनं शोकविप्लवे ।
दृष्टनष्टाः प्रियजनाः सुखिनः स्वल्पजीवितैः ॥ ५२ ॥
न पश्यन्ति वियोगोऽग्रे यो दुर्विलसितं विधेः ।
अप्युत्क्रममात्रं प्राणेषु निपतत्येव यद्विषम् ॥ ५३ ॥
नृशंसक्रूर चरितं तदहं कर्त्तुमुद्यतः ।
इति ब्रुवाणं शोकाग्निसंतप्तं साश्रुलोचनम् ॥ ५४ ॥
पप्रच्छ भ्रातृशापेन त सीताशोककारणम् ।
अहो सुखपरिम्लानवदनो दैन्यधूसरः ॥ ५५ ॥
सोऽवदत्कृच्छ्रपतितः सीतामुत्कम्पिताशयाम् ।
धिङ्मां वचोविषं यस्य सर्पस्येव मुखाच्च्युतम् ॥ ५६ ॥
घोरां करोति तेमातर्दुःसहां हृदयव्यथाम् ।
मिथ्यापवादः सञ्जातः पुरे जनपदे तव ॥ ५७ ॥
मातश्छिन्दन्ति मर्माणि हृदये राघवस्य यः ।

गुणदोषविपर्यासविलासरसिकः सदा ॥ ५८ ॥
स्वच्छन्दवादी लोकोऽयं केन प्रत्याख्यते गिरा ।
परापवादे सततं स्वव्यापारपराङ्मुखः ॥ ५६ ॥
यथा जनोऽयं वदते न तथा गुणकीर्तने ।
तपोवनेऽस्मिन् वाल्मीकेर्मुनेर्मित्रस्य नः पितुः ॥ ६० ॥
जनापवादभीतेन त्यक्तासि जगती भुजा ॥
किमेतदिति निस्पन्दा विचिन्त्योवाच जानकी ।
अहो नु मम रामेण किं कृतं दुष्कृतं पुरा ॥ ६१ ॥
निर्दोषैर्यद्गुणोदारैर्धर्मदारैर्वियुज्यते ।
तदाज्ञां कुरु सौमित्रे त्यज मां दुःखभागिनीम् ॥ ६२ ॥
जीवितत्यागशापेन कथं वा योजयामि तम् ।
आर्यपुत्र क्व नु स्मेरकान्तं कमललोचनम् ॥ ६३ ॥
जनापवादभीरोस्ते द्रक्ष्यामि वदनं पुनः ।
हा नाथ त्वद्विहीनाहं कथं नु विजने वने ॥ ६४ ॥
करोमि करुणासिन्धो दारुणप्राणधारणम् ।
वपुर्मे भक्षतां सिंहयातुधानैरिदं वने ।
जनापवादशोकाग्निभाजनं न जनेश्वरः ॥ ६५ ॥
इति प्रलापिनीं सीतां बाष्पपूरप्लुतस्तनीम् ।
न शशाक परं वक्तुं सौमित्रिः शोकविक्लवः ॥ ६६ ॥
स तां प्रणम्य प्रययौ दुःखभारस्खलद्गतिः ।
परित्यज्य वने शून्ये सीतां धृतिमिवात्मनः ॥ ६७ ॥
शरीरशोषणं तीव्रं न कुर्युर्मुनयस्तपः ।
पर्यन्तविरसं सर्वं न स्यात्संसारिणां यदि ॥ ६८ ॥
स मुहुर्वलितग्रीवः सीतामेकां विलोकयन् ।
निनिन्द पातकस्पृष्टमिवात्मानं विनिश्वसन् ॥ ६६ ॥
दृक्पथादपयातेऽथ लक्ष्मणे जनकात्मजा ।
हा राघवेति चुक्रोश मूर्च्छिता निपपात च ॥ ७० ॥
चिरेण सञ्ज्ञामासाद्य सा चकार प्रलापिनी ।
निष्पन्दमीनमकरां सचिन्तामिव जाह्नवीम् ॥ ७१ ॥
शोचन्तीं भुवि विभ्रष्टविद्यां विद्याधरीमिव ।
तां दृष्ट्वा साश्रुनयनास्तापसा विस्मयं ययुः ॥ ७२ ॥
तामभ्येत्य कृपासिन्धुर्मुनिः शिष्यैर्निषेवितः ।
सुतामिव समाश्वास्य शनैर्वाल्मीकिरभ्यधात् ॥ ७३ ॥

पुत्रि जानामि निर्दोषा त्यक्ता त्वं रघुभूभुजा ।
तापस्यः पालयन्ति त्वां स्वाधीनोऽयं तवाश्रमः ॥ ७४ ॥
करुणार्द्रमनाः सीतामित्युक्त्वा भगवान्मुनिः ।
न्यवेशयत्तापसीभिः सान्त्व्यमाना तपोवने ॥ ७५ ॥
इति सीतापरित्यागः ।
व्रजन् रथेन सौमित्रिः शोकसन्तप्तमानसः ।
सुमन्त्रं नेत्रजं वारि वर्षन्मेघ इवाभ्यधात् ॥ ७६ ॥
दृष्ट्वा प्रवासदुःखस्य महतो धैर्यवारिधेः ।
आर्यस्य शोकनैराश्यादवार्योऽयं भविष्यति ॥ ७७ ॥
धिङ्मां निष्करुणं पापमार्यदुःखैकसाक्षिणम् ।
त्यक्ता सीता गिरा येन मया श्वभ्रादिवोज्झिता ॥ ७८ ॥
प्रियसंगमनैराश्यदुःसहव्यसनाकुलम् ।
स्वहस्तेनैव हत्वाहं प्रविश्यामि कथं पुरीम् ॥ ७९ ॥
अपुनःसंगमत्यागपरिभाषणनिष्ठुरः ।
सीतां कापालिको द्रष्टुं लक्ष्मणो नापरः क्षमः ॥ ८० ॥
नृशंसो मत्समः कोऽस्ति येन सीता विलोकिता ।
सहसा निष्प्रतीकारत्यागसम्भ्रमकातरा ॥ ८१ ॥
इति शोचन्तमसकृद्गाढानुशयमूर्च्छितम् ।
उवाच लक्ष्मणं धीमान् सुमन्त्रो मन्त्रिणां वरः ॥ ८२ ॥
देवस्य गतयश्चित्राः कालः सर्वङ्कशस्तदा ।
एवंविधैव भावानां पर्यन्ते विशरारुता ॥ ८३ ॥
भवितव्यमिदं सर्वं त्वत्पितुः पुरतो मया ।
उक्तं दुर्वाससा साक्षाद्वसिष्ठस्याश्रमे श्रुतम् ॥ ८४ ॥
इति सौमित्रिमाश्वास्य सुमन्त्रः कौशिकीतटे ।
निनाय नयतत्त्वज्ञस्तेनैव सहितः क्षपाम् ॥ ८५ ॥
अथान्यस्मिन् दिनस्यान्ते प्रविश्य विमनाः पुरीम् ।
विषार्त इव सौमित्रिर्भ्रातुर्मन्दिरमाविशत् ॥ ८६ ॥
स ददर्श प्रियाहीनं राघवं साश्रुलोचनम् ।
नीहारपटलस्पृष्टं भाविहीनमिवोडुपम् ॥ ८७ ॥
मुहुर्निरीक्षमाणं क्ष्मां सीताचारित्रसाक्षिणीम् ।
मिथ्यापवादसंतप्तं तं प्रविश्यानुजोऽवदत् ॥ ८८ ॥
देव सीता परित्यक्ता कानने तव शासनात् ।
मा शुचः सर्पकुटिलाः कालस्य गतयः किल ॥ ८९ ॥
...... ...... ...... ......

ततः समाययुः सर्वे मुनयो विनयावनेः ।
यज्ञारम्भे नरपतेर्ब्रह्मलोकाद्दिवो भुवः ॥ ६० ॥
उत्सृष्टे लक्ष्मणोदारे हये लक्ष्मणरक्षिते ।
आहूते सारगैर्दूतैः सुग्रीवे सविभीषणे ॥ ६१ ॥
रामशासनमानेन प्राप्तेष्वखिलराजसु ।
गोमत्यां नैमिषतटे कृते यज्ञनिवेशने ॥ ६२ ॥
तत्र हेममयी सीता कुशलैः शिल्पिभिः कृता ।
शुशुभे राघवप्रीत्या वनात्स्वयमिवागता ॥ ६३ ॥
तस्थौ शिष्यैर्वृतस्तत्र वाल्मीकिस्तेजसां निधिः ।
द्रष्टुं मुनिसभां प्राप्तः साक्षादिव प्रजापतिः ॥ ६४ ॥
मुनेस्तस्याज्ञया तत्र कुमारौ कान्तविग्रहौ ।
गन्धर्वाविव लोकेषु श्रवणामृतवर्षिणौ ॥ ६५ ॥
गातुं रामयशः प्राप्तौ कैलासादिव किन्नरौ ।
मूर्तौ पुष्पाकरस्येव मासौ षट्पदनादितौ ॥ ६६ ॥
वीणावेणुस्वनेनैव मीलितं मूर्छनाजुषा ।
कलकण्ठौ कुशलवौ रामायणमगायताम् ॥ ६७ ॥
उद्गीतश्रवणाश्चर्यविस्मयालोलमौलयः ।
क्षीवा इवाभवन् सर्वे पूर्णमानानना जनाः ॥ ६८ ॥
राघवः सानुजो भूयो मुनयः कपिराक्षसाः ।
चित्रन्यस्ता इव बभुः काव्ये गीते च विस्मिताः ॥ ६९ ॥
तौ वीक्ष्य विस्मयालोललोके सदसि सर्वतः ।
बभूवानन्दसंकल्पमयो जल्पः परस्परम् ॥ १०० ॥
अहो गीतमहो काव्यमहो रूपं कुमारयोः ।
न विद्मस्त्रिदिवे ब्रह्मभुवने वा ययोर्यथा ॥ १०१ ॥
रामस्य सदृशावेतौ दर्पणे बिम्बिताविव ।
जटावल्कलमात्रेण वैलक्षण्यमुपागतौ ॥ १०२ ॥
रामस्य तनयावेव यदि विद्याधराविमौ ।
तत्किं विद्याधरोत्सङ्गे श्रुतोऽस्माभिर्न भूपतेः ॥ १०३ ॥
इति तेषां कथयतां रामस्य चरितं सदा ।
कर्मान्तरेषु यज्ञेषु सर्गबन्धमगायताम् ॥ १०४ ॥
न तौ जगृहतुर्दत्तं बहु हेम महीभुजा ।
धने पतति न स्निग्धा दृष्टिरुन्नतजन्मनाम् ॥ १०५ ॥
केनेदं विहितं काव्यमिति पृष्टौ महीभुजा ।
वाल्मीकिना कृतमिति प्रणतौ तौ तमूचतुः ॥ १०६ ॥

ततस्तौ तनयौ ज्ञात्वा चक्षुषा हृदयेन च ।
राघवः साश्रुनयनः प्रोवाच दयितां स्मरन् ॥ १०७ ॥
हनुमत्प्रमुखाः सर्वे वाल्मीकिं तपसां निधिम् ।
विज्ञापयन्तु वचसा मम निर्घृणचेतसः ॥ १०८ ॥
निर्दोषां भगवञ्जाने जानकीं जनसंभवात् ।
अपवादान्मया त्यक्ता कीर्तिलुब्धेन केवलम् ॥ १०९ ॥
सा ते सदसि पूर्णेऽस्मिन्नेकीभूते जगन्मये ।
करोतु शपथं सीता प्रत्ययं यात्वयं जनः ॥ ११० ॥
वचनं राघवस्यैतद्वाल्मीकेस्ते न्यवेदयन् ।
वाल्मीकिरपि तत्सर्वं तथेति प्रत्यपद्यत ॥ १११ ॥
ततः प्राप्ते मुनिमये व्याप्ते सदसि राजभिः ।
जानक्याः शपथं द्रष्टुमेकीभूतोऽभवज्जनः ॥ ११२ ॥
अदृश्यत ततः सीता सास्रा किञ्चिदधोमुखी ।
सरस्वतीव ब्रह्माणं वाल्मीकिमनुगामिनी ॥ ११३ ॥
ह्रिया मुहुः करोत्सृष्टकषायायतलोचना ।
दृष्ट्वा हेममयीं पत्नीमिव संजातमत्सरा ॥ ११४ ॥
पूज्यमाना मुनिवरैरिक्ष्वाकुकुलपावनी ।
भूभृत्समागमे तस्मिन् गङ्गेवाकुलतां गता ॥ ११५ ॥
ततो हालाहलाशब्दस्तां दृष्ट्वा सास्रलोचनाम् ।
बभूव सर्वभूतानां साधुवादपुरस्सरः ॥ ११६ ॥
जनमध्यमथासाद्य वाल्मीकिरवदन्मुनिः ।
इयं सीता सती राम प्रत्ययं गन्तुमागता ॥
नभस्तटीव पङ्केन लिप्ता वितथवादिभिः ॥ ११७ ॥
यदि राम महीपाल मुनयो मुनयो वयम् ।
असत्यं यदि नास्मासु तत्सीता शीलशालिनी ॥ ११८ ॥
इमौ ते तनयौ राम कामपुष्पकराविव ।
मनस्तत्रैव नेत्रे च वयं धर्मश्च साक्षिणः ॥ ११९ ॥
इत्युक्ते मुनिना तत्र कृतासनपरिग्रहे ।
देवगन्धर्वसिद्धानां बभूव गगने रवः ॥ १२० ॥
ततो जगाद काकुत्स्थः शृण्वतां सर्वदेहिनाम् ।
जानाम्यपापां वैदेहीं जानामि यमजौ सुतौ ॥ १२१ ॥
न ममाप्रत्ययो देव्या मनोवृत्तिरिवात्मनः ।
करोतु शपथं सीता जनवादः प्रमृज्यताम् ॥ १२२ ॥
कुले जन्म यशः शुभ्रं कुलमानोन्नतं मनः ।

अपवादभयान्नित्यं हृदये शोकशङ्कवः ॥ १२३ ॥
इत्युक्ते रघुनाथेन जानकी रचिताञ्जलिः ।
उवाचाधोमुखी हर्षं वीक्ष्यमाणेव हारितम् ॥ १२४ ॥
यथा मे राघवादन्यो न संकल्पेन दैवतम् ।
तेन सत्येन विवरं भूतधात्री ददातु भूः ॥ १२५ ॥
इत्युक्ते रघुनाथस्य पत्न्या तूर्णं महीतलात् ।
उदतिष्ठद्धृतं मूर्ध्ना भुजगैः काञ्चनासनम् ॥ १२६ ॥
उपविष्टा ततस्तस्मिन् वसुधा सर्वसाक्षिणी ।
आदाय पाणिना सीतां पातालमविशत्पुनः ॥ १२७ ॥
अदर्शनं प्रयातायां तस्यां सर्वे सभास्थिताः ।
बभूवुर्मोहविवशाः पुष्पवृष्टिः पपात च ॥ १२८ ॥

इति वसुधाप्रवेशः ।

अथ दुःखाग्निसंतप्तः काकुत्स्थः साश्रुलोचनः ।
शून्यं जगन्मन्यमानस्तनुहीन इवाभवत् ॥ १२९ ॥
स कोपादवदद्देवी मही सीतां प्रयच्छतु ।
श्वश्रूर्ममैषा न रुषा जीवितं हन्तुमर्हति ॥ १३० ॥
ममापि विवरं भूमिर्ददातु दयितार्थिनः ।
पत्नीं वा भूमिरहितं करोमि जगदन्यथा ॥ १३१ ॥
इत्युक्त्वा धनुषि क्रोधाद्बाणेषु च ददौ दृशम् ।
वसुधाभेदसंनद्धं ब्रह्मा तमवदद्दिवः ॥ १३२ ॥
न कर्तुमर्हसि वृथा संतापं रघुनन्दन ।
भावं स्मरस्व वक्तुं मे न युक्तं जनसन्निधौ ॥ १३३ ॥
इत्युक्त्वान्तर्हिते व्योम्नि सह देवैः प्रजासृजि ।
भूतलादुद्गता वाणी प्रोच्चचाराशरीरिणी ॥ १३४ ॥
श्रमं मिथ्यैव काकुत्स्थ मा कृथा मैथिलीकृते ।
आयासः केवलं मुष्ट्या गगनग्रहणग्रहः ॥ १३५ ॥
सा पितॄणां स्वधा नित्यं सुधातृप्तिर्दिवौकसाम् ।
विष्णोर्वक्षसि सा लक्ष्मीः सिद्धानां मूर्ध्नि सा स्थिता ॥ १३६ ॥
तद्दर्शनरसः कोऽपि यदि ते न निवर्तते ।
तदेतौ तद्वपुर्जातौ पुत्रौ पश्यामृतोपमौ ॥ १३७ ॥
एतदाकर्ण्य नृपतिर्वीरः संस्तभ्य विक्रमम् ।
पुत्रौ गृहीत्वा यज्ञान्ते हेमपूर्णां महीं ददौ ॥ १३८ ॥
पुनर्यज्ञशतैरिष्ट्वा दत्त्वा च विपुलं वसु ।
प्रशान्तोपप्लवे राज्ये स रराज जनेश्वरः ॥ इत्यश्वमेधः ।

# कुन्दमालापद्यानामकाराद्यनुक्रमणिका.

1486





